यथा चित्रगिरेः पार्श्वे कूटशैलोऽस्ति दुर्गमः । तस्योपरि महादुर्गं कारयाभङ्गुरोद्यमः ॥ ५९
मन्त्रिणाऽपि तथारब्धे यावच्चेचीयते दिवा । तावन्निपतति रात्रौ षण्मासा इति जज्ञिरे ॥ १६०
तथाप्यभङ्गुरोत्साहं नृपं कूटाचलाधिपः । उवाच माक्राम्य (?) दुर्गमत्र कर्तुं न कोऽप्यलम् ॥ ६१
प्राणात्ययेऽपि कर्ताऽस्मि नृपेणोक्ते सुरोऽब्रवीत् । यद्येवं निश्चयस्तर्हि कुरु चित्रनगोपरि ॥ ६२
दुर्गस्य नाम मध्ये तु देयं मे नाम भूपते ! । ततश्चित्राङ्गदश्चक्रे दुर्गं चित्रनगोपरि ॥ ६३
चित्र-कूटेति दत्ताख्यं देवेन तदधिष्ठितम् । कोटीध्वजानां यन्मध्ये सहस्राणि चतुर्दश ॥ ६४
लक्षेश्वराणां योग्या च कारिता तलहट्टिका । वापीकूपसरोमुख्यं शेषं देवेन निर्मितम् ॥ ६५

§९. इतश्च स्वर्णपुरुषं सिद्धं चित्राङ्गदस्य तम् । ग्रहीतुं कन्यकुब्जेशः शाम्भलीशानृपो बली ॥ ६६
अरोत्सीद् दुर्गमागत्य ततश्चित्राङ्गदोऽपि हि । नियन्त्रितपुरद्वारो तस्थावुपरि निर्भयः ॥ ६७
चारा कौशिकवेषेण सर्पैः कतिपयैः पुरम् । प्रविश्य शुश्रुवुर्वार्ता गृहे शुल्काधिकारिणः ॥ ६८
गवाक्षस्था मन्त्रिपुत्री लालयन्ती सुतं निजम् । भाषते तात ! किं नैते मुच्यन्ते वणिजारकाः ॥ ६९
हसित्वा तत्पिताहैते न वत्से ! वणिजारकाः । शाम्भलीशाचमूरेषाऽवात्सीद् दुर्गजिघृक्षया ॥ १७०
वत्से ! जन्म यदा तेऽभूत् तदेदं सैन्यमागतम् । त्वमूढा पुत्रवती वत्से ! जाता चैतत् तथैव तु ॥ ७१
तच्छ्रुत्वा शाम्भलीशोऽपि ससैन्यो दुर्गगोपुरे । प्रोक्तो गवाक्षस्थकर्करीवेश्यया यतः ॥ ७२

गंडूपदः किमधिरोहति मेरुशृङ्गं किंवा रवेरजगरो निरुणद्धि मार्गम् ।
शक्येषु वस्तुषु बुधाः श्रममारभन्ते दुर्गग्रहग्रहिलतां त्यज शाम्भलीश ! ॥ ७३

अथापसृत्य राज्ञाऽपि प्रेषिता गूढपूरुषाः । समर्प्य प्राभृतं तस्याः प्रोचुः स्वामिनि ! नः प्रभुः ॥ ७४
जित्वा चित्राङ्गदं दुर्गं जिघृक्षुस्त्वत्प्रसादतः । तत् प्रसीदादिशोपायं साऽपि हृष्टा जगाद तान् ॥ ७५
सर्वाः प्रतोलीरुद्घाट्य पूरितार्थिमनोरथः । भुङ्क्ते चित्राङ्गदो नित्यमागन्तव्यं तदा त्वया ॥ ७६
विधूनोमि गवाक्षस्था यदा केशानहं तदा । ज्ञेया भोजनवेलाऽथ तं ज्ञात्वा शाम्भलीशकः ॥ ७७
कर्करीगणिकाभेदात् द्वितीये जगृहेऽह्नि तम् । दुर्गतश्च चित्राङ्गदो गृहीत्वा स्वर्णपूरुषम् ॥ ७८
क्षीरकूपे ददौ झम्पां तच्छ्रुत्वा शाम्भलीश्वराट् । क्षीरकूपाजलं कृष्ट्वा दृष्ट्वा तं स्वर्णपूरुषम् ॥ ७९
यावत् कर्षयते तावत् पुनः पूर्णः स कूपकः । विलक्षः सोऽथ चित्राङ्गसुतं वाराहगुप्तकम् ॥ १८०
संस्थाप्य च स्वे राज्ये कन्यकुब्जं पुनर्गतः । स्वमार्योग्रेऽपठद्दुर्गं (?) भद्रो वादीश्वरोऽन्यदा ॥ ८१
'चित्रकूटमिदं भद्रे ! पृथिव्यामेकलोचनम् । द्वितीयलोचनस्यार्थे तपस्तपति मेदिनी ॥' ८२
कुमारः सपरीवारस्तच्छ्रुत्वाऽऽरुह्य तं नगम् । विस्मितः सर्वतो वीक्ष्य दिशागान् संजगाद च ॥ ८३

शैलाः सर्वे गण्डशैलानुकाराः वृद्धा ग्रामाः क्षामधामोपमानाः ।
कुल्यातुल्याः प्रौढसिन्धुप्रवाहाः संदृश्यन्ते दूरतोऽस्माधिरूढैः ॥ ८४

§१०. ततस्तदासीत्सारेकण्ठ...पुञ्जकुरुपत्याने 'भूतानां ... दीक्ष्य ...मागन्...स्त्रियः ॥' ८५
पप्रच्छ कश्चित् किं चूता दृश्यन्ते गणनातिगाः । सोऽप्यूचे न करोऽस्त्यस्ति चूतानां तद् घना अमी ॥ ८६
राज्येऽहमपि चूतानां करं मोक्ष्ये स्वनीवृति । विचिन्त्येति कुमारोऽगात् कार्सीं निर्धनवेषभृत् ॥ ८७
भ्रमन्नेकेन वणिजा वस्त्राद्यैः सत्कृतः कृती । द्वितीयेऽह्नि लुण्ट्यमानं तद्गृहं वीक्ष्य दुःखितः ॥ ८८
कंचित् पप्रच्छ किमिदं सोचेऽद्यापुत्रको वणिक् । मृतोऽसौ तद्गृहं तेन लुण्ट्यते राजपूरुषैः ॥ ८९
कुमारोऽचिन्तयदसौ धिग् ! राज्यं यदपुत्रिणाम् । म्लेच्छानामिव सर्वस्वं राजा गृह्णाति पुत्रवत् ॥ १९०

राज्ये नाहं ग्रहीष्यामि स्वदेशे स्वमपुत्रिणाम् । प्रतिज्ञायेति **कुमारो** गतः पाटलीपुत्रके ॥ ९१
ततो **राजगृहे** याते वीक्ष्य **वैभारपर्वतम्** । श्रुत्वा समवसरणस्थानान्येष विसिष्मये ॥ ९२
**नवद्वीपक**देशेषु गत्वाऽजयपुरं ययौ । ततोऽपि **कामरूपे**ऽगात् **कामाक्षे**क्षणकौतुकी ॥ ९३
ततोऽगात् तत्र यत्रास्ति सर्परूपेण भूपतिः । भौतिकं दैविकं चापि यद्राज्ये न भयं भवेत् ॥ ९४
**कुमारो**ऽगाच्चर्मकारवालचंडापणेऽन्यदा । उपानदर्थं तेनापि सादरं पूर्वनिर्म्मितम् ॥ ९५
प्रधानमुपानद्युग्मं **कुमारः** परिधापितः । एतन्मूल्यं न मेऽस्त्यूचे, चर्मकारस्ततोऽवदत् ॥ ९६
उपानद्युगलमेतत् युज्यते तव पादयोः । मूल्येनालं तव स्वामिन् ! मङ्गलीके मया कृतम् ॥ ९७
हृष्टस्तच्छुभवाक्येन शुश्राव **कुमर**स्तदा । **पत्तने** पादुकाराज्यं मरणात् **सिद्धभूभृतः** ॥ ९८
**कुमारपाल**भूपालं शृणोपि **पत्तने** यदा । शीघ्रमेयास्तदामन्त्र्य मोचिकं **कुमर**स्ततः ॥ ९९
**उज्जयिन्यां** सानुचरो गत्वाऽखण्डप्रयाणकैः । **कत्तालीसिद्धपुरे**ऽगाछात्वाशेपकुटुम्बकम् ॥ २००

§११. तत्र पूर्वप्रतिपन्नमातुलस्य द्विजन्मनः । गृहे मुक्त्वा स्वकुटुम्बं एकाकी **पत्तने** ययौ ॥ २०१
गत्वाऽऽवासे **कृष्णभटदेव**स्य भगिनीपतेः । रात्रौ ननाम **कुमरो** भगिनीं **प्रेमलदेवि**काम् ॥ २०२
भ्रातेति प्रत्यभिज्ञाय तयापि स्नापितः स्वयम् । स्नाननीरे वीक्ष्य स्नातां दुर्गां शाकुनिकोऽवदत् ॥ २०३
सप्ताहान्तं भवान् राजा प्रमाणं शकुनो यदि । तदाकर्ण्य भगिन्यापि विज्ञप्तं पत्युरात्मनः ॥ २०४
मण्डलेशः **कृष्णदेवः कुमारं** परिरभ्य तम् । तवैव राज्यं नान्यस्य मा विषीदेत्युवाच सः ॥ २०५
**महीतटदेशाधीशं विजयपालराणकम्** । मित्रमाकार्य **कृष्णेन** पर्यालोचः कृतस्ततः ॥ २०६
अग्रे प्रधानैश्चौलुक्यौ द्वौ स्तो राज्यार्थमाहुतौ । **महीपाल-रत्नपालौ** राज्यं त्वस्यैव मे मतिः ॥ २०७
द्वितीयेऽह्नि प्रधानानां ज्ञापयित्वेति तौ ततः । आजुहावतुः **कुमारं श्रीजयसिंहमेरुके** ॥ २०८
ततः प्रधानैः सम्भूय पूर्वं राज्यार्थमाहूतः । **महीपाल**स्तान् नत्वाऽऽह दत्तादेशं करोमि किम् ? ॥ २०९
तं विसृज्य **रत्नपाल**स्तैराहूतो महेश्वरम् । प्रणम्य सचिवादींश्च प्राञ्जलिः प्राह पूर्ववत् ॥ २१०
विसृष्टः सोऽप्यथाहूतः **कुमारपाल** ईश्वरम् । नत्वा सहेलमावर्ज्योत्तरीयाञ्चलस्थयम् ॥ ११
तानाह्वास्ताभिषेकाय मृगेन्द्रासनमाश्रितः । ततः **कृष्णा**दिभिः प्रोचे परामर्शं विमुच्य भोः ! ॥ १२
अत्रार्थे मा विलम्बध्वं कार्यं चेज्जीवितेन वः । तद्गीतैस्तैस्तथा चक्रे **कुमारगुण**रञ्जितैः ॥ १३
मौक्तिकसेतिका क्षिप्ता तच्छीर्षेऽभूत् सपल्लिका । **कृष्णभटदेव**मुख्यैस्ततो राजेत्यसौ नतः ॥ १४
श्री**कुमारपालदेवो** वेष्टितो मण्डलेश्वरैः । पट्टहस्तिसमारूढो मेघाडम्बरमण्डितः ॥ १५
चामरैर्वीज्यमानस्तु गृह्णन् पौरजनाशिषः । प्रतीच्छन् पौरजनानाशु राजप्रासादमासदत् ॥ १६
कृतोपकारानाकार्य सर्वान् सर्वहितस्ततः । कृतज्ञः कृतवान् राजा तेषां पूजां यथोचितम् ॥ १७
सहकारकरो मुक्तस्त्यक्तं च रुदतीधनम् । व्यसनानि निषिद्धानि सप्त देशेषु सप्तसु ॥ १८
वधो निषिद्धो वर्षाणि द्वादशाखिलदेहिनाम् । विश्वंभरा तेन तेने जैनप्रासादमण्डिता ॥ १९
स कौबेरीमातुरुष्कं पूर्वामात्रिदशापगाम् । याम्यामाविन्ध्यमावार्द्धि पश्चिमां साध्वसाधयत् ॥ २२०

**कुमारपालदेव**स्य किमेकं वर्ण्यते क्षितौ ।
जिनेन्द्रधर्ममाराध्य माहेन्द्रं यो दिवं ययौ ॥ २२१

॥ इति श्री**कुमारपालचरितं** समाप्तम् ॥ छ ॥

# मूलादर्शे लिखिताः परिशिष्टरूपाः कति श्लोकाः ।

येषां कम्पितमन्तरात्ममिरपि श्रुत्वा तयोः सङ्गतं,
एवं गूर्जरराज कौतुकमिदं चेतः समुत्कण्ठते ।
उद्योगे भवतश्चलद्गजघटासङ्घट्टभाराकुल-
ब्रश्यद्भूवलये महीतलभुजां किं किं करिष्यन्ति ते ॥ १

भूयः किंचन काश्यपीपत्र ! भव श्रोतुं क्षणं सोद्यमः,
केयं त्वय्यपि राज्ञि निर्मलकले चन्द्रस्य राजश्रुतिः ।
शान्तं शान्तमयो सितैर्गुणशतैरेकास्तु भाषानिशं,
युष्मद्वंशनिवेशकारणमिदं चन्द्रो ननु श्रीपदम् ॥ २

काई कामु न होइ याहि परही रूपातिरेकार्पितं,
जाते ताहि कुतस्तनुर्निमयनश्रुद्याह्रयच्छिर्जेडि ।
इन्द्रोऽप्येष कि होइ ताहि विलसच्चक्षुःसहस्रं वपुः,
जाणं...रि कुमारपालनृपतिर्मूर्तो नयः क्ष्मातले ॥ ३

शीतांशुर्वपुभारसम्भृतरसं स्वं मण्डलं खण्डशः,
क्षीणं वीक्ष्य यत प्रतापवसते पादाश्रितो यद्भवेत् ।
तेनैवोपनयेन पुष्पिटनापात्रं पुनः स्यादसौ,
साध्यं किमि(म)दिनस्य किन्तु कमलोल्लासैकहेतोः स्वयम् ॥ ४

अप्येकाङ्गपरिग्रहस्य भवतः सप्ताङ्गराज्यश्रिया,
श्रुत्वा कर्षणकेलिकौशलकलापीठक्रमं विक्रमम् ।
क्षोणीपाल कुमारपाल ! जलधिमध्ये निलीनो हरिः,
स्वां लक्ष्मीं भुजवज्रपञ्जरगतां धत्ते भयव्याकुलः ॥ ५

एकह पाली माटि वीसलसउ झगडउ कियउ ।
कुमरपाल रणहाटि बीजी वार कु वहुरिसइ ॥ —वीसलमारणे । ६

कुमरपाल म चिंति करि चिंतिउ किं पि न होइ ।
जिणि तउं रज्जि थप्पिउ चिंत करेसइ सोइ ॥ —चाहडागमे । ७



श्रीसोमतिलकसूरिविरचितं

# कुमारपालदेवचरितम् ।

॥ नमः श्रीवीतरागाय[1] ॥

अत्र[2] श्रीकुमारपालदेवचरित्रं व्याक्रियते ।—

प्रपालयन्तोऽपि कलौ धरित्रीं स्वमज्जका एव परे[3] नरेन्द्राः ।
कुमारपालः परमार्हतस्तु लोकं तथा स्वं च समुद्दधार ॥ १

तथा हि—

§ १. स्वस्ति[4] श्रीगौर्जरो देशो न लेशो यत्र पाप्मनाम् । पुरं सुरपुरप्रायं तत्राऽणहिल्लपत्तनम् ॥ २
बभूव भूपतिर्भीमदेवो भीमपराक्रमः । आतपत्रायितं मूर्ध्नि यद्यशश्चन्द्रमण्डलम् ॥ ३
विमातृजौ क्षेमराज-कर्णदेवौ तदङ्गजौ । मिथः प्रीतिपरीणद्धौ दस्राविव बभूवतुः ॥ ४
भीमे दिवंगते क्षेमराजो राज्यक्षमो[पि] हि । पित्रादेशात् प्रीतितश्च कर्णं राज्ये न्यवीविशत् ॥ ५
राज्यं पालयतस्तस्य नीत्या कर्णमहीपतेः । जातोऽङ्गजो जयसिंहदेवनामा विविक्तधीः ॥ ६
श्रीकर्णे द्युगते दैवाद् बालकोऽपि स एव हि । अभ्यषिच्यत[5] सामन्तैर्बलीयान् पुण्यवैभवः ॥ ७
वशीकृत्य चतुःसिन्धुसमर्यादां वसुन्धराम् । सिद्धबर्बरकः सोऽभूत् सि द्ध रा ज इति श्रुतः ॥ ८
सिद्धराजः श्रीहेमसूरीनभ्यर्थ्य सादरम् । श्रीसिद्धहेमचन्द्राख्यं शब्दशास्त्रमचीकरत् ॥ ९

इतश्च—

§ २. देवप्रसाद[6] इत्यासीत् क्षेमराजस्य नन्दनः । तत्सुतश्च त्रिभुवनपालदेवः[7] प्रजाहितः ॥ १०
त्रयोऽभूवन् सुतास्तस्य प्रशस्तगुणसम्पदः । आद्यः कुमारपालोऽभूत् सार्वभौमगुणालयः ॥ ११
महीपाल-कीर्तिपालौ जातौ तस्यानुजावुभौ । पदक्रमाविव स्पष्टं वेदवाक्यस्य संहती ॥ १२
भार्या भोपलदेवीति[8] भगिनी प्रेमलदेव्यभूत् । श्रीकृष्णभटदेवेन योदूढा मोढवासके[9] ॥ १३
अन्यदा सिद्धराजेन्द्रः पट्टे को भविता मम । दैवज्ञमिति पप्रच्छ सोऽपि ज्ञात्वेदमब्रवीत् ॥ १४
ग्रामे दधिस्थलीनाम्नि यस्ते भ्रातृव्यनन्दनः । समृद्धमपि ते राज्यं तदायत्तं भविष्यति ॥ १५
तं हत्वाऽपि करिष्यामि निजराज्यं स्वपुत्रसात् । इति श्रीसिद्धभूपालः पुत्रप्राप्तिकुतूहली ॥ १६
पादचारेण कापोतीमुद्वहन् स्कन्धयोर्द्वयोः । प्रभासतीर्थे सद्भक्त्या सोमनाथमयाचयत्[10] ॥ १७
उक्तं सोमेश्वरेणापि पर्याप्तं पुत्रकाम्यया । सृष्टः कुमारपालोऽस्ति मया राज्यधरः पुरा ॥ १८
जीवत्यमुष्मिन्नो पुत्रसंपत्तिर्भविता[11] मम । चिन्तयन्निति भूपालो विषण्णः प्राप पत्तनम् ॥ १९
रहस्यं मन्त्रिणोऽप्योचत् सोऽप्याख्यद् देव ! युज्यते । विजेतुं मालवान् यूयं यदा पूर्वमुपस्थिताः ॥ २०
रुद्धे बुद्धिल्लिकाघट्टे यशोवर्म्ममहीभृता । राज्यं न्यस्य त्रिभुवनपालेऽद्यमपि तत्क्षणात् ॥ २१

---

1 B ॐ नमो वीतरागाय । 2 B अत्र च । 3 B परे । 4 B अस्ति । 5 A अभिषिच्यत् । 6 B देवप्रसाद° ।
7 B °पालः देवः । 8 A भावलदेवी° । 9 B मोडवासके । 10 A °मयाचयत् । 11 B भवदा ।

युष्माकमाज्ञया युष्मत्समीपमुपतस्थिवान् । वशीकृतमिदं राज्यं तेनास्मिन्नन्तरे तव ॥ २२
लभ्यायातेऽपि निर्जित्य शत्रून् स किल मापते । सिद्धराजं निहत्याद् दासे राज्यं स्वसूनवे ॥ २३
विज्ञिप्त्येति वचः क्रुद्धो नृपस्त्रिभुवनाभिधम् । घातकैर्घातयामास द्वेष्येष्वपि जिघांसुधी ॥ २४
ततः कुमारपालोऽपि प्रेष्यावन्त्यां कुटुम्बकम् । भार्यां मुक्त्वा दधिस्थल्यां स्वयं पत्तनमभ्यगात् ॥ २५
स्थित(त ?) जटाधरीभूय मठे त्रिपुरुषाभिधे । तं ज्ञात्वा सिद्धभूपोऽपि क्षयाहे कर्णभूपतेः ॥ २६
द्वात्रिंशता जटाभृद्भिः सार्धं गेहे निमन्त्र्य च । प्रत्येकं क्षालयामास तेषां पादौ नृपः स्वयम् ॥ २७
विलोक्य राजचिह्नानि कुमारपालपादयोः । गूढाकारेङ्गितो राजा वरभोज्यैरभोजयत् ॥ २८
वधोपायचिकीर्षोतोत्तरीयाहरणच्छलात् । यावत् कोशगृहेऽगच्छत् कुमारोऽपि हि तावता ॥ २९
आदाय कुण्डिकां पाणौ वातिव्याजेन तत्क्षणम् । निर्गत्य सौधतोऽचालीद् ग्रामं प्रति दधिस्थलीम् ॥ ३०
तमदृष्ट्वा नरेन्द्रोऽपि प्रनिघाय चमू रयात् । तामासन्नां विभाव्योचे हालिकं रक्ष मामिति ॥ ३१
आच्छाद्य कण्टकैः सोऽपि ररक्ष क्षणमात्रतः । गुणाय खलु कल्पन्ते कण्टका अपि कर्हिचित् ॥ ३२
इतस्ततः परिभ्रम्य नृपसैन्यं न्यवर्तत । पुण्येषु जागरूकेषु जात्यन्धाः खलु शत्रवः ॥ ३३
कुमारोऽपि विनिर्गत्य दृष्ट्वोत्कट्य जटाः । सज्जनेन समं सार्धं गत्वा ग्रामं दधिस्थलीम् ॥ ३४
नृपोऽपि पत्तनात् नष्टो भाण्डान्तर्विनिवेशनात् । सज्जनेन कुलालेन रक्षितो योगिरूपभाक् ॥ ३५
तथैव बहुरूपेण गतः ग्रामे वटोद्भवे । दधिभाण्डेषु रक्षित्वा वोसरिर्मित्रतामगात् ॥ ३६
सार्द्धं कुलाल-विप्राभ्यां सुहृद्भ्यामेकदा पुनः । समगस्त कुटुम्बस्य राज्योपायचिकीर्षया ॥ ३७
सज्जनेन कुलालेन विप्रवोसरिणा च सः । सार्धं मन्त्रयते यावत् देशान्तरविधित्सया ॥ ३८
तावत् तन्मन्त्रणोद्विग्नौ पितरावूचतुस्तराम् । किमनुतस्तत्पुत्रस्य नामवज्राग्रतो मुधा ॥ ३९
यद्वा राज्ये कुमारस्य वोसरे ! एवनीकृतम् । लप्स्यसे सज्जन ! त्वं च चित्रकूटस्य पट्टिकाम् ॥ ४०
श्रुत्वेति शकुनग्रन्थिं बध्वा च नृपनन्दनः । सार्धं वोसरिणाऽचालीद् देशान्तरदिदृक्षया ॥ ४१
स्थितौ करोटकग्रामे प्रथमेऽह्नि बुभुक्षितौ । आच्छदल्या पुनः प्राप्तौ यामयुग्मे परेद्यवि ॥ ४२
कुमारपालः प्राह स्म भोजनं कथमद्य भो ! । अस्ति मे शाश्वती माता भिक्षेत्यारयाय वोसरिः ॥ ४३
प्रविश्य ग्राममादाय भिक्षां प्राप्तस्तदन्तिके । भस्मभाण्डं निकुत्य भिक्षाकुण्डीमदर्शयत् ॥ ४४
भोजनान्ते क्षणं सुप्तो वोसरिर्मित्रवत्सलः । करम्भं बुभुजे यावदेकाकी पूर्वमुत्थितः ॥ ४५
अल्पनिद्रः कुमारोऽपि तत् तथा वीक्ष्य चक्रुपे । अहो ! विप्रस्य सर्वेषां भोजनस्पृहयालुता ॥ ४६
विप्रोऽपि भोजनं जीर्णं कुमार प्राह भुज्यताम् । किमेकाकी पुरो भोक्षीरिति पृष्टः पुनर्जगौ ॥ ४७
उक्तमिभ्यस्त्रिया मेऽद्य भिक्षां कर्तुमुपेयुषः । स्थितमस्थगितद्वारं भक्ष्यभाण्डमिदं निशि ॥ ४८
ममात्राद्दूषणं भद्र ! शङ्कता यदि वाञ्छसि । मेदं स्यादूषितं तेन प्रथमं भुक्तवान् स्वयम् ॥ ४९
यतः-'यस्याधारेण जीवन्ति शतानि स्वलु देहिनाम् ।
स एव यातनाशोऽपि रक्षणीयः प्रयत्नतः ॥' ५०
अतः परीक्षितमिदं युक्तं भोक्तुं तथैव हि । वभ्यनन्द कुमारोऽपि मित्र प्राणप्रियो भवान् ॥ ५१
ग्राममेनं तवैवाहं दास्ये राज्ये सति ध्रुवम् । ततो डांगुरिकग्रामे सम्प्राप्तः सुहृदा सह ॥ ५२
तत्र लक्ष्मश्रिया साध्व्या कृपयाऽभोजि मोदकैः । ग्रामेऽस्मात् पेटलापद्रे तयैवार्पितशम्बलः ॥ ५३

1 B राज्ये दास्ये । 2 B स्वसादे । 3 A °घातकैनो । 4 B कुमारपाल । 5 A बहुरूपेण । 6 A °मिनाप्नो । 7 A समागस्त । 8 A प्रथमुग्मे । 9 B °स्वल्पमाने । 10 B पूर्वं । 11 B पेटलापद्रे ।

तत्रेश्वराभिधानस्य वणिजो वाटिकान्तरे । प्रविष्टः पक्वमाकन्दफलवृन्दजिघृक्षया ॥ ५४
दृष्ट्वा[1] च वणिगुद्दाल्य पटीं प्रसभमग्रहीत् । न लेभे निःकृपात् तस्मात् पटीं चाटुशतैरपि ॥ ५५
अथाक्रान्तो विषादेन निषादेनेव सत्रपः । कुमारः स्तंभतीर्थेऽगात् पटीं[2] प्रावृत्य चोसरेः ॥ ५६
§ ३. तत्र श्रीपूर्णतल्लाख्यगच्छोदधिसितद्युतीन् । कुमारपालः श्रीहेमचन्द्रसूरीनवन्दत ॥ ५७
ज्ञानेन लक्षणैश्चापि विज्ञाय गुरवोऽपि हि । अनुगृह्याशिषं राज्यं शशंसुर्मितवत्सरैः ॥ ५८
अथोदयननामा स्वोपासको मन्त्रिसत्तमः । तदाऽभिवन्दितुं सूरीन् समियाय सुतैः सह ॥ ५९
ऊचिरे गुरवो मन्त्रिन् ! कालाद् विक्रमभूभुजः । वर्षैर्नवनवत्यग्रैरेकादशशतैर्गतैः ॥ ६०
मार्गशीर्षस्य कृष्णायां चतुर्थ्यां मेषगे विधौ । मीने[3] लग्ने कुमारस्य राज्यप्राप्तिर्भविष्यति ॥ ६१
सार्वभौमो ह्यसामान्यो भविता परमार्हतः । तद् ध्रुवं मान्य एवायं समयः खलु दुर्लभः ॥ ६२
यथास्वैरं कुमारोऽपि तिष्ठन्नुदयनालये । प्रेषितान् सिद्धराजेन तत्राश्रौषीच्च घातकान् ॥ ६३
ततो निर्गत्य पाथेयरहितो वटपद्रके । ग्रामे कचिद्देवकुलच्छायायां समुपाविशत् ॥ ६४
स्वबिलान्मूषकस्तत्र द्रम्ममेकमुपाहरत् । तं मुक्त्वा बहिरन्यं च प्रविश्य पुनरानयत् ॥ ६५
क्रमेण जाता द्वात्रिंशत् कृत्वैकं पुनरानने । बिलान्तः प्रविवेशाथ कुमारोऽपि व्यचिन्तयत् ॥ ६६
यथैष[4] बहिरानिन्ये तथाऽन्तरपि नेष्यति । पशूनां चेष्टितं यस्मात् कार्याकार्यबहिर्मुखम् ॥ ६७
पाथेयवर्जितोऽहं तद् द्रम्मान् मुञ्चे वृथा किमु । यदुक्तं पुरुषार्थेषु स्वार्थभ्रंशो हि मूर्खता ॥ ६८
इत्यादत्ते कुमारस्तान् यावत्तावत् स मूषकः । सत्वरं बहिरायातो नेक्षते द्रम्मपुंजिकाम् ॥ ६९
ततो दिङ्मूढवत् तत्र धत्तूरित इवाभ्रमत् । घातं घातं भुवः पृष्ठं खरवत् स लुलोठ च ॥ ७०
मूर्छित्वा पुनरुत्थाय भ्रान्त्वा[5] च परितो दिशः । मूषकः पञ्चतां प्राप बलीयान् मोहविभ्रमः ॥ ७१
भ्रमन्नुर्वीमविश्रान्तं भीतभीतो नृपाङ्गजः[6] । त्रिदिनक्षुधितः क्वापि ग्रामान्तरे प्रातरेकदा[7] ॥ ७२
मुत्कलाप्य वधूं किञ्चिदिभ्यपुत्रं निजे गृहे । गच्छन्तं मुक्तधौरेयं भोजनासीनमैक्षत ॥ —युग्मम् । ७३
जग्मुषे तत्र दीनाय[8] कुमाराय नवोढया । दत्तं भर्तुरपहुत्य करम्बं करुणाजुषा ॥ ७४
तृप्तस्ततो गतः क्वापि ग्रामेऽन्यस्मिन् [9] बुभुक्षितः । [10]कटुकाभिधानपेयस्य वणिजः श्रावदापणे ॥ ७५
विशोपकैकचणकान् गृहीत्वा बुभुजे स्वयम् । मूल्यं मार्गयते तस्मै खड्गमञ्जणकं[11] ददौ ॥ ७६
सदाचारं राजपुत्रं विमृश्य वणिगूचिवान् । आदत्स्व करवालं स्वं माङ्गल्ये चणकास्तव ॥ ७७
तामेवोपकृतिं तस्य मन्वानोऽवसरोचिताम् । जटीभूय स कन्नाली-सिद्धपुर्यामथागमत् ॥ ७८
सविताऽपि दिने क्षीणे पराश्रयमपेक्षते । इति सिद्धेश्वराचार्यां [12]नियुक्तस्तत्र तस्थिवान् ॥ ७९
एकदा मरुदेशीयं तत्र शाकुनिकं जगौ । कदाचित् पदवीप्राप्तिर्ममापि भविता किमु ॥ ८०
प्रातर्गतौ मिलित्वोभौ शकुनान्वेषणाय तौ । दुर्गां ददृशतुर्जैनचैत्योर्ध्वं शुभचेष्टिताम् ॥ ८१
श्यामा स्वरद्वयं चक्रे चैत्यसामलसारके । ऊर्ध्वं चटन्ती कलशे स्वरत्रयमुदाहरत् ॥ ८२
शान्तचेष्टा पुनर्दण्डे चक्रे स्वरचतुष्टयम् । शकुनज्ञोऽपि दृष्ट्वेति मुदितस्तमवोचत ॥ ८३
मनीषितादप्यधिका कार्यसिद्धिर्भविष्यति । जिनधर्मप्रभावात्तु विशेषप्रतिमा तव ॥ ८४
सन्तोष्य शकुनाभिज्ञं कुमारो मधुरोक्तिभिः । गत्वोज्जयिन्यामेकान्ते सङ्गमे स्वजनैः सह ॥ ८५
भीत्या श्रीसिद्धराजस्य क्वाप्यवस्थातुमक्षमः । सर्वार्थसिद्धियोगीन्द्रं गत्वा कोलापुरेऽभजत् ॥ ८६

1 B दृष्ट्वाथ । 2 B पटी । 3 B मीनलग्ने । 4 A यथेव । 5 B भ्रान्त्वं । 6 A भ्राम्यं च । 7 B नृपाङ्गजः । 8 B ग्रामान्तरे यदा । 9 B ग्रामेऽन्ये तत्र दीनाय । 10 B कुटुम्बा° । 11 B °मञ्जनकं । 12 B नियुक्त° ।

सद्भावभक्तितुष्टेन योगिनाऽभाणि राजसू । मत्पार्श्वे सिद्धमन्त्री त्वं स्वतन्त्रो निजकर्मसु ॥ ८७
एको राज्यप्रदः[1] किन्तु साधने सदुपद्रवः । द्वितीयो धनदाताऽस्ति स्वस्तिकृद् भाग्यशालिनाम् ॥ ८८
आदाय राज्यदं मन्त्रं कुमारः सत्त्वशेवधिः । निर्ममे[2] निर्मलस्वान्तः पूर्वसेवां यथोचिताम् ॥ ८९
ततः कृष्णचतुर्दश्यां गृहीत्वा तु कृपाणिकाः । श्मशानमुपादाय गतः पितृवनान्तरे ॥ ९०
षड्बिन्दुमण्डलमथ न्यस्य परासोर्हृदि[3] यावता । होमं ददाति तस्यैवोपविश्य च कटीतटे ॥ ९१
क्षेत्रपालः करालास्यः प्रत्यक्षीभूयावताऽवदत् । किमारब्धमनात्मज्ञ ! मामनभ्यर्च्य रे त्वया ? ॥ ९२
श्रुत्वापीत्थं स निःक्षोभः स्वविधेयमपूपुरत् । प्रत्यक्षाऽथ महालक्ष्मीस्तमुवाच कृतादरम् ॥ ९३
साम्राज्यं गूर्जरात्राया पञ्चभिर्वत्सरैस्तव । भविष्यतीत्यथादिश्य महालक्ष्मीस्तिरोदधे ॥ ९४
ततो दवीयसीं राज्यप्राप्तिं ज्ञात्वा नृपात्मजः । जातदेशान्तरालोककुतूहलनिविष्टधीः ॥ ९५
§४. समग्रपुरनिर्यासस्रष्टारैरिव[4] निर्मिताम् । कल्याणकटके देशे ययौ कान्तीं महापुरीम् ॥ ९६
तस्याः परिसरेऽनेकवैचित्र्यसुभगे[5] भ्रमन् । कबन्धं कस्यचित् पुंसोऽर्वीक्षाचक्रे[6] विमस्तकम् ॥ ९७
पुरस्थमवधीत् कश्चिदेनं चौरो[7] पलायितः । यद्वा विराधितः शत्रुः शिरोवर्जममुं व्यधात् ॥ ९८
विमृशन्निति तत्पार्श्वे कुमारो यावदागमत् । अन्योऽन्योक्तिमथाश्रौषीत् तत्र संगतयोषिताम् ॥ ९९
श्लाघ्य केशकलापोऽस्य कण्ठे वर्णदीर्घता । चारु कूर्चं सताम्बूलं मुखं विरलदन्तकम् ॥ १००
श्रुत्वेति विस्मितो राजसूनुः कथममूः स्त्रियः । कबन्धस्यास्य सत्केशवर्णादिव्यक्तिमापिकाः ॥ १०१
तत्पृष्टास्ता अपि प्रोचुश्चित्रं चेत् श्रूयतामिदं । पृष्ठे वेणीस्थलं[8] केशदैर्घ्यं व्यक्तीकरोति नः ॥ १०२
स्कन्धौ किणाङ्कितौ [9]लक्ष्मीकुण्डलश्रियम् । श्यामाभिगौरं वक्षोऽस्य श्मश्रुसघनतां वदेत् ॥ १०३
चूर्णेन चर्चितोऽङ्गुष्ठस्ताम्बूलं [10]ज्ञापयत्यलम् । विरलत्वं च दन्तानां ध्वनिरत्ता कनिष्ठिका ॥ १०४
ततः स मानी मन्वानो बहुरत्नां वसुन्धराम् । भ्राम्यन्नयो गतः क्वापि सरस्सुतसागरे ॥ १०५
स्नात्वा तत्र च तत्तीरे गते देवकुले क्वचित् । पूज्यमानं ददर्शोच्चैर्मस्तकं सविभूषणम् ॥ १०६
पृष्टाः पुराविदः[11] प्राहुः – "पुरेह प्रवरे[12]" नृप । मण्डितं पद्मिनीखण्डे सरोवरमखानयत् ॥ १०७
तत्र चाहर्निशं पद्मकोशान्निर्गत्य मस्तकम् । 'एकेन मुडती' त्युक्त्वा निमज्जन्तं स वीक्षते ॥ १०८
जाताश्चर्येण भूपेन पृष्टाः सर्वे विचक्षणाः । न च कश्चन[13] निर्णेतुं शशाक किमपि स्फुटम् ॥ १०९
अथाभाषिष्ट भूपालो विप्रान् शास्त्रोपजीविनः । षाण्मास्यन्तर्निर्णयस्य राज्यं वा त्यक्तता मम ॥ ११०
मोहादहंकारमात्सर्ये परायत्ततया ध्रुवम् । यकाऽपि नो मतिर्यूनां जायते दीर्घदर्शिनी ॥ ११
इति ते पण्डिताः[14] ज्ञात्वा स्थविरान् दर्शिनः पुनः । प्राहैषुश्चतुरो विप्रांस्तत् प्रष्टुं मरुमण्डले ॥ १२
गतास्ते तां भुवं वर्षे पष्ठ्यातिनान्तसम्भवम् । वाहयन्तं हलं [15]कञ्चिद् ददृशुः स्थविरं नरम् ॥ १३
यावता[16] प्रष्टुकामास्ते बाला इत्यालपन्ति तम् । स तावज्जनको मेऽस्ति पुरस्तादिति तान् जगौ ॥ १४
नूनं जीवन् पिताऽमुष्य भवितेति विमृश्य ते । विस्मिता [17]वृद्धसम्प्राप्तिमुदिताः पुरतो ययुः ॥ १५
[18]स्कन्धन्यस्तोरण [19]वर्षाणशीतिमतिगामुकम् । चारयन्तमजाः सर्वपलितं ददृशुर्नरम् ॥ १६
तात ! त्वामनुगच्छामः सशयानां परं हृदि । यावत् तमाहुः सोऽप्यूचे पुरस्तातोऽस्ति पृच्छ्यताम् ॥ १७
शतादुपरि वर्त्तेत[20] किमायुरिति वादिनः । प्रापाश्चित्रहृदः पर्णकुटीरकमथारऽदे ॥ १८

1 A राजप्रद । [illegible] B निर्ममे । 3 A हृत्पावर्क्तौ । 4 B °रैद । 5 B वैचित्र्यसमरो° । 6 B विचकर्षी । 7 A चौरं । 8 [illegible] °वेणीयल । 9 B लक्ष्मा । 10 B ज्ञापयत्यलक । 11 B प्रकरो । 12 B कथिन । 13 B पण्डिता । 14 B किंचित् । 15 B यकन्पघट्ट° । 16 A वृद्धि° । 17 B स्कन्धे । [illegible] A वर्षामतीति । 19 B वर्मेन ।

मुञ्जरज्जुं सज्जयन्तं वेष्टितं श्वानडिम्भकैः । पितामह ! इति प्रोचुस्तं दृष्ट्वा परमायुषम् ॥ १९
पप्रच्छुरथ तं सर्वोदन्तज्ञापनपूर्वकम् । 'एकेन मुडती'त्युक्त्वा शिरोनिर्गमकारणम् ॥ १२०
विदेश इत्यगणितशुद्रदोषानमूनथ । आभीरो मोजयामास दक्षिणेत्यपदेशतः[1] ॥ २१
ददौ च जातिवत्तेभ्यः श्वानडिम्भचतुष्टयम् । महामूल्यमिदं मार्गव्ययो वो येन शुद्ध्यति ॥ २२
ब्राह्मणा अपि लोभेन गृहीत्वा तानथार्भकान् । तदुच्छिष्टं पपुस्तक्रं वृद्धदाक्षिण्यबाधया ॥ २३
अथ कक्ष्यामुपादाय डिम्भांस्ते 'चलनाक्षमान् । प्रस्थिता निजदेशाय वृद्धेनानुगतास्ततः ॥ २४
कियन्तमपि पन्थानं सह गत्वा गरीयसि । व्यावर्तमाने तेऽप्यूचुः स सन्देहस्तथैव नः ॥ २५
वर्षीयानाह सन्देहापनोदायैव सर्वकम् । मया चेष्टितमेतावत् तत्र बुद्धं बुधैरहो ! ॥ २६
श्वानगर्दभचाण्डालमद्यभाण्डरजस्वलाः । स्पृष्ट्वा देवलकं चैव सचेलं स्नानमाचरेत् ॥ २७
न ज्ञानमेतद् [3]ज्ञातं चेत् किं स्पृष्टाः शुनका अमी । बहुमूल्यत्वलोभेनेत्युक्ते स पुनरभ्यधात् ॥ २८
वक्तुं भवत्सु विज्ञेषु युक्तैव खलु युज्यते । सर्वप्रसिद्धमेवेदं विश्वं मुडति लोभतः ॥ २९
इति ते तेन वृद्धेन छिन्नसन्देहमोदिनः । विदधुः पुस्तकारूढमर्थमेनं सविस्तरम् ॥ १३०
ततो [4]विज्ञापयामासुर्विज्ञाः सर्वं महीपतेः । तेनोचे सत्यमेवं चेन्न पुनर्निर्गमिष्यति ॥ ३१
तदर्थे श्राविते शीर्षे निवृत्तं मज्जनात् पुनः । प्रसिद्ध्यै स्थापितं चैत्ये कुमार ! तदिदं शिरः ॥' ३२
इत्यादिसारासारार्थविवेचनकुतूहली । योगीव भुवि बभ्राम कुमारो बहुवेषभृत् ॥ ३३

§ ५. देशे श्रीमल्लिनाथाख्ये गतः कोलम्बपत्तने । सोमनाथेन तत्रत्याधीशः स्वप्ने न्यगद्यत ॥ ३४
प्रातरेष्यति स्वामी भविष्यो गूर्जरावनेः । जटाधारी तदभ्यर्च्यो दुर्लभा तादृशा नराः ॥ ३५
तेनापि स्थापिताः सर्वदिक्षु तद्दर्शिनो नराः । उपलक्ष्य समानिन्ये नृपपर्षदि तैरपि ॥ ३६
निवेश्यार्द्धासने भूमिपालेनाऽपि स सादरम् । राज्यार्धमर्थयांचक्रे तदुक्त्वा शम्भुवाचिकम् ॥ ३७
निषिध्य राज्यं तत्रास्थात् कुमारोऽपि यथासुखम् । भूयोऽप्यभ्यर्थितः प्राह कीर्तनं मे विधापय ॥ ३८
दशगव्यूतविस्तारिवासे कोलम्बपत्तने । भूमिसङ्कोचतो राजा संक्षिप्य निजमन्दिरे[6] ॥ ३९
कुमारपालनामाङ्कं प्रवर्त्य वराणकम् । कुमारपालेश्वराख्यं चारु चैत्यमचीकरत् ॥ –युग्मम् । १४०

§ ६. कीर्त्या प्रकाशयन् विश्वं प्रतिष्ठानपुरं गतः । द्विपञ्चाशतो वीराणां स स्थानाश्चर्यमैक्षत ॥ ४१
पुनरुज्जयिनीं प्राप्य संगतोऽभिजनैर्निजैः[7] । अन्यदा तत्पुरोद्याने कुडङ्गेश्वरमासदत् ॥ ४२
व्याप्तं सप्तफणैर्लिङ्गं तन्मध्ये स प्रणम्य च । प्रशस्तिं वाचयंस्तत्र गाथामेनामवाचयत् ॥ ४३

पुन्ने वाससहस्से सयम्मि वरिसाण नवनवइ अहिए ।
होही कुमरनरिंदो तुह विक्कमराय ! सारिच्छो ॥ ४४

विमृश्य नामसादृश्यं वर्णानां चापि पूर्णताम् । अन्वयुङ्क्त तदर्थं स जैनान् सर्वज्ञपुत्रकान् ॥ ४५
पूर्वं प्रभावको जज्ञे सिद्धसेनो दिवाकरः । बुद्धिदर्पेण[8] सोऽध्याक्षीदन्यदा स्वगुरूनिति ॥ ४६
भवन्ति प्राकृता ग्रन्थाः पण्डितानां त्रपाकराः । प्राकृतं सर्वसिद्धान्तं संस्कृतं करवाण्यहम् ॥ ४७
प्रायश्चित्तं त्वया प्राप्तं वत्स ! पारांचिकाभिधम् । किं नामूवन् न श्रुता वा प्राचीनाः सर्ववेदिनः[9] ॥ ४८

बालस्त्रीमूढमूर्खाणां नृणां चारित्रकांक्षिणाम् ।
अनुग्रहार्थं तत्त्वज्ञैः सिद्धान्तः प्राकृतः कृतः ॥ ४९

---

1 A दक्षिणेत्युपदेशतः । 2 B चलना° । 3 B ज्ञानमेतद् ज्ञानं । 4 B विज्ञपया° । 5 B °गव्यूति° । 6 B °मंदिरे । 7 A ऽपि निजैर्जनैः । 8 A बुद्धिदर्पणः । 9 B सर्ववेदिनः ।

ततो द्वादशवर्षाणि प्रायश्चित्तेन तेन सः । अव्यक्तवेषो भ्रमितुं निर्जगाम स्वगच्छतः ॥ १५०
सप्तमत्रयमे वर्षे कुडङ्गेश्वरमागमत् । बहुशोऽपि जनैरुक्तो न शम्भुं प्रणनाम सः ॥ ५१
आगतो विक्रमादित्यो भूपतिस्तमदो वदत् । न किं सर्वजगत्पूज्यं शम्भुं नत्वा कृतार्थ्यसि ॥ ५२
स प्राह मत्प्रणामस्य भवेद्देवो न सासहिः । कथमित्यूचुषि क्ष्मापे स स्पष्टमपठन्मुनिः ॥ ५३

स्वयंभुवं भूतसहस्रनेत्रमनेकमेकाक्षरभावलिङ्गम् ।
अव्यक्तमव्याहतविश्वलोकमनादिमध्यान्तमपुण्यपापम् ॥ ५४

इत्यादि षोडशाधीते यावद्द्वात्रिंशिकास्म(म?)ताः[1] । पुस्फोट तावता लिङ्गं[2] सूर्यालीढमिवाम्बुजम् ॥ ५५
द्वात्रिंशिकासु पूर्णासु द्वात्रिंशति च तत्क्षणम् । उदययौ धरणाधीशः श्रीपार्श्वप्रतिमाकरः ॥ ५६
विभाव्यातिशयं दृष्टे विक्रमादित्यभूपतिः । तात्त्विकीं देशनां श्रुत्वा संजज्ञे परमार्हतः ॥ ५७
शेषं वर्षत्रयीसाध्यं प्रायश्चित्तं महात्मनः । मुमोच सद्यो धर्मस्य सर्वस्वं हि प्रभावना ॥ ५८
अन्यदाऽतिशयज्ञानी स पृष्टस्तेन भूभुजा । किं भावी कलिकालेऽपि[3] कोऽपि जैनो नरेश्वरः ॥ ५९
तदुक्तां गाथिकामेनां मण्डपेऽलेखयन्नृपः । जैनेष्वेव कुमारोऽपि मेने ज्ञानं ततः परम् ॥ १६०

§७. ततो बोसरि-[4]भोपल्लदेवी-सज्जनसंयुतः । विधाय [5]मल्लनेपथ्यमुज्जयिन्याः विनिर्ययौ ॥ ६१
मध्ये कृत्य वटपुरं चित्रकूटपुरे ततः । शान्तिचैत्ये गुरो रामचन्द्रस्य वसतौ गतः ॥ ६२
विलोक्याभ्रंलिहं दुर्गमन्वयुङ्क्त तदुद्भवम् । चित्राङ्गदनृपोपज्ञं शुश्राव स्वर्णपूरुषम् ॥ ६३
कन्यकुब्जपुरं प्राप्तो बहुभूतैरधिष्ठितम् । दृष्ट्वा लक्षाम्रमारामं तत्रत्यानन्वयुङ्क्त सः ॥ ६४
तैरूचे सहकाराणां करो नात्रत्यमण्डले । अतोऽधिष्ठायका यत्र वसन्ति निरुपद्रवाः ॥ ६५
राज्ये जाते स्वदेशेऽहं मोक्ष्ये चूतकरं ध्रुवम् । निश्चयिन्निति भूपालधुर्वाराणसीं ययौ ॥ ६६
वणिजा केनचित्तत्र वस्त्राणि ददिरे मुदा । लुण्ट्यमाने द्वितीयेऽह्नि तद्गृहं वीक्ष्य कंचन[6] ॥ ६७
पप्रच्छ किमिदमिति ?, प्रोचे तेनापि कोऽप्यसौ । अपुत्रोऽम्बि मृतस्तेन लुण्ट्यते राजपूरुषैः ॥ ६८
तदुःखवीक्षणोत्पन्नकृपश्चेतस्यकल्पयत् । न ग्रहीष्याम्यहं स्वीयराज्ये धनमपुत्रिणाम् ॥ ६९
मध्येऽथ पाटलीपुत्रं पुरं राजगृहं गतः । वैभारगिरिमारुक्षत् पश्यञ्जिनपरंपराम् ॥ १७०
ययौ जयपुरे स्थाने नवद्वीपकनीवृति । कामरूपे ततोऽगच्छत् कामाक्षावीक्षणक्षणी ॥ ७१
यत्रास्ति नागरूपेण यत्र राज्यं महीपतिः । भीला मौक्तिकदेवस्या[7]वर्जिते तत्र सोऽगमत् ॥ ७२
[8]बालचन्द्राभिधानस्य हट्टे चर्मकृतो ययौ । उपानद्युगलं रम्यं स तस्य पादयोर्न्यधात् ॥ ७३
ईदृगुपानदुचितं वेतनं दातुमक्षमः । इत्युक्ते कुमारेणोच्चैश्चर्मकारोऽपि तं जगौ ॥ ७४
तवैव पादयोः पद्मरूपयोरुचितं यदः । चेत्रास्ति मूल्यं तन्मेऽस्तु प्राभृतं तव पादयोः ॥ ७५
यदा कुमारपालाख्यं राजानं गूर्जरावनौ । श्रोताऽसि चर्मकार ! त्वं शीघ्रमेयास्तदा मुदा ॥ ७६

§८. अथ श्रीपत्तने सिद्धनृपद्युगमने सति । आकर्ण्य पादुकराज्यं विदेश्य समय निजम् ॥ ७७
प्रतिपन्नमातुलस्य सदनेऽपि[9] द्विजन्मनः । कटाली-सिद्धपुरके मुक्त्वा सर्वं कुटुम्बकम् ॥ ७८
कुमारपालः श्रीकृष्णभटस्य भगिनीपतेः । गत्वा गृहे निशि निजां भगिनीं पत्तनेऽनमत् ॥ ७९
—त्रिभिर्विशेषकम् ।
जामिः[10] प्रेमलदेवी तु गौरवेण सहोदरम् । संस्थाप्य[11] भोजयामास स्नेहकृत्यमिदं यतः ॥ १८०

---

1 B °द्विंशोद° । 2 B लिङ्गमनन्त । 3 B °कलिकाले । 4 A °भावन्त° । 5 A °मल्लनेपथ्य° । 6 A किंचन ।
7 B °देवस्यावर्जिते । 8 A बालचन्द्र° । 9 B ऽप्य । 10 A जामि° । 11 A संस्थाप्य ।

श्यामां शाकुनिकस्तस्य स्नातां स्नानीयवारिणि । निरीक्ष्य सप्तदिवसाभ्यन्तरे राज्यमाख्यत ॥ ८१
विज्ञप्तं तद्भगिन्याऽपि पत्युरेषोऽपि पक्षभाक् । अस्यैव राज्यं नान्यस्येत्यूचे मण्डलनायकः ॥ ८२
ततो **महीतटा**भिख्यदेशाध्यक्षेण सादरम् । राजानकेन **विजयपाले**नालोचमाचरत् ॥ ८३
शुभेऽह्नि मिलितानेकप्रधानजनमण्डिते । प्रासादे श्रीज**यसिंहमेरौ** द्वावपि संगतौ ॥ ८४
प्रधानैरथ राज्यार्थमाहूतः परमार्हतः । **महीपालः** स तान् नत्वा प्राहादेशं प्रदत्त मे ॥ ८५
सं दीनमित्यवज्ञाय **रत्नपाल**मजूहवन् । नत्वा शम्भुं ततस्तांश्च सोऽपि प्रोवाच पूर्ववत् ॥ ८६
अथो **कुमारपाला**ख्य आहूतः सोऽपि धीरदृक् । महेश्वरं नमस्कृत्य संवृत्य च पटाञ्चलान् ॥ ८७
सिंहासनसमासीनस्तानाह स्वजनानिव । क्रियतामभिषेको मेऽस्ततः **कृष्णभटा**दयः ॥ ८८
मन्वाना राज्यधौरेयं गुणग्राह्यमजेयकम् । अभिषेकविधिं चक्रुर्मङ्गलध्वनिपूर्वकम् ॥ —विशेषकम् । ८९
तच्छीर्षे क्षेपिता मुक्ता सेतिकाऽभूत् सपल्लिका । ततो जय जयेत्युक्त्वा नेमे **कृष्णभटा**दिभिः ॥ १९०
**कुमारपाल**भूपालो नान्दीनिर्घोषपूर्वकम् । पट्टहस्तिसमारूढो मण्डितो मण्डलेश्वरैः ॥ ९१
धार्यमाणसितच्छत्रो वीज्यमानश्च चामरैः । गृह्णन् पौराशिषः प्राप राजप्रासादमण्डपम् ॥ —युग्मम् । ९२
कृतोपकारानाहूय सर्वानुपचकार सः । मुमोच सहकाराणामाज्ञासारः करं स्यात् ॥ ९३
अपुत्रिणां सर्वथापि मुक्त्वा निधनवद्धनम् । स धर्मी[1] विजयी राजा दिक्षु यात्रामसूत्रयत् ॥ ९४
स प्राचीमादितः **सिन्धुमाविन्ध्यं** दक्षिणामपि । पश्चिमामासमुद्रं च कौबेरीमाम्लिशो[2]ऽजयत् ॥ ९५
पश्चाशद्वर्षदेशीयः प्रौढबुद्धितया नृपः । सर्वदेशस्वरूपज्ञः स्वयं साम्राज्यमन्वशात् ॥ ९६
§९. "तद्वधार्थमथामात्यवृद्धा[3] भूपच्छलैषिणः[4] । सान्धकारप्रतोलीषु मुमुचुर्घातकान् रहः ॥ ९७
भाग्याकृष्टेन केनापि ज्ञापितेऽर्थे महीपतिः । प्रविवेशापरद्वारा पुण्यं कुत्र न रक्षकम् ॥ ९८
कृतद्रोहानथामात्यान् प्राहिणोद् यमपर्षदि । प्रभुतायाः परो धर्मो [5]निग्रहानुग्रहो यतः ॥ ९९
स **कृष्णभट**देवस्तु सहर्षैः शालकोद्भवैः । सर्वदावसरे जाते नर्ममर्माण्युदाहरत् ॥ २००
रहस्यभाणि भूपेन सर्वमान्योऽसि भावुक ! । न च वाच्यमवाच्यं तु ममेत्थं मूलपर्षदि ॥ २०१
स तूल्कटतया मेने ममापि वचसा खलु । लज्जितोऽयं न जानाति तामवस्थां पुरातनीम् ॥ २०२
न [6]वेद यन्नृपा-भि-स्त्री-विप्राः कस्यापि न स्वकाः । तथैव पुनराह स्म भाव्यं केन निषिध्यते ॥ २०३
परेद्यवि नृपादिष्टैर्मल्लैरङ्गैः श्लथीकृतैः । नेत्रयुग्मं च[7] निष्कास्य मन्दिराभरणीकृतम् ॥ २०४
ततो भीमभयभ्रान्तैः सामन्तैः स समन्ततः । सिषेवे सततं भक्तिर्न विभाति भयं विना ॥ २०५
§१०. पूर्वोपकारकत्वेन स[8] कृतज्ञशिरोमणिः । **आलिगोदयनौ** चक्रे प्रधानौ मतिसत्तमौ ॥ २०६
**उदयन**स्य सूनुश्च **वाग्भटो** बुद्धिवाग्भटः । महामात्य[:]कृतस्तेन शतशाखो गरीयसाम् ॥ २०७
तद्बन्धुश्चा**हडः सिद्धनरेन्द्र**स्य सुतोपमः । नाज्ञां **कुमारपाल**स्य भेजेऽल्पायुरिवौषधम् ॥ २०८
किन्तु मन्तुत्रपामग्न इव कालक्रयक्षितः । गत्वा **सपादलक्षीय**क्षोणीपतिमशिश्रयत्[9] ॥ २०९
श्रीमत्**कुमारपाल**स्य सामन्तामात्यमण्डलम् । दानाद्यैर्भेदयामास सिन्धुपूर इवावनिम् ॥ २१०
अन्यदा **गूर्जरे**शेन रणोत्कर्षं चिकीर्षुणा । तेन सीमान्तमानिन्ये स्वामिनः सचलो नृपः ॥ ११
श्रीमत्**कुमारभूपो**ऽपि चतुरङ्गचमूवृतः । अभ्यमित्रीणतां भेजे रौद्रो रस इवापरः ॥ १२
धरित्र्यां सज्जमानायां निर्णीते रणवासरे । **कुमारपाल**भूपेन कस्मादप्यपराधतः ॥ १३
संतर्जितः पट्टहस्तिसादी च(?च)उलिगाभिधः । अङ्कुशं परितत्याज प्रतिज्ञामिव [10]निष्कुलः ॥ १४

---

* एष श्लोकः पतितः A आदर्शे । 1 B धर्मविजयी । 2 A °माम्लेच्छेशो । 3 A तद्वधार्थं महामात्यवृद्धा । 4 A °च्छलेशिनः । 5 B °निग्रहानुग्रहो । 6 B विवेदय° । 7 B विनि.कास्य । 8 A मुद्गत्तः° । 9 B मशिश्रियत् । 10 A निष्फलः ।

तत्पदे नृपतिश्चक्रे चकेतरगुणं नवम् । सादिनं सामलाभिख्यं कार्यं भाग्यानुसारि यत् ॥ १५
कलहपञ्चाननाख्यं सोऽपि प्रक्षरितं गजम् । विधाय सायुधं तत्र नृपासनमसज्जयत् ॥ १६
तत्रासीनश्च चौलुक्यचक्रवर्ती रणोत्सुकः । ददर्श विघटमानं सैन्यं चाहडभेदतः ॥ १७
समयज्ञस्तदा राजाऽऽदिदेश गजसादिनम् । एकाकिना मयैवाद्य योद्धव्यं रिपुभूभुजा ॥ १८
दूरात् सपादलक्षीयमुपलक्ष्य क्षितीश्वरम् । दधावे संमुखं तार्क्ष्य इव नागजिघृक्षया ॥ १९
स्वगजेन गजं शत्रोर्दन्तादन्ति नियोजितुम् । पुरतः प्रेरयेत्याशु निषादिनमभापत ॥ २२०
तया तमप्यकुर्वाणमूचे विघटितोऽसि किम् । सोऽपि विज्ञापयांचक्रे राजानं रचिताञ्जलिः ॥ २१
निषादी सामलो नाम करी चायं कदाचन । न शक्यते चालयितुं मर्यादाया इवाम्बुधिः ॥ २२
किन्त्वग्रेऽस्ति गजारूढः कुमारश्चाहडो बली । हक्कया यस्य भज्यन्ते मदान्धा अपि सिन्धुराः ॥ २३
ततः कुमारपालोऽपि सिन्धुरश्रवणोपरि । स्वोत्तरीयं निचिक्षेप जयकेतुपटोपमम् ॥ २४
पुरः सृत्वा[1] गजोऽपि द्राक् दन्ताभ्यां प्रतिदन्तिनः । पद्मामिव व्यधाद्दन्तः सञ्चाराय[2] जयश्रियः ॥ २५
चाहडः पूर्वभेदेन जानन् च(? च)उलिगाभिधम् । यावता गूर्जरेशस्य गजमभ्येतुमिच्छति ॥ २६
अपसार्य गजं तावत् सामलस्तमपातयत् । जगृहे[3] तलवर्गीयैर्जीवग्राहं च पत्तिभिः ॥ २७
तमारोप्य गजे राजा जितं जितमिति ब्रुवन् । जयस्य सूचकं सद्यश्चेलाञ्चलमचालयत् ॥ २८
विष्वक् पलायमानेषु शत्रुसैन्येषु तत्क्षणम् । तदीयं सारमादाय निवृत्तो गूर्जरेश्वरः ॥ २९

§११. आलिगाय कुलालाय स कृतज्ञतया ददौ । ग्रामसप्तशतीयुक्तां चित्रकूटस्य पट्टिकाम् ॥ ३०
ते पुनर्निजवंशेन लज्जमाना समृद्धितः । अद्यापि ख्यातमात्मानं स ग रा इत्यजूहवन् ॥ ३१
आच्छाद्य कण्टकैः क्षेत्रे यैस्तदानीं स रक्षितः । निजाङ्गरक्षकास्ते तु कृता विश्वस्तिभाजनम् ॥ ३२

§१२. सोलनामाथ गन्धर्वः सङ्गीतकलयैकरा । सषोडशं द्रम्मशतं लेभे सन्तोषितान्नृपात् ॥ ३३
लज्जितस्तेन दानेन सोलकोऽप्यवहेलया । बालकेभ्यो ददौ तद्धि समादाय सुखासिकाम् ॥ ३४
राज्ञा निर्वासितो देशाद् गतो वाराणसीं पुरीम् । भूमीन्द्रं जयतचन्द्रं शिश्राय गुणरागिणम् ॥ ३५
कलासन्तोषितात् तस्मान्मानशृङ्गारपूर्वकम् । गजेन्द्रं हस्तिनीयुक्तं गृहीत्वा पुनरागमत् ॥ ३६
कुर्वन्नुपायने सर्वं तं गन्धर्वं पुनर्नृपः । मानयामास सन्तो हि सद्यो गुणिषु वत्सलाः ॥ ३७
लब्धप्रतिष्ठः सोलाकः सोल्लासकलयोल्बणः । [4]गान्धर्वज्ञानसीमायां सर्वत्र ख्यातिमासदत् ॥ ३८
अन्यदा गायनाः केऽपि स्वकलोत्कर्षकाङ्क्षिणः । कृततुम्बारव राजपर्षद्येवं बभाषिरे ॥ ३९
देव ! स्वदेशसीमायामुषिता मुषिता वयम् । पृष्टे केनेति भूभर्त्रा हरिणैरिति तेऽब्रुवन् ॥ ४०
ज्ञात्वा गान्धर्वकौशल्यव्यञ्जिका इति तद्गिरः । नृपोऽप्युल्लसितैकभ्रुः सोलाकमुखमैक्षत[5] ॥ ४१
सोऽपि विज्ञपयांचक्रे देव ! युक्तममी पुनः । दर्शयन्तु निजांश्चौरान् वयमादातुमीश्महे ॥ ४२
सोलाकेन समं तेऽथ प्रस्थिताः काननान्तरे । दर्शितास्तैर्मृगाः कण्ठे खेलत्कनकशृङ्खलाः ॥ ४३
सोलाको गातुमारेभे काकलीध्वनिपेशलम् । सञ्जाता हरिणाश्चित्रलिखिता इव तत्क्षणम् ॥ ४४
स्वपुराभिमुखं गायन्नपासर्पद् यथायथा । प्रतिभूभिरिवाकृष्य मृगा जग्मुस्तथातथा ॥ ४५
मध्येकृत्य पुरं [7]राजमार्गे त्रिपथचत्वरान् । नीता राजसभां सभ्यैस्तस्करा इव ते क्रमात् ॥ ४६
सर्वेऽपि विस्मिता लोकास्तद्विलोक्य कुतूहलम् । मृगा न विविदुः किञ्चिद्गीतैकाग्र्येण मोहिताः ॥ ४७

---

1 B स्तत्व । 2 A संचराय । 3 A जगृह । 4 B गन्धर्व° । 5 B सोलाकं मुख° । 6 B °मैक्षत ।
7 A राजमार्गं ।

योगिनामिव तेषां तु निरुद्धेन्द्रियवर्त्मनाम् । जगृहे भूषणं हैमं गलादुत्सार्य लीलया ॥ ४८
पृष्टास्तदा नरेन्द्रेण प्रभुश्रीहेमसूरयः । प्ररोहणविधिं शुष्कतरोर्गीतकलां जगुः ॥ ४९
*सोलाकेन तथेत्युक्ते भूमिपालस्तदादिशत् । कौतुकं दर्शयास्माकं पट्टबन्धं गृहाण च ॥ २५०
सोलाकोऽपि समानाय्य श्रीमदर्बुदपर्वतात् । शुष्का विरहकाख्यस्य तरोः शाखा नृपाङ्गणे ॥ ५१
कुमारमृत्तिकाकुम्भालवाले च नियोज्य ताम् । प्रोल्लसत्पल्लवां चक्रे गीतनादामृतप्लवैः ॥ ५२[1]
श्लाघितः सचमत्कारं प्रभुश्रीहेमसूरिभिः । सोलाकः श्रीनरेन्द्रेण गन्धर्वाधिपतिः कृतः ॥ ५३
§१३. कदाचिदन्यदा सर्वावसरावस्थितं नृपम् । कोऽपि कुंकुणदेशीयः सिषेवे मागधोत्तमः ॥ ५४
सोऽन्यदा कुंकुणाध्यक्षमल्लिकार्जुनभूपतेः । 'रा ज पि ता म ह' इति पपाठ बिरुदं सुधीः ॥ ५५
अमर्षणः क्षमेन्द्रोऽपि यद्वैरं इवोरगः । सभासम्मुखमैक्षिष्ट कठोरतरया दृशा ॥ ५६
ज्ञात्वा भर्तुरभिप्रायमाम्बडः सचिवाग्रणीः । चक्राराञ्जलिबन्धेन नमस्कारं नरेशितुः ॥ ५७[2]
सभायां तु विसृष्टायां भूपतिर्विकसन्मनाः । पप्रच्छाञ्जलिबन्धस्य कारणं सोऽप्यदोऽवदत् ॥ ५८
स कोऽपि विद्यते मेऽत्र सभायां यो निहत्य तम् । समानयेदिति श्रुत्वा मुदितो गूर्जरापतिः ॥ ५९
तमेव बहुसामन्तसहितं सैन्यनायकम् । विधाय प्रेषयामास कुंकुणान् काम्यसिद्धये ॥ २६०
कावम्बिनीं समुत्तीर्य नदीं शिबिरमात्मनः । यावदावासयामास स्वामिसम्भावनावली ॥ ६१
तावदश्वखुरैः पृथ्वीं जयभम्भामिवापराम् । वादयंस्तत्र संजग्मे मल्लिकार्जुनभूपतिः ॥ ६२[3]
प्रवृत्ते समरे सैन्यमाम्बडस्य दिशोदिशि । दुग्धं नकुलसञ्चारादिव विश्रोटमासदत् ॥ ६३
पलाय्य धीसखः कृष्णवदनः कृष्णवस्त्रभृत् । कृष्णच्छत्रः पुरासन्नमागत्य त्रपया स्थितः ॥ ६४
सेनानिवेशः कस्यायमिति पृष्टे महीभुजा । विद्विषा परिभूतस्य श्रीमदाम्बडमन्त्रिणः ॥ ६५
विस्मितस्त्रपया तस्य सप्रसादं पुनर्नृपः । तमेव कृत्वा सेनान्यं प्रैषीद् बहुदलान्वितम् ॥ ६६
कालम्बिनीं[4] समुत्तीर्य पद्यावन्धेन मन्त्रिराट् । युयुधे सह तेनैव[5] स्वयं वीररसोत्कटः ॥ ६७[6]
प्रहारैः सिन्धुरस्कन्धान्निपात्यादाय मस्तकम् । रक्षामिव स्वशौर्यस्य स्वर्णेन तदयन्त्रयत् ॥ ६८
आगच्छन् भृगुकच्छादिहट्टेषु न्यस्य मस्तकम् । प्रेक्षणं कारयामास जये को नाभिमन्यते ॥ ६९
आलोचनापदेऽमुष्य मदस्थानस्य धीसखः । हेमसूरिगिरा तत्र तत्र चैत्यान्यचीकरत् ॥ २७०
आज्ञां कौ मा र पा ली यां मण्डले तस्य दापयन् । आनर्च चरणौ राज्ञस्तच्छिरःकमलेन सः ॥ ७१
द्वासप्तत्या निपण्णेषु सामन्तेषु च पर्षदि । सर्वस्वमुपदीचक्रे तदीयं भूभुजः पुरः ॥ ७२[7]
तथा च 'शृङ्गारकोटिः' शाटिका गुणकोटियुक् । पटो 'माणिक्य'नामा तु हारः 'पापक्षयंकरः' ॥ ७३
'योगसिद्ध्यभिधा' सिप्रा चतुष्टयमिदं तथा । पण्मूटका मौक्तिकानां चतुर्दन्तः सितो गजः ॥ ७४
द्वात्रिंशत्कलशा[8] हैमा हेम्नां कोट्यश्चतुर्दश । सविंशति शतं पात्रप्रमदानामढौकत[9] ॥ ७५
§१४. प्रीतस्तस्यावदातेन[10] भूपतिः सर्वसाक्षिकम् । 'रा ज पि ता म ह' इति तस्मै तद्बिरुदं ददौ ॥ ७६
श्रीहेमचन्द्रसूरीन्द्राः कदाचित् पत्तनेऽन्यदा । स्वमात्रे पाहिणीनाम्न्यै सव्रतानशनं ददुः ॥ ७७[11]
एककोटिनमस्कारपुण्ये मातुरुदीरिते । कारिताऽऽराधना पूज्यैर्दुःप्रतीकारितोचिता[12] ॥ ७८
जाते प्राणव्यये क्लृप्तं विमानं मन्त्रिकैर्वरम् । महोत्सवेन महता सञ्चचार यदा पुनः ॥ ७९
त्रिपुरुषमठस्याग्रे जटाधारिभिरुत्कटैः । स्वभावजातिवैरेण तद्विमानमभज्यत ॥ २८०

---

* A पतितोऽयं श्लोकः. A शाखाँ। 1 B चमत्कार। 2 B कादंबिनी। 3 B सहितेनैव। 4 B स्वत्रया हेमयोत्र।
5 B °मढौकयत्। 6 B °दानेन। 7 A °प्रतीकारोचिता।

यतः– [†]'काजुं करेवा माणुसह बीजुं मागुं न अत्थि' ।
कइ आपणि[1] पहु[2] थाईइ[3] कइ पहुं कीजइ हत्थि[4] ॥ ८१

उन्मूलनीयास्तत्त्वज्ञैर्धर्मद्विष्ट यथातथा । विमृश्येति च सूरीन्द्रा राजसङ्गतिकाङ्क्षिणः ॥ ८२

कुमारपालभूभर्तुस्तस्थुपो मालवावनौ । स्कन्धावारमलंचक्रुर्जानाना आयतौ हितम् ॥ ८३

राजप्राप्तिनिमित्तस्य चवदृन् सूरीन् समागतान् । [1]श्रीमानुदयनो गत्वा स्मारयामास भूपतेः ॥ ८४

तेनाप्यनुमता जग्मुः सूरयो राजपर्षदि । आशीर्वादोक्तिवैचित्र्याद् विस्मितः [2]स्माह भूपतिः ॥ ८५

सदैव समुपेतव्यं देवतावसरक्षणे । इत्युक्ते सादरं राज्ञा सूरयस्तं बभाषिरे ॥ ८६

भुञ्जीमहि वयं भैक्ष्यं जीर्णं वासो वसीमहि ।
शयीमहि महीपृष्ठे कुर्वीमहि किमीश्वरैः ॥ ८७

भूपः प्रोवाच युष्माभिः परलोकहितेच्छया । मैत्र्यं विधातुमिच्छामि मधुना माधवो यथा ॥ ८८

'एको मित्रं भूपतिर्वा यतिर्वे'ति यदुच्यते । उभयोस्तद्धितार्थाय करयोः पुष्पदामवत् ॥ ८९

'अनिषिद्धमनुमत'मिति जानन्नदापयत् । अस्खलितप्रचाराय प्रभूणां सर्वदूयकम् ॥ २९०

*जाते गमागमे स्वैरं प्रस्तावोक्तिमनोहरैः[3] । स्नेहोऽधिकमवर्द्धिष्ट वार्द्धि-चन्द्रमसोरिव ॥* ९१

एकदा च यशश्चन्द्रगणिना प्रत्युपेक्षितम् । आसनं हेमसूरीणां रजोहरणयुक्तितः ॥ ९२

अज्ञातपरमार्थेन तद् दृष्ट्वाऽयुज्ञि भूभुजा । दशाभिः स्पृश्यते डिम्ब इव किं न्विदमासनम् ॥ ९३

प्रभुभिर्जगदे जीवरक्षायों व्ययमुद्यमः । सस्मेरमाह भूपोऽपि किमदृष्टैरुपक्रमः ॥ ९४

बभाषिरे महात्मानो राजन् ! सैन्यं चतुर्विधम् । रिपावुपस्थिते सज्जीक्रियते पूर्वमेव वा ॥ ९५

व्यवहारो यथा राज्ये सुखकारणमायतौ । श्रेयस्तथायं धर्मेऽपि सिद्धये धर्मचारिणाम् ॥ ९६

इत्याद्यनेकयुक्तीभिर्मुदितो भूभृदेकदा । पप्रच्छोदयनामात्यं पितृवंशादिकं प्रभोः ॥ ९७

शक्रपत्तनसंकाशे देशेऽर्धाष्टमनामनि । संकेतनमिव श्रीणां पुरं धन्धुकक्काभिधम् ॥ ९८

तत्रास्ति मोढवंशीयश्चाचिगो व्यवहारिकः[4] । तज्जाया पाहिणिर्नाम चतुःषष्टिकलागृहम् ॥ ९९

चामुण्डाया गोत्रदेव्या आद्याक्षरपवित्रितः । तयोः पुत्रश्चांगदेवनामा जातोऽष्टवत्सरः ॥ ३००

श्रीदेवचन्द्रसूरीन्द्राः पत्तनात् तीर्थयात्रया । प्रस्थितास्ते क्रमात् प्रापुर्धन्धुकक्कमहापुरम् ॥ ३०१

श्रीमोढवसतौ तेषां तस्थुषां सोऽपि बालकः । सवयोभिः समं क्रीडन् समियाय सुलक्षणः ॥ ३०२

चांगदेवस्ततः सिद्धाविव भाग्यपराक्रमः । सिंहासनोपरि स्वाम्युर्निषिद्यायामुपाविशत् ॥ ३०३

यदि क्षत्रकुले जातः [5]सार्वभौमस्तदा नृपः । वणिग्-विप्रान्वये जातो महामात्यः पुनर्भवेत् ॥ ३०४

पुण्ययोगेन चेदस्य यतित्वमुपतिष्ठते । दुर्युगेऽपि तदाऽमुष्मिंस्तुर्यं युगमुपानयेत् ॥ ३०५

ध्यात्वेति [6]धर्मवन्मुख्यव्यवहारिभिरावृताः । सूरयस्तत्पितुर्गेहं जग्मुर्जङ्गमतीर्थवत् ॥ ३०६

पत्यौ देशान्तरस्थेऽपि पाहिणिर्धर्मदीपिका । आनन्दमेदुरं चक्रे सा संघं स्वागतादिभिः ॥ ३०७

ज्ञात्वा समागमे हेतुं गृहे पतेरभाववः । विषादानन्दसम्मिश्रां मुदती सा दशामगात् ॥ ३०८

धन्याऽस्मि यस्या मे गेहे समीयुः गुरवा अमी । मिथ्यादृष्टिः पतिः किन्तु तादृशोऽपि गृहे न हि ॥ ३०९

किं करोमि कथं वक्त्रं दर्शयामि गुरोः पुरः । ध्यायन्तीति गुरुं नत्वा तस्थौ किंचिदवाङ्मुखी ॥ ३१०

कैश्चिदूचे शुभे ! तावन्निजदोषं निराकुरु । त्वं [7]देहि तनयं शेषकार्ये पतिः प्रमाणता ॥ ११

---

† II आदर्शे पाठभेदः –१ कज्ज २ बीजउ ३ मणु ४ अत्थि ५ आपुणि ६ प्रभु ७ थाइय ८ प्रभु ९ हाथि ।

1 B श्रीमानुदय[ं] गत्वा च । 2 B विस्मितावदद् । 3 B मनोरसैः । 4 B व्यावहारिकः । 5 A सार्वभूप° । 6 B धनवन्° । 7 B वदेद् ।

चांगदेवस्ततः पृष्टः शिष्योऽमीषां भविष्यसि ? । ओमित्युक्ते ददौ माता गुरुभ्यस्तनयं मुदा ॥ १२
प्रस्थिता गुरवस्तीर्थयात्रायां पुनरागताः । चांगदेवं सहादाय भेजुः कर्णावतीं पुरीम् ॥ १३
तत्रास्मदीयगेहेऽसौ सत्रागार इव श्रियाम् । रममाणः सुखं तस्थौ भृङ्गवन्नन्दने वने ॥ १४
समेतः स्वगृहं श्रुत्वा पुत्रोदन्तं स चाचिगः । दर्शनावधिसंन्यस्तभोज्यः कर्णावतीं पुरीम् ॥ १५
श्रीदेवचन्द्रसूरीणां पौषधालयमागतः । सक्रोधोऽपि मनाक् चक्रे नमस्कारं विचक्षणः ॥ १६
तावदावर्जयांचक्रुर्गुरवो विविधोक्तिभिः । यावत्तोदयनामात्यस्तं नीत्वाऽभोजयद् गृहे ॥ १७
स दुकूलत्रिकं लक्षत्रयं पुत्रसमन्वितम् । तदुत्सङ्गे न्यधान्मन्त्री गौरवेण गरीयसा ॥ १८
चाचिगः स्माह मूल्येन पर्याप्तं मितवर्त्तिना । अनर्घ्यो मत्सुतस्तस्मात् तव भक्तिर्गरीयसी ॥ १९
दत्तस्तुभ्यं मया पुत्रश्चाचिगेनेत्युदीरिते । परिरभ्य समाचष्ट निगदन् साधु साध्विति ॥ ३२०
सखे मह्यं वितीर्णोऽसौ महार्घोऽपि तवाङ्गजः । अपमानपदं भावी योगिमर्कटवन्नमन् ॥ २१
गुरुभिः पुनराप्तोऽसौ शाहितः सकलाः कलाः । रत्नं वैकटिकेनेव नेष्यतेऽनर्घ्यतापदम् ॥ २२
इति सम्बोधितः सोऽपि गुरुभ्यः सुतमर्पयत्[1] । दीक्षामहोत्सवं प्रेम्णा स एवाचीकरत् पुनः ॥ २३
चक्रुस्तस्याभिधा हेमचन्द्रेति गुरवो मुदा । जातः क्रमेण शास्त्राब्धिकुम्भयोनिरसौ[2] मुनिः ॥ २४
न्यस्तः सूरिपदे योग्य'–इत्यस्य चरितं नृपः । आकर्ण्योदयनामात्यान्मुमुदे तद्गुणक्षणी ॥ २५
निष्कलङ्कगुणग्रामसन्ततप्रीणितान्तरः । भूपः श्रीहेमसूरीन्द्रान् सदैव हृदये दधौ ॥ २६
पूर्वोपकारतस्तादृग्गुणग्रामाच्च सङ्गतम् । तयोर्नित्यमशोभिष्ट माणिक्य-स्वर्णयोरिव ॥ २७

§१६. एकदा भूभुजा सार्धमुपविष्टां वरस्त्रियम् । व्यावर्त्तिपत सूरीन्द्रा द्वारतोऽपि विलोक्य ताम् ॥ २८
अनीतिमिव राज्यार्थी प्रभूणां सङ्गमेच्छया । विससर्ज नरेन्द्रोऽपि तामन्तःपुरयोषिताम् ॥ २९
गुरवोऽप्यागमन् दृष्ट्वा तथा मिथ्यानिवेशतः । विरोधादामिगः प्राह पुरोधाः पुरतः प्रभोः ॥ ३३०

विश्वामित्र-पराशरप्रभृतयो ये चाम्बुपत्राशिन-
स्तेऽपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहं गताः ।
आहारं सघृतं पयोदधियुत ये भुञ्जते मानवा-
स्तेषामिन्द्रियनिग्रहः कथमहो दम्भः समालोक्यताम् ॥ ३१

श्रुत्वेति प्रभवोऽप्याहुः स्वभावः प्राणिनामयम् । किन्तु विज्ञाततत्त्वानां विशेषः श्रूयतामिह ॥ ३२

सिंहो बली द्विरदशूकरमांसभोजी
संवत्सरेण रतिमेति किलैकवारम् ।
पारापतः खरशिलाकणभोजनोऽपि[3]
कामीभवत्यनुदिनं वद कोऽत्र हेतुः ॥ ३३

इत्युक्तियुक्त्या सूरीन्द्रैः कृते तस्मिन्निरुत्तरे । 'अमी सूर्यं न मन्यन्ते' केनाप्युक्ते पुनर्जगुः ॥ ३४
अधामधामधामानं वयमेव स्वचेतसि । यस्यास्तव्यसने प्राप्ते त्यजामो भोजनोदके ॥ ३५
पयोदपटलच्छन्ने नाश्नन्ति रविमण्डले । अस्तंगते तु भुञ्जाना अहो ! भानोः सुसेवकाः ॥ ३६
इत्थं दुर्वादवृक्षाणां गुरुमुद्रापटीयसः । तानेव मेने भूपालः सर्वागममहोदधीन् ॥ ३७

§१७. पप्रच्छ चैकदैकान्ते भक्तिमन्थरया गिरा । कथंचिदपि जायेत चिरस्थायि यशो मम ॥ ३८
विमृश्य प्रभवोऽप्यूचुर्विक्रमादित्यभूपवत् । जगदानृण्यतः सोमनाथचैत्योद्धृतेरथ ॥ ३९

---

1 B °मार्पयत् । 2 B °योनेरयं । 3 B भोजिनोऽपि ।

तदैव स्थापिते श्रेष्ठमुहूर्ते मुदितो नृपः । [1]निजपद्मकुलं प्रेष्य चैत्यारम्भमचीकरत् ॥ ३४०
समियायान्यदा पञ्चकुलप्रस्थापिता द्रुतम् । विज्ञप्तिः खरशिलाया निवेशानन्दसूचिका ॥ ४१
विज्ञप्तिं दर्शयन् प्रीतः प्रभून् प्राह नराधिपः । निर्विघ्नं स्याद् यथा चैत्यं [2]प्रासादादिरियतां तथा ॥ ४२
प्रभवोऽप्यभिनन्दन्तस्तमाहुः शृणु भूपते ! । 'श्रेयांसि बहुविघ्नानि' प्रयत्नोऽत्र हितावहः ॥ ४३
[3]विचार्याब्रह्मसेवाया यदि वा मद्य-मांसयोः । गृहाण नियमं चैत्ये कलशारोपणावधि ॥ ४४
तत्क्षणादुदकक्षेपपूर्वकं मद्य-मांसयोः । जग्राह नियमं सन्तः सर्वत्र प्रभविष्णवः ॥ ४५
वर्षद्वयेन सञ्जाते प्रासादे कलशावधौ[4] । मुमुक्षुर्नियमं राजा सूरीन्द्रानन्वमन्यत ॥ ४६
प्रभुस्तदेव तद्यात्रापर्यन्ते कृतकार्यिणः । युज्यते नियमो मोक्तुमित्युक्त्वा वसतिं ययौ ॥ ४७
तद्गुणैरुल्लसन्नीलीरागः श्रीगूर्जरापतिः । प्रशशंस तमेवैकम्; गुणाः कस्य न वल्लभाः ॥ ४८
उपभूपमथ प्रोचुर्जातमत्सरिणो द्विजाः । पटुचाटुपरः सर्वो राज्ञां प्रीणाति मानसम् ॥ ४९
नो चेत् प्रातस्त्वेतोऽयं वाच्यो यात्रां न चैष्यति । अस्मद्धर्ममभी यस्माद् दूषयन्ति पदे पदे ॥ ३५०
स्वयमभ्यर्थितः प्रातर्यात्रार्थं भूभुजा प्रभुः । ऊचे वैद्योपदिष्टं चाभीष्टं चेदमुपस्थितम् ॥ ५१
सहजोत्कण्ठिताः प्रायो यात्रायै यतयो नृप ! । सिताक्षेपप्रकारोऽयं पायसे यन्निमन्त्रणम् ॥ ५२
सुखासनवाहनादि किं युष्मद्भ्यः प्रदीयताम् । नृपेणोक्ते, वयं देव ! निरारम्भपरिग्रहाः ॥ ५३
गच्छतः पादचारेण शोभामुपलभामहे । प्रस्थाय परमथैव 'नमन्तस्तीर्थमण्डलीम् ॥ ५४
देवपत्तनप्रवेशे भवद्भिर्मिलनेच्छवः । अनुमत्या नरेन्द्रस्य ततः श्रीहेमसूरयः ॥ ५५
शत्रुञ्जयोज्जयन्तादितीर्थमालां कृतादरम् । नमन्तः सपरीवारा निरूपितदिनोपरि ॥ ५६
मिलिता गूर्जरेशस्य प्रवेशे पत्तनस्य च । जहर्ष सोऽपि केकीव दृष्ट्वा सूरीन् घनानिव ॥ ५७
बृहस्पत्यभिधानेन गण्डेनानुगतो नृपः । गाढं सोमेश्वरं लिङ्गमालिलिङ्गानुरागवान् ॥ ५८
श्रीजैनादपरं देवं नामी वन्दन्त इत्यसौ । मिथ्यादृग्वचसा भ्रान्तो भूपः सूरीनभाषत ॥ ५९
'भगवन् ! यदि युज्येत तदेतैर्बलिभिः स्वयम् । अर्चयन्तु प्रभुं शम्भुं' समयज्ञस्ततो गुरुः ॥ ३६०
तदैवोद्गमनीयेन भूपादिष्टेन भूषितः । आरुह्य चैत्यदेहल्यां शम्भुं स्तोतुमभ्यधात् ॥ ६१
'अहो ! दिष्ट्याद्य दृष्टोऽसौ कैलासवसतिः प्रभुः' । उपहारप्रकारास्तत् क्रियन्तां द्विगुणा इति ॥ ६२
आह्वाननादिमुद्राभिर्न्यासैरंशादिभिश्च सः । पञ्चोपचारैरभ्यर्च्य शिवं शैवागमोक्तिभिः ॥ ६३
कर्पूरागुरुनैवेद्यवस्तुभिर्द्विगुणीकृतैः । स्वयमानर्च सूरीन्द्रः शम्भुं विधिवदादरात् ॥ ६४
सामन्तशतसंयुक्ते विस्मिते राज्ञि पश्यति । दण्डप्रणामपूर्वं स स्तोतुमेवं प्रचक्रमे ॥ ६५

　　यत्र तत्र समये यथा तथा योऽसि सोऽस्यभिधया यया तया ।
　　वीतदोषकलुषः स चेद् भवानेक एव भगवन् ! नमोऽस्तु ते ॥ ६६
　　　भवबीजाङ्कुरजनना रागाद्याः क्षयमुपागता यस्य ।
　　　ब्रह्मा वा विष्णुर्वा हरो जिनो वा नमस्तस्मै ॥ ६७

इत्यादि हेमसूरीणां स्तुत्यनन्तरमादरात् । भूपोऽपि शम्भुमभ्यर्च्य न्यषदद् दानमण्डपे ॥ ६८
तुलापुरुषदानानि[7] गजदानानि भूरिशः । विधाय कृतकृत्यात्मा नृपः प्रोचे प्रभूनिति ॥ ६९
न सोमेशसमं तीर्थं न महर्षिर्भवत्समः । मत्समो नास्ति राजाऽन्यस्तदस्मिन्मिलिते त्रिके ॥ ३७०

1 B निजे । 2 B प्रसत्या° । 3 B विचार्य ब्रह्म° । 4 B कलशावधि । 5 B भवन्त° । 6 B °वसति प्रभु° ।
7 A °दानादि ।

किंचिन्मुक्तिप्रदं देव ! तत्त्वमाविःकुरु प्रभो ! । विमृश्य गुरवोऽप्यूचुरलं पौराणिकोक्तिभिः ॥ ७१

शम्भुमेव [1]तदिदानीं प्रकटीकरवाण्यहम् । जानीते तन्मुखेनैव मुक्तिमार्गं यथा भवान् ॥ ७२

किमेतदपि जाघट्टि संशयाने नृपेऽवदत् । एकाग्रमानसावावां सर्वं संघटते ततः ॥ ७३

किन्तु कृष्णागुरुः क्षेप्यस्त्वया ध्यानं मया पुनः । तावद् विधेयं प्रत्यक्षः शम्भुर्भवति यावता ॥ ७४

क्षणाद्दीपेषु शान्तेषु धूपधूमे च सर्पति । द्वादशात्मप्रकाशाभे महत्तेजसि जाग्रति ॥ ७५

जलाधारोपरि क्ष्मापो जात्यजाम्बूनदद्युतिम् । चर्मचक्षुर्दुरालोकं ददर्शैकं तपस्विनम् ॥ ७६

आपादमस्तकं स्पृष्ट्वा मुनिं निस्तन्द्रया दृशा । पञ्चाङ्गं चुम्बितक्षोणिः प्राञ्जलिः प्राह तं नृपः ॥ ७७

कृतार्थे नयने मेऽद्य जगतीश ! तवेक्षणात् । किन्तु मुक्तिप्रदं तत्त्वमुक्त्वा कर्णौ कृतार्थय ॥ ७८

अथाविरासीद् दिव्या गी राजन्नेष महामुनिः । सर्वदेवावतारश्च सर्वज्ञश्च कलावसौ ॥ ७९

तदुक्तः सरलः पन्था ज्ञातव्यो मुक्तिदायकः । शम्भाविति तिरोभूते तस्थौ चित्रमना नृपः ॥ ३८०

सूरीन्द्रोऽपि क्षयोन्मुक्तप्राणायामो [2]विकस्वरः । राजन्नित्यवदत् तावत् त्यक्तराज्यमहामदः ॥ ८१

पादावधार्यतां जीव ! स्वामिन्निति वदन्नृपः । यत्कृत्यमादिशानम्रमौलिः प्राञ्जलिरभ्यधात् ॥ ८२

तत्रैव मदिरा-मांसनियमं जीवितावधिम् । दत्त्वा क्ष्मापतेः[3] प्राप्तो नाम्नाऽणहिल्लपत्तनम् ॥ ८३

तत्र सर्वोपधाशुद्धसिद्धान्तोपनिषद्गिरा । सम्यक्त्वं ग्राहयामास सम्प्रतेरिव भूपतेः ॥ ८४

प्रबन्धान् योगशास्त्रादीनाकर्ण्य द्वादशप्रतीम् । प्रत्यपादि स भूपालः पिपासुः सरसीमिव ॥ ८५

त्रिषष्टेः शलाकापुंसां चरित्राणि गुरोर्मुखात् । श्रावं श्रावं जैनधर्मैकरूढमयं व्यधात् ॥ ८६

§१८. शुद्धसम्यक्त्वपूतात्मा महानवमीपर्वणि । कुमारपालभूपाल आभिगादिभिरास्यत ॥ ८७

देवी कंटेश्वरी गोत्रदेवी स्वं भाव्यमीहते । एकं छागशतं चैको महिषः प्रतिपद्दिने ॥ ८८

एतावदेव द्विगुणं द्वितीये दिवसे पुनः । तृतीये त्रिगुणं यावन्नवमे नव संगुणम् ॥ ८९

तदुक्तं हेमसूरिभ्यस्तैः साम्नाऽभ्यर्थिता च सा । नवाहं यावदादत्स्व भोगं छागादिमूल्यजम् ॥ ३९०

कर्पूरागुरुपीयूषैः प्रीयन्ते खलु देवताः । राक्षसा एव तुष्यन्ति मांसशोणितकीकसैः ॥ ९१

इत्यमुक्ताऽपि साम्नाऽसौ न तुतोष यदा सुरी । कीलनं यन्त्रणं भोरबन्धनं दर्शितं तदा ॥ ९२

शान्ताऽप्यथैकदा चाटुमांसाहारमयाचत । भवनान्तस्ततस्तस्याः क्षेपिता महिषैडकाः ॥ ९३

देवी कदर्थिता सर्वां रात्रिं मूत्रमलस्रवैः । पुरोहितादयः सर्वे बभूवुर्मुद्रिताननाः ॥ ९४

श्रीहेमसूरिध्यानेन स्वभावप्रीणिता सुरी । सांनिध्यकारिणी जाता यदूचे केनचिन्नृपः ॥ ९५

या पूर्वं नवमीमहेषु महिषस्कन्धप्रुटत्कीकस-
[4]त्राट्कारैरजनिष्ट कर्णकटुकैः कण्टेश्वरी नश्वरी ।
सा पीयूषपराङ्मुखी रसयति श्रीहेमचन्द्रप्रभो-
र्गीतं मारिनिवारि संप्रति नृपद्वारि स्थिता सुस्थिता ॥ ९६

आज्ञा-यत्नेन वित्तेन त्रिधा वीरः स भूपतिः । अमारिघोषणां चक्रे वत्सराणि चतुर्दश ॥ ९७

§१९. सुपकानेकदा भूपो भुञ्जानो घृतपूरकान् । मांसास्वादमनुस्मृत्य प्रभूनेत्य [5]व्यजिज्ञपत् ॥ ९८

युज्यते वा न वाऽस्माकं घृतपूरकभोजनम् । विज्ञाय तदभिप्रायं प्रभवोऽपि बभाषिरे ॥ ९९

वणिग्-ब्राह्मणयोर्युक्तं जातिभावाददूषितम् । कृतमांसाकृत्यागस्य क्षत्रियस्य तु वर्जितम् ॥ ४००

प्रायश्चित्ते ततस्तस्य द्वात्रिंशद्दन्तसंख्यया । विहारानेकपन्थेन द्वात्रिंशनमचीकरत् ॥ ४०१

---

1 B तदेतानी । 2 B प्राणायामविकस्वरः । 3 B क्ष्मापतेः प्राप्तो । 4 A °त्त्राटरै° । 5 A प्रभून्नित्यव्यजिज्ञपत् ।

पुरा द्रव्ये हृते राजा मूषको यद् व्यपद्यत । तेने तेनास्य शुद्ध्यर्थं विहारो मूषकाभिधः ॥ ४०२

करम्भं भोजितः श्रेष्ठिवध्वा यत् त्रिदिनोषितः । करम्भाभिधया चैत्यं तस्याः श्रेयःकृतेऽभवत् ॥ ४०३

सपादलक्षदेशे च जायया शिरसार्पिताम् । यूकां कोऽपि वणिक् पाणौ मृदित्वा सत्त्वमारयत् ॥ ४०४

अमारिघोषणापभ्रकुलेनानीय पत्तने । मुमुजे सोऽर्पितस्वेन प्राप्यादेशं प्रभोरिति ॥ ४०५

सर्वस्वेन तदीयेन तद्दण्डपदयुक्तितः । यूकाविहार इत्येवं कारितं कीर्तनं नवम् ॥ युग्मम् ॥ ४०६

स्तम्भतीर्थे यत्र चैत्ये प्रभोर्दीक्षाक्षणोऽभवत् । तत्र रत्नमयं बिम्बं जीर्णोद्धारश्च कारितः ॥ ४०७

कुर्वतेति चतुश्चत्वारिंशदग्राणि भूभुजा । विधापितानि चैत्यानि चतुर्दशशतानि वै ॥ ४०८

द्वासप्ततिलक्षमानपट्टकस्फाटनानुगे । विहिते रुदतीवित्तमोचने पण्डितैः स्तुतः ॥ ४०९

न यन्मुक्तं पूर्वं रघु-नहुष-नाभाक-भरत-
प्रभृत्युर्वीनाथैः कृतकृतयुगोत्पत्तिभिरपि ।
विमुञ्चन् सन्तोषात् तदपि रुदतीवित्तमधुना
कुमारक्ष्मापाल ! त्वमिह महतां मस्तकमणिः ॥ ४१०

श्रुत्वा श्रीहेमचन्द्रोऽपि परमानन्दमुद्वहन् । पुण्यानुमोदनापूर्वं पपाठ नृपतेः पुरः ॥ ११

'अपुत्राणां धनं गृह्णन् पुत्रो भवति पार्थिवः ।
त्वं तु सन्तोषतो मुञ्चन् सत्यं राजपितामहः ॥' १२

§२०. गण्डः श्रीसोमनाथस्य विहारे नृपतेर्वसन् । अपराधेन केनापि पदभ्रष्टो व्यधीयत ॥ १३

विषीदन् पत्तनं प्राप्य [1]द्वारावलग्नकोपमः । षोढावश्यकपूतात्मा प्रभून् सेवेऽभिरन्तरम् ॥ १४

एकदाऽवसरं प्राप्य चतुर्मासकपारणे[2] । विधाय द्वादशावर्तवन्दनामिदमब्रवीत् ॥ १५

चतुर्मासीमासीत् तव पदयुगं नाथ निकषा
कषायप्रध्वंसाद् विकृतिपरिहारव्रतमिदम् ।
इदानीमभ्युद्यन्निजचरणनिर्लोठितकले
जलक्लिन्नैरन्नैर्मुनितिलक ! वृत्तिर्भवतु नः ॥ १६

श्रुत्वा काक्वामिमां तस्य निजधर्मानुरोधिनीम् । प्रभुसङ्केततो राज्ञा पुनः स्वपदभाक् कृतः ॥ १७

§२१. राज्ये[3] श्रीसिद्धभूभर्तुर्वामराशिर्द्विजः पुरा । पाण्डित्यस्पर्धया तत्र काशीतः समुपेयिवान् ॥ १८

असहिष्णुः प्रतिष्ठायाः प्रभूणां जातिवैरतः । प्रत्यक्षं सोऽन्यदाऽवोचत् शुक्तोद्गारसमं वचः ॥ १९

यूकालक्षशतावलीवलवलल्लोलोल्लसत्कम्बलो
दन्तानां मलमण्डलीपरिचयाद् दुर्गन्धरुद्धाननः ।
नासावंशनिरोधनाद् गिणगिणत्पाठप्रतिष्ठाविधिः
सोऽयं हेमडसेवडः पिलपिलत्खल्लिः समागच्छति ॥ ४२०

श्रुत्वाप्यतत्त्वतो भावत्कैः[5] पशुभिरेत्यत[6] । पूर्वं त्रिलोचनमिति किं नाधीतं विपश्चिते ॥ २१

अत इत्थं प्रयोक्तव्यं सोऽयं सेवडहेमडः । इति वैदुष्यकुन्ताग्रनुन्नो न्यूनमनाः कृतः ॥ २२

कुमारपालभूपालराज्ये शस्त्रवधो न हि । इति सोऽपि पदभ्रष्टो वर्तते कणभिक्षया ॥ २३

अन्यदाऽऽबालभूपालं योगशास्त्रं पदे पदे । पठ्यमानं समाकर्ण्य सकर्णः स्पष्टमब्रवीत् ॥ २४

---

† एतद्‌द्विदण्डान्तर्गत पाठ पतित B आदर्शे । 1 B °पर्वणे । 2 A राज्ञ । 3 A मत्तोद्गार° । 4 B चलचल° । 5 B भेदच्छिद्यैः । 6 B °रात्यत ।

**आतङ्ककारणमकारणदारुणानां वक्रेण गालिगरलं निरगालि येषाम् ।**
**तेषां जटाधरफटाधरमण्डलानां श्रीयोगशास्त्रवचनामृतमुज्जिहीते ॥** २५

श्रुत्वेत्यमृतसंवादि वचः शान्तान्तरोष्मभिः । प्रभुभिर्द्विगुणा वृत्तिः पुनस्तस्मै प्रसादिता ॥ २६
§.२२ अन्यदा मागधौ कौचित् स्पर्धमानौ स्वविद्यया । सुराष्ट्रादेशतः प्राप्तौ श्रीपत्तनमहापुरम् ॥ २७
प्रभुभिः श्लाघ्यते यो हि स एव विभुरावयोः । मार्गोपक्षयदाताऽन्यो यस्तु हारयति ध्रुवम् ॥ २८
प्राप्ते एकस्तयोर्मध्ये देशनावसरे प्रभोः । लक्ष्मीवन्तः पण्डिताश्च दक्षा स्पष्टमुदाहरत् ॥ २९

**लच्छि वाणि मुहकाणि ए पई भागी मुहमरउं ।**
**हेमसूरिअत्थाणि जे ईसर ते पंडिया ॥** ४३०

द्वितीयो भूपतेश्चैत्ये विधायारात्रिकक्षणम् । नमस्यतः पृष्ठहस्ते दत्ते प्रभुभिरब्रवीत् ॥ ३१

**हेम तुहाला कर मरउं जेहं अचब्भूय रिद्धि ।**
**जे चापं हेठा मुहा ताहं ऊपहरी सिद्धि ॥** ३२

अतुच्छिष्टेन भूपालो वचसा तस्य रञ्जितः । भूयोऽपि पाठयामास त्रिरुक्ते मागधोऽभणत् ॥ ३३
पठिते पठिते लक्षं किं दास्यसि नृपस्ततः[2] । लक्षत्रयं त्रिरुक्तत्वात् स तस्मै तत्क्षणाददात् ॥ ३४
समये बहुपाठोऽपि श्रेयानिति स चारणः । सर्वार्थसाधकं मौनमिति व्यर्थममन्यत ॥ ३५
§२३. अन्यदा जगदानृण्यचिकीर्षाकौतुकी नृपः । प्रभुं विज्ञापयामास सद्यः सौवर्णसिद्धये ॥ ३६
ततः श्रीदेवचन्द्राह्वान् सुगुरून् प्रभवोऽपि हि । श्रीसङ्घ-कुमरक्ष्मापविज्ञप्तिभ्यामजूहवन् ॥ ३७
तेऽपि तीव्रव्रताः किंचित् सङ्घकार्यमिति द्रुतम् । यथाविधि विहारेण महात्मानः प्रतस्थिरे ॥ ३८
प्रवेशोत्सवसामग्रीं भूपो यावत् प्रचक्रमे । सूरयः पौषधागारं शीघ्रं तावत् समाययुः ॥ ३९
नृपतिप्रमुखानेकश्रावकैः सहितः प्रभुः । विदधे द्वादशावर्तवन्दनां विनयान्विताम् ॥ ४४०
*तस्मिन्नवसरे श्राद्धः श्रीकपर्द्यपि मन्त्रिराट् । उत्तरासङ्गतो भूमिं प्रमार्ज्यादत्त वन्दनाम् ॥ ४१
*अदृष्टपूर्व आचारः क इत्युक्ते महीभुजा । सिद्धान्तविधिरेषोऽपीत्याह श्रीगुरुरुत्तरम् ॥ ४२
श्रुतश्रौतोपदेशौ तौ गुरुभिः सूरि-भूपती । सङ्घकार्यं द्रुतं पृष्टौ न स्मृथाः क्वापि धीधनाः ॥ ४३
विसृज्य तावपि क्षिप्रं सभां जवनिकान्तरे । ययाचतुः स्वर्णसिद्धिं निपत्य गुरुपादयोः ॥ ४४
श्रीहेमसूरयः प्राहुर्भगवन् ! शैशवे मम । काष्ठभारिकतो वल्लीरसबिन्दुरुपाददे ॥ ४५
तेनाभ्यक्तं ताम्रखण्डं संयोगाज्जातवेदसः । सुवर्णं तत्क्षणाज्जातं सिद्धनिष्ठीवनादिव ॥ ४६
वल्ल्यादिरूपतां तस्या नामसङ्केतनादिकम् । करोतु क्षितिपः क्षिप्रं धरणीमनृणामयम् ॥ ४७
कुपिता गुरवः प्राहुः पापापसर दूरतः । न योग्य इत्यपास्थामुं पादलग्नमिवोरगम् ॥ ४८
अग्रे मुद्गरसप्रायविद्यया त्वमजीर्णभाक् । मन्दाग्नेर्मोदकां विद्यां कथमेतां ददामि ते ॥ ४९
शिष्यभाग्रहतस्तस्मादपथ्यादिव रोगिणम् । निवार्य सूरयो भूरिवैराग्या नृपमभ्यधुः ॥ ४५०
जिनचैत्यालंकृतक्ष्मा-मारिनिर्घाटनादिभिः । सिद्धे लोकद्वये राजन् ! किमाधिक्यमभीप्ससि ॥ ५१
किं च ते जगदानृण्यकारिण्यै हेमसिद्धये । न भाग्यमस्ति तेनात्र युक्ता भावानुमोदना ॥ ५२
इत्यादिरूप इत्युक्त्वैव विहारं सूरयो व्यधुः । तत्त्वकार्ये न मुह्यन्ति यतो निबिडबुद्धयः ॥ ५३

---

1 B प्रस्थेरे । ‖ आदर्शे–१ तुहारा. २ मरूं. ३ जह. ४ चंपइ हिठा. ५ तह. 2 A दास्यति नृपस्ततः ।
* एतावच्छ्लोकद्वयं नोपलभ्यते B आदर्शे ।

§२४. अन्यदा श्रीवीतभयपत्तनस्थलगर्भिताम् । महर्षिणा केवलिना कपिलेन प्रतिष्ठिताम् ॥ ५४
विद्युन्मालिप्रतिमायाः प्रतिच्छन्देन मञ्जुना । चण्डप्रद्योतभूपेन कारितां चेटिकाकृते ॥ ५५
सप्तहस्तोच्छ्रितां जात्यचान्दनीं कुमरो नृपः । देवाधिदेवप्रतिमां शुश्राव सुगुरोर्मुखात् ॥ ५६
—त्रिभिर्विशेषकम् ॥
गुरोर्वचनतः कार्यसिद्धिं निश्चित्य भूपतिः । तत्कालप्रहितानेकसामन्तैर्भक्तियुक्तितः ॥ ५७
खानयित्वा वीतभयस्थलमुत्तममार्गतः । देवाधिदेवप्रतिमामव्यङ्गां निरकासयत् ॥ —युग्मम् ॥ ५८
नरेन्द्रादेशतः सर्वग्रामाकरपुरादिषु । रथयात्रास्विव स्वैरं जायन्ते स्म महोत्सवाः ॥ ५९
भाविकैः क्रियमाणेषु पुरा सङ्गीतकादिषु । प्रभावनामयं विश्वं सृजन्ती प्रतिमाऽचलत् ॥ ४६०
समानं तेन भूपेन कृतानुकृतमोत्सवा (?) । रथाधिरूढा प्रतिमा प्रापाणहिल्लपत्तनम् ॥ ६१
स्वसौधासन्नभूपीठे प्रासादे स्फाटिके नृपः । निवेश्य पूजयामास त्रिकालं कलिकीलकः[1] ॥ ६२

§२५. अथ श्रीकुमरक्ष्मापः स्वजनुःफललिप्सया । शत्रुञ्जयोज्जयन्तादितीर्थयात्रां प्रचक्रमे ॥ ६३
श्रीहेमचन्द्रसूरीन्द्रैः श्रीकुमारनरेशितुः । सङ्घाधिपत्यतिलकं विदधे महतो महान् ॥ ६४
देवालयस्य प्रस्थानमुहूर्ते स्थापिते सति । मिमिलुः परितः सङ्घा धर्मा इव चतुर्विधाः ॥ ६५
कुमारपालभूपालो धन्यंमन्यमनोरथः । यावत् समग्रसामग्रीमप्यग्रमनसाऽकरोत् ॥ ६६
तावद्देशान्तरायातं चरयुग्मं व्यजिज्ञपत् । श्रीकर्णस्त्वामुपैतीति नृपो डाहलदेशराट् ॥ ६७
आकर्ण्य कर्णशूलाभमिति वाक्यमिलापतिः । खेददन्तुरभालो द्राक् मन्त्रिवाग्भटमभ्यधात् ॥ ६८
प्राप्तायां यदि सामग्र्यां धर्मं कर्तुं न चाप्नुमः । निष्पन्नायां रसवत्यां तदिदं मुखवीक्षणम् ॥ ६९
शुशोच गुरुपादाग्रे स्वमधन्यतमं नृपः । स्वामिन् ! रङ्कस्य जीर्येत किं भुक्तिश्चक्रवर्तिनः ॥ ४७०
सूरीन्द्रा अपि तत्कालमाकलय्य लग्नादिकम् । आदिशन् द्वादशे यामे निवृत्तिस्ते भविष्यति ॥ ७१
किंकर्तव्यतया मूढो यावदास्ते नराधिपः । तावन्निर्णीतवेलायां चरयुग्ममुपागमत् ॥ ७२
*दिवंगतश्च श्रीकर्ण इति सद्यो निवेदिते । नृपस्ताम्बूलमुत्सृज्य कथमित्यनुयुक्तवान् ॥ ७३
निशि प्रयाणं कुर्वाणः श्रीकर्णः कुम्भिपृष्ठभाक् । जितकाशिमदावेशान्निद्रामुद्रितलोचनः ॥ ७४
कण्ठावलम्बिसौवर्णशृङ्खलेन गरीयसा । न्यग्रोधपादलग्नेनोल्लम्बितः पञ्चतामगात् ॥ ७५
कलौ त्वमेव सर्वज्ञः स्तुवन्निति पुनः पुनः । अक्षेपेण महीपालो जिनयात्रामसूत्रयत् ॥ ७६
दुकूलाच्छादितक्षोणीतलश्लीलागतिश्रमः । नृपः श्रीहेमसूरीणां दत्तहस्तावलम्बनः ॥ ७७
पदे पदे महादानसत्रागारमहोत्सवैः । धर्मैकच्छत्रतां चक्रे शक्रः कल्याणकेष्विव ॥ युग्मम् ॥ ७८
अकुतोभयताहूतपुरुहूतसमृद्धिभिः । किल सङ्घमिषात् स्वर्गो भूमण्डलमवातरत् ॥ ७९
द्विषोपदिश्यमानाध्वा प्रभुश्रीहेमसूरिभिः । धन्धुकनगरं प्राप नृपः पापव्यपोहधीः ॥ ४८०
स्वयं विधापिते तत्र प्रभोर्जन्मगृहावनौ । सप्तदशहस्तमाने विहारे झोलिकाभिधे ॥ ८१
नृपः प्रभावनां कुर्वन् संयमी स्वेन्द्रियाणिव । उपसर्गकृतो विप्रांश्चक्रे विषयताडितान् ॥ युग्मम् ॥ ८२
रङ्गवर्धापनापूर्वं प्राप्तः शत्रुञ्जये गिरौ । दृष्टे नाभेयबिम्बे तु योगीवानन्दमुद्वहन् ॥ ८३
दुःखक्षयश्च मे कर्मक्षयश्च भवतादिना[2] । दण्डकप्रणिधानेन त्रिपाठेन[3] भुवं स्पृशन् ॥ ८४
यावदास्ते नृपस्तत्र पाठतस्तुतिसंततौ । समयज्ञस्तदोवाच चारणो वाक्यचञ्चुरः ॥ विशेषकम् ॥ ८५

1 A कलिकीलन । * नोपलभ्यते श्लोक एष A आदर्शे । 2 B भवतादिति । 3 B त्रिपाठेन ।

इकह फूलह माटि देइ जु नरसुरसिवसुहं[1]।
तिणिस्यूं[2] केही साटि कटरे! भोलिम जिणवरहं[3] ॥ ८६

श्रुत्वेति भूयो भूमीन्द्रः पाठयामास चारणम्। ददौ नवसहस्राणि नवकृत्व उदीरिते ॥ ८७

§२६. देवकोशप्रभृत्यर्थमेकदा रङ्गमण्डपे। अन्तराले धृतं स्थालं ससत्त्वेन महीभुजा ॥ ८८

हारकेयूरदीनारमुद्रिकाकुण्डलादिभिः। भविकैर्भावनासारं क्षिप्यमाणैर्विभूषणैः ॥ ८९॥

कश्चिदाजन्मदारिद्री भावनार्द्रमनास्तदा। जीर्णचेलः पोट्टलिकश्चिक्षेप द्रम्मपञ्चकम् ॥ ४९०

तद्विलोक्य प्रसन्नास्याः प्रभुश्रीहेमसूरयः। मस्तकं धूनयामासुः पूरिता इव तद्गुणैः ॥ ९१

तदा चौलुक्यराजेन्द्रः प्रभूनापृष्ट सादरम्। लुप्तदानेन भगवन्नत्र[4] का वश्चमत्कृतिः ॥ ९२

बभाषे प्रभुभिर्भूप! शृणु यच्चित्रकारणम्। व्ययन्ति लक्ष्ममेवेह ये कोटीन्द्राः स्वभावतः ॥ ९३

लक्षाधिपतयश्चात्र सहस्राणि वितेनिरे। महातीर्थे पुनन्ति स्वं सहस्रेशाः शतैः पुनः ॥ ९४॥

राजन्! पोट्टलिकश्चायं दारिद्र्यद्रुमकाननम्। ददावनर्घ्यफलदं सर्वस्वं द्रम्मपञ्चकम् ॥ ९५

ययाचे तमथो भूपः पुण्यं लक्षादिदानतः। स च सन्तोषपतो नैच्छद् विस्मितो भूपतिस्ततः ॥ ९६

बहुप्रकारं श्लाघित्वा मन्वानस्तुल्यधर्मिणम्। कृतपुण्यं पोट्टलिकं विससर्ज कृतादरम् ॥ ९७

कृत्वा प्रभावनामलद्भुतां शत्रुञ्जये गिरौ। ययौ रैवतके राजा राजमानो गुरुश्रिया ॥ ९८

तत्र चाकस्मिके छत्रशिलाकम्पे समुत्थिते। [5]पौराणविदुराः सूरिप्रवरा नृपतिं जगुः ॥ ९९॥

इयं छत्रशिला राजन्! समकं समुपेतयोः। द्वयोः पुण्यवतोः शीर्षे किलाकस्मात् पतिष्यति ॥ ५००

इत्यत्र सम्प्रदायोऽस्ति तदावां पुण्यवत्तमौ। यदीदं सत्यतामेति दुर्यशो दुर्धरं तदा ॥ ५०१

तत् त्वमेव महीपाल! नमस्कुरु जिनाधिपम्। भावपूजावदस्माकं नतिरप्यस्तु भावतः ॥ ५०२

नृपेण पुनरभ्यर्थ्य ससङ्घाः प्रभवस्तदा। छत्रशैलेयमार्गेण प्रहिता हितभक्तिना ॥ ५०३

स्नपनावसरे स्थित्वा पर्वताधः स्वयं नृपः। आशैवेयजिनं श्रेण्या स्नात्रकर्तृनधारयत् ॥ ५०४॥

स्नात्रारात्रिकमाङ्गल्यदीपप्रभृतिकक्रियाम्। करात्करेण सञ्चार्य स्वयं चक्रे नराधिपः ॥ ५०५

कृत्वाऽऽरात्रिकमाङ्गल्यं नृपोऽन्यस्मै प्रयच्छति। सोऽप्यन्यस्मै यावदन्ये जिनपादान्तिकेऽमुचन् ॥ ५०६

भावनार्जितसत्पुण्यफलस्येव भवान्तरे। सर्वोपाधिसमृद्धायाः सामग्र्याः किमु दुष्करम् ॥ ५०७

यात्रामासूत्र्य सुत्रामसमृद्धिस्पर्धिनीमसौ। [6]संघैरामन्त्रयामास पृथ्वीं पृथुपराक्रमः ॥ ५०८

अथ शङ्कापनोदार्थं जीर्णप्राकारवर्त्मना। मुक्त्वा छत्रशिलामार्गं नव्यपद्याविधौ नृपः ॥ ५०९॥

पर्वतोपत्यकामारादाश्रीजिनपदाम्बुजम्। ददौ महाध्वजं स्फूर्जद्दुकूलपटनिर्मितम् ॥ ५१०

आदिश्य वाग्भटं मन्त्रिराजं राजन्वतीं भुवम्। स्थापयन् प्राणमत् तीर्थमालामम्लानवैभवः ॥ ११

लक्षांस्त्रिषष्टिं द्रम्माणां पद्यानिर्माणकर्म्मणि। व्ययीचकार मन्त्रीन्द्रो गणना क गरीयसाम् ॥ १२

§२७. नृपं संसुरनामानं विग्रहीतुं स राणकम्। सुराष्ट्रामण्डले प्रैषीदयोदयनमन्त्रिणम् ॥ १३

चतुरङ्गचमूसारः सचिवो दलनायकः। वर्धमानपुरं प्राप राज्यसारं हि मन्त्रिणः ॥ १४॥

तत्राभ्यर्णतया शत्रुञ्जयं तीर्थं विवन्दिषुः। सैन्यं तत्रैव संस्थाप्य स्वयं नाभेयमानमत् ॥ १५

धृतधौतोत्तरासङ्गः सङ्गमुक्ताशयो यदा। सपर्यां कर्तुमारेभे श्रीनाभेयजिनेशितुः ॥ १६

तावन्नक्षत्रमालादीपाद् वर्त्तिमपाहरत्। [7]मूषकः स्वर्णशलाकामिव[8] यत्कृत्यमूढधीः ॥ १७

---

1 B मुरई। 2 B सर्व। 3 B °वरह। 4 B भगवन्न। 5 A पौराणि°। 6 A मंत्री°। 7 B मूषिकः। 8 B °शिलाका°।

काष्ठप्रासादविवरे तां ज्वलन्तीं यदाऽक्षिपत् । मन्त्री समाधिभङ्गेन स्थानयामास तां तत ॥ १८
चित्तेऽथ तर्कयामास मन्त्री मतिमतां वर । प्रासादेऽस्मिन् काष्ठमये नैतोऽय सङ्कटो महान् ॥ १९
ज्वलन्तीं यद्यसौ वर्त्तिमित्यमादाय कर्हिचित् । रह सञ्चारयेत् क्वापि दारुणं दारुणि क्षणम् ॥ ५२०
मिथ संसज्य काष्ठौघे प्रासादोऽयं महानपि । तदा भज्येत निर्भाग्यवतामिव मनोरथ ॥ २१
तत कारयितव्योऽसौ प्रासादोऽश्ममयो मया । चिरं च मन्त्रिण सन्तु वर्धमाना[1] मनोरथा ॥ २२
मन्त्री चर्यैकभक्तत्वप्रमुखानथ मन्त्रिराट् । जीर्णोद्धाराय जग्राहाभिग्रहाञ्जिनपादयो ॥ २३
चलित सर्वकार्येभ्य स्वामिकार्यं नियोगिनाम् । विमृशन्निति मन्त्रीश स्कन्धावारमुपेयिवान् ॥ २४
अन्यमित्रीणतां भेजे भेजे नृपबलैस्तत । श्रीमानुदयनो योद्धुं स्वयमुत्तस्थिवानय ॥ २५
अरातिप्रेरितापारप्रहारभरजर्जर । नीत स्वशिबिरे मन्त्री षण्ठैरुत्पाद्य यत्नत ॥ २६
स्वामिकार्ये गते[2] प्राणैर्धन्यमन्योऽपि धीसख । शुश्रुवे नेत्रयोरश्रु वारि निर्झरणादिव ॥ २७
किं किञ्चिदन्त शल्य ते मन्त्रिन् ! दोदूयते हृदि । पृष्टे समीपगैरित्थं सोऽभ्युवाच सगद्गदम् ॥ २८
श्रीशत्रुञ्जयतीर्थे च चैत्ये शकुनिकाभिधे । जीर्णोद्धारचिकीर्षोर्मे देवर्णमवशिष्यते ॥ २९
तैरूचे नन्दनौ मन्त्रिन् ! वाग्भटाऽऽम्रभटौ तव । गृहीताभिग्रहौ तीर्थद्वयीमुद्धरिष्यत ॥ ५३०
पर्यन्ताराधनाकामी कृत्वा देवार्चनाविधिम्[3] । मुनिमन्वेषयामास साक्षीकार समाधये ॥ ३१
मुनेरभावतो षण्ठ तद्वेषमुपनीय ते । तस्मै निवेदयामासुस्तन्मुनीभावत स च ॥ ३२
ललाट घट्टयस्तस्य पादयोरादिदेवनत् । चक्रे तत्साक्षिकीं मन्त्र्याराधना धिषणाधन ॥ ३३
मुदिते मन्त्रिणि प्राप्ते परलोकपथीनताम् । षण्ठ प्रधानैरुक्तोऽपि यतिवेष न चामुचत् ॥ ३४
चन्दनेनेव निम्बद्रुर्मन्त्रिवासनया परम् । वासित पालयामास चारित्र विमलाशये ॥ ३५
मन्त्रिणोऽभिग्रहग्राही श्रीकरीधारक स च । व्यावृत्य शेषकार्यार्थी श्रीपत्तनमुपेयिवान् ॥ ३६
राजकार्याकुलत्वेन प्रस्तावाप्राप्तित स तु । न चापि कृतवान् स्वाभिप्राय सचिवपुत्रयो ॥ ३७
चिरतप कृशीभूत षण्ठो देशालिकोऽन्यदा । वाग्भटाऽऽम्रभटयोस्तत्तीर्थोद्धारक्षण जगौ ॥ ३८
गृहीताभिग्रहौ तौ तु तीर्थोद्धाराय तत्क्षणम् । प्रेषयामासतु सूत्रधारान् शत्रुञ्जये गिरौ ॥ ३९
वर्षद्वयेन निष्पन्ने प्रासादे प्रेषित पुमान् । वर्धापनिकया लेभे जिह्वा हेममयीं तत ॥ ५४०
क्षणेन पुनरागत्य द्वितीयो मानवोऽवदत् । प्रासाद स्फुटितो मन्त्रिन् ! इति वज्रोपमां गिरम् ॥ ४१
ततश्च वाग्भटो धर्मसुभट स्थिरकर्मधी । आपृच्छ्य कुमरक्ष्माप दृढाभिग्रहसाग्रह ॥ ४२
कपर्दिनि महामात्ये निजमुद्रा नियोज्य च । चतु सहस्रवाहाना प्रतस्थे शकुने शुभे ॥ ४३
शत्रुञ्जयोपत्यकाया सामग्रीपूरणेक्षणी । श्रीवाग्भटपुरमिति नव पुरमवासयत् ॥ ४४
दृढे दृढतरे कर्मस्थायेऽपि विहिते सति । स्फुटिते बहुशश्चैत्ये मन्त्री पप्रच्छ शिल्पिन ॥ ४५
प्रासादे सभ्रमे वायु प्रविष्टो न निरेति यत् । तेन स्फुटति देवाय पक्वालुङ्कपिण्डवत् ॥ ४६
भ्रमहीने पुनश्चैत्ये दूषण निरपत्यता । श्रुत्वेति तत्त्वदृग् मन्त्री मन्त्रयामास चेतसा ॥ ४७
धर्मसन्तानमेवास्तु गत्वरेण कुलेन किम् । श्रीमता भरतादीनां पङ्क्तौ भवतु नाम मे ॥ ४८
दीर्घदृष्ट्या विचार्येति वाग्भटो निजवाग्भट । भ्रमभित्त्योरन्तराल शिलापूरमपूपुरत् ॥ ४९
वर्षत्रयेण सञ्जाते विहारे कलशावधौ[5] । श्रीपत्तनादुपानीय श्रीमत्सङ्घं चतुर्विधम् ॥ ५५०
श्रीविक्रमनृपाद्वर्षे रुद्रार्क(१२११)प्रमितैर्गतै । प्रतिष्ठाप्य ध्वजारोप कारयामास मन्त्रिराट् ॥ ५१

1 B वर्धमान° । 2 B गते । 3 B द्वितयी° । 4 A °चैनावधि । 5 B कलशावधि ।

श्रीशैलमयबिम्बस्य मूर्तं यश इव स्वकम् । दध्रे परिकरं तत्र मम्माणीयखनीभवम् ॥ ५२
श्रीवाग्भटपुरे राजपितुर्नाम्ना विधापिते । प्रासादे स्थापयामास पार्श्वनाथं सविस्तरम् ॥ ५३
चतुर्विंशतिमारामांस्तीर्थपूजाकृते नृपः । ग्रासवस्त्रादिकं चान्यद् देवलोकाय दत्तवान् ॥ ५४
सप्तषष्टियुतामेकां कोटिं वाग्भटमन्त्रिराट् । तीर्थोद्धारे व्ययीचक्रे प्रतिष्ठायां पुनः पृथक् ॥ ५५
§२८. अथाऽऽम्रभटनामा श्रीभृगुकच्छपुरावनौ । शकुनीचैत्यमुद्दर्तुमारेभे श्रेयसे पितुः ॥ ५६॥
नर्मदादिमहातीर्थव्यन्तरोपद्रवाधया । शिलान्यासे कृते गर्ता मिमेलामूलचूलिकम् ॥ ५७
अकस्मान्मिलिते गर्ते व्यापृता भूमिशोधने । कलौ गुणा इव सतां छादिताः कर्मकारिणः ॥ ५८
पापार्जनमिदं पुण्यच्छलेनेति दयापरः । सपुत्रभार्यो मन्त्रीशस्तत्र झम्पां स्वयं ददौ ॥ ५९
सहसाऽतिशयात् तस्य सन्तुष्टा नर्मदासुरी । निराचकार प्रत्यूहं दीपिकेव तमोभरम् ॥ ५६०
वस्त्राभरणसन्मानैः सन्तोष्य स्थपतीनथ । शैलानुवादं प्रासादं कलशान्तमचीकरत् ॥ ६१॥
सङ्घं सनृपतिं श्रीमद्धेमसूरिपुरस्सरम् । श्रीपत्तनादुपानीयार्हच्चैत्यं प्रत्यतिष्ठिपत् ॥ ६२
सङ्घस्यातुच्छवात्सल्यं कृत्वा स्वीयं च मन्दिरम् । अर्थिभिर्मुषितं चक्रे ध्वजारोपाय सञ्चरन् ॥ ६३
सुव्रतस्वामिनश्चैत्ये हयांतिकर्पेण धीसखः । ध्वजं महाध्वजोपेतं दत्त्वा लास्यमसूत्रयत् ॥ ६४
आरात्रिकावसराय भूभुजाऽभ्यर्थितः स्वयम् । भद्राय तुरगं दत्त्वा जग्राहारात्रिकं करे ॥ ६५
श्रीमत्कुमारपालेन ललाटे तिलके कृते । द्वास्सप्तत्या नृपैः क्षुप्तचामरच्छत्रविस्तरः ॥ ६६॥
स्थिरीकृतारात्रिकोऽसौ तदैवागतबन्दिने । स्वबाहोः कङ्कणं हैमं ददौ राजपितामहः ॥ ६७
बलात्कारेण बाहुभ्यां धृत्वा कुमरभूपतिः । नीराजना-माङ्गलिक्यप्रदीपं निरपीपदत् ॥ ६८
श्रीसुव्रतजिनं नत्वा गुरूंश्च गुरुभक्तितः । श्रीमन्नीराजनाकर्महेतुं पप्रच्छ भूपतिम् ॥ ६९
द्यूतकारो यथा द्यूते शिरसाऽपि पणायते । अतः परं शिरोदाता तथार्थिभ्यो भवानपि ॥ ५७०
सस्नेहमिति राज्ञोक्ते तद्गुणोद्रेकरञ्जिताः । श्रीहेमगुरवः प्राहुर्विस्मृतान्यस्तुतिव्रताः ॥ ७१॥

*किं कृतेन न यत्र त्वं यत्र त्वं किमसौ कलिः ।*
कलौ चेद् भवतो जन्म कलिरस्तु कृतेन किम् ॥ ७२

अनुमोद्य मनोमोदमेदस्विमनसावुभौ । क्षमापती गतौ सङ्घसहितौ तौ यथागतम् ॥ ७३
अथ तत्रगतानां श्रीप्रभूणां स्वल्पवासरैः । गतः प्रान्तदशामाम्रभटोऽचिन्तितमाधया ॥ ७४
ज्ञात्वा विज्ञप्तितस्तादृग् स्वरूपं प्रभवोऽपि हि । बहुविधं हि कल्याणं कार्मण[1]ध्यानलीलया ॥ ७५॥
प्रतिष्ठावसरे चैत्यशिखरे नृत्यतस्तदा । मिथ्यादृशां देवतानां दोषं [2]द्रुतमबूबुधन् ॥ ७६
सङ्घाधारः प्रयत्नेन रक्षणीयो यथातथा । दयालुतैव च परं जिनशासनजीवितम् ॥ ७७
इति व्योमाध्वनोत्पत्य यशश्चन्द्रेण संयुताः । भृगुकच्छपरिसरं सम्प्राप्ताः प्रभवः क्षणात् ॥ ७८
मूलं मिथ्यादृक्सुरीणां प्रभवः सैन्धवां सुरीम् । अनुनेतुं तस्थिवांसः कायोत्सर्गेण तत्क्षणम् ॥ ७९
दर्पेण सैन्धवा देवी सावहेलं मुखाम्बुजात् । आकृष्य दर्शयामास स्वजिह्वां हेमसूरये ॥ ५८०॥
सरोषमथ सूरीन्द्रः प्रक्षिप्योदूखले कणान् । ताडयामास मुशलप्रहारैर्गणिपाणिना ॥ ८१
निबिडं पीडिता देवी गृह्णन्ती दशनाङ्गुलीः । ब्रुवाणा रक्ष रक्षेति पपात प्रभुपादयोः ॥ ८२
मुञ्चामात्यमिति प्रोक्ते नाहमेकैव दोषभाक् । अस्तोऽयं सर्वदेवीभिः खण्डशः पूर्वमेव च ॥ ८३
इत्यादिदीनवचनामप्येनां रोषदारुणाः । निगृह्य सूरयोऽमात्यं मोचयामासुराशु तम् ॥ ८४

1 B कर्मेति । 2 B मग° ।

प्रातः श्रीसुव्रतस्वामिप्रणिपातसमाहिताः । आसेदिवांसः प्रासादं तुष्टुवुर्जिननायकम् ॥ ८५

संसारार्णवसेतवः शिवपथप्रस्थानदीपाङ्कुरा
विश्वालम्बनयष्टयः परमतव्यामोहकेतूद्गमाः ।
किंचास्माकमनोमतंगजदृढालानैकलीलाजुष-
स्त्रायन्तां नखरश्मयश्चरणयोः श्रीसुव्रतस्वामिनः ॥ ८६

श्रीमदाम्रभटस्सेत्थमुपकृत्य महर्षयः । ययुर्यथागतं लोकहिताशेषप्रवृत्तयः ॥ ८७

वाग्भटाम्रभटामात्यौ चक्राते परमार्हतौ । लाट-कुङ्कणदेशेषु विहारालङ्कृतां भुवम् ॥ ८८

§२९. अथान्यस्मिन्नवसरे श्रीकुमारनरेश्वरः । कामन्दकीमहानीतिशास्त्रं शुश्राव कोविदात् ॥ ८९

'पर्जन्य इव भूतानामाधारः पृथिवीपतिः ।
विकलेऽपि हि पर्जन्ये जीव्यते न तु भूपतौ ॥' ५९०

श्रुत्वेति प्राह 'भूभर्तु रुपम्या तर्हि नीरदः ।' चक्रुः सामाजिकाः सर्वे न्युञ्छनानीयता प्रभोः ॥ ९१

विलोक्यावाङ्मुखं राजा तदानीं तु कपर्दिनम् । न स्वयं चेष्टते क्षेप इत्येकान्ते तमब्रवीत् ॥ ९२

स्वामिन् ! 'उपम्या' शब्दोऽयं सर्वशास्त्रेषु निन्दितः । छन्दानुवर्तिनस्त्वेतेऽभिनन्दन्ति वृथा प्रभुम् ॥ ९३

अराजकं वरं स्वामिन् ! न तु मूर्खो महीपतिः । अकीर्तिस्ते च विद्वेषिमण्डलेषु प्रसर्पति ॥ ९४

उपमेयम्, उपमानम्, औपम्यम्, उपमा तथा । तुल्यार्थवाचकाः शब्दाः शुद्धा व्याकरणेष्वमी ॥ ९५

श्रुत्वेति युक्तोपन्यस्त[1] तद्वाक्यं लज्जितो नृपः । आत्मनोऽध्यायमेकान्ते पाठवेलामचीक्लृपत् ॥ ९६

पश्चाशद् वर्षदेश्योऽपि वर्षेणैकेन भूपतिः । वृत्ति काव्यत्रयं कस्मादप्युपाध्यायतोऽपठत् ॥ ९७

नित्यं पैशुन्यवैदुष्यसामग्र्या पक्षधीर्नृपः । विद्वत्सु विरुदं लेभे श्री वि चा र च तु र्मु खः ॥ ९८

§३०. कदाचिदन्यदा विश्वेश्वरनामा महाकविः । श्रीसोमनाथमुद्दिश्य प्रतस्थे काशिदेशतः ॥ ९९

अणहिल्लपुरे प्राप्तो हेमसूरीन्द्रपर्षदि । ससामन्तनराधीशसेवितं वीक्ष्य तं जगौ ॥ ६००

'पातु वो हेमगोपालः कम्बलं दण्डमुद्वहन् ।' साभिप्रायं भणित्वेति बुधो यावद् विलम्बते ॥ ६०१

नृप निरीक्ष्य सक्रोधं प्रभूणां हीनवर्णनात् । तदिङ्गितज्ञो विज्ञो द्रागुत्तरार्धमुदाहरत् ॥ ६०२

'षड्दर्शनपशुग्रामं चारयन् जैनगोचरे ।' भूपोऽपि हर्षितस्तस्मै तदासनमदापयत् ॥ ६०३

पाण्डित्यगोष्ठीमासूत्र्य प्रभुभिः सह पण्डितः । सुतरां मुमुदे राजमराल इव मानसे ॥ ६०४

रामचन्द्रादिसाधूनां परीक्षार्थमथो बुधः । 'व्यापिद्धेति' समस्यायास्तुरीयं पादमाख्यत ॥ ६०५

रामचन्द्रमुनिर्यावत् प्रकाशं वक्तुमैहत । उत्कल्लोलमनाम्भोधिः श्रीकपर्दी तदाऽवदत् ॥ ६०६

नैतस्याः प्रसृतिद्वयेन सकले शक्येऽपि धातुं दृशौ,
सर्वत्र प्रतिभाव्यते[2] मुखशशिज्योत्स्नावितानैरिषम् ।
इत्थं मध्यगता सखीभिरभितो दृग्मीलनाकेलिषु,
व्यापिद्धा नयने मुखं च रुदती से गर्हते कन्यका ॥ ६०७

पञ्चाशतसहस्राणां मूल्य ग्रैवेयकं नृपः । 'मास्याः पद'मित्यसाक्षिपत् कण्ठे कपर्दिनः ॥ ६०८

इत्यादिदिव्यवैदग्धीस्निग्धचित्तेन भूभुजा । श्लाघ्यमानश्चिरं विश्वेश्वरः कविस्तदादरत् ॥ ६०९

---

1 B °न्यस्तंतद्वाक्यं । 2 B पद° । 3 B सर्वत्रापि च लक्ष्यते ।

कथाशेषः कर्णो धनिजनकृशा काशिनगरी,
सहर्षं हेपन्ते हरिहरिति हम्मीरहरयः ।
सरस्वत्याश्लेषप्रणयलवणोदप्रणयिनि,
प्रभासस्य क्षेत्रे मम हृदयमुत्कण्ठितमतः ॥ ६१०

इत्युक्तिव्यक्तिवैचित्रीचमत्कृतहृदा तदा । सत्कृतो भूभुजाऽगच्छद् यथास्थानं विशारदः ॥ ११

§३१. सपादलक्षभूभर्तुर्भुक्तौ नागपुरे पुरे । चिकारयिषया जैनचैत्यस्य कुमरो नृपः ॥ १२
दूतेन ज्ञापयामास श्रीमद्वीसलभूपतेः । तस्मिन् भूमिमददाने जिनधर्मविरोधतः ॥ १३
कुमारपालभूपालः स्वयमागत्य सैन्ययुक् । रुरोध श्रीनागपुरं बिले तार्क्ष्य इवोरगम् ॥ १४
तदन्तः कुमरो नाम महामाण्डलिको बली । चिरं बहिःस्थसैन्येन रणं चक्रे शराशरि ॥ १५
नागानुभावतो दुर्गं ग्रहीतुं विग्रहेण तम् । न शेके गूर्जरेशोऽपि तदैको मागधोऽभणत् ॥ १६

एह[1] न होइ घर धार सार पामारनरिन्दह ।
एह[2] न होइ उज्जेणि जु पइं भंजीय[3] बलचंडह ।
मंडवगढ[4] नहु[5] एह जु पइं असिवर धंघोलीय[6] ।
उच्छुयाण[7] नहु एउ[8] जु पइं[9] निवभुयपलि तोलीय[10] ।
नागपुरह एहु[11] चालुक्कवइ जइ वेढिउ बहुदिहि घणुं[12] ।
ता नमइ न कुंमरमंडलीय वाल एकु[13] भमुहह तणुं[14] ॥ १७

ततः सरोषो भूपालो महारम्भेण सर्वतः । आन्त्वा चतुःप्रतोलीषु सुमुचेऽभ्यन्तरादिभिः ॥ १८
कुमरोऽल्पबलात्माऽपि न मुमोच स्वसाहसम् । चारणोऽपि द्वितीयेऽह्नि राज्ञोऽग्रे पुनरब्रवीत् ॥ १९

पुट्ठाउट्टिहिं फेरु फिर 'तुं दिणयर' देउ जिम ।
जण[1] कंचणगिरि मेरु कुमरह कुमरप्पाल तिम[2] ॥ ६२०

स सुसोत्थापितः सिंह इव भूपालपुङ्गवः । दुर्गं निःपीडयामास पक्वाम्रफलं यथा ॥ २१
तदा माण्डलिको भग्नशौर्यः कातरमानसः । लिखित्वा ज्ञापयामास युक्त्या शाकम्भरीपतेः ॥ २२

चूयदलं परिपक्कं विहलिय साहा सुनिब्भरं पवणं ।
डाला ढुल्लणसीला न याणिमो किं पि निव्वडइ ॥ २३

विज्ञाप गूर्जराधीशं दुर्जेयं सोऽपि बुद्धिमान् । नाजगाम स्वयं तस्मै लिखित्वा चेदमादिशत् ॥ २४

जइ जिप्पइ तां मंडलीय[3] जिणहि[4] त गुज्जरराउ ।
तुह कुमरु यहु कुमरप्पालु दुविवि होहु किमाउ ॥ २५

प्रस्तावेऽस्मिंश्चित्रकूटे श्रीमत्कुमारभूपतेः । श्रीविग्रहनृपानीकैर्गृहीतं हास्तिकं बलात् ॥ २६
तत्स्वरूपं माण्डलिकः कुमरः प्रेष्य चारणम् । ज्ञापयामास भूभर्तुस्तायोऽवसरे बलम् ॥ २७

गया जि साजण साथि घरि पइठा वइरी तणइ ।
कुमरपाल 'ति हाथि अवसु ति अवसरि पाहुडिहूं' ॥ २८

---

1 इत्युक्तियुक्ति॰ । B आदर्शे पाठभेदाः—१ यह. २ अ पइ. ३ भंजिय. ४ मंडपु गढ़. ५ एहु. ६ धंघोलिउ. ७ उच्छयाणु. ८ एहु. ९ पई. १० निवभुअ॰. ११ तोलिउ. १२ नागवइ एहु. १३ घणउं. १४ कुमरमंडलिय॰. १५ A चाल्ह्ड. १६ तणउं.
2 B चिर त । 3 B दिणयर । 4 B जणु । 5 B मणि । 6 B जिणहि ता मंडलिउ । 7 B जिणहि । 8 A रहरि । 9 B पाहुडहि ।

श्रयिते गूर्जराधीशे किंवदन्तीमिमां तदा । हिताय श्रावयामास दारुणामपि चारणः ॥ २९

गढ फुट्टं[1] चेयण गई विम्माहिं लया गइंद ।
मत्तउ[2] चालू चक्कवइ निब्भर आवइ[3] निंद[4] ॥ ६३०
पलीउ[5] भूयवइ जं करइ तं सहु[6] करणइ जुत्तु ।
मांडवि[7] जग सरिस्यूं[8] वयरा[9] काइं सूइ निचंत[10] ॥ ३१

इत्याकर्ण्य महीपालो जातो भावदयाकुलः । प्रधानैश्च कृतः सन्धिः समये शोभतेऽखिलम् ॥ ३२
श्रीनागपुरदुर्गान्तः प्रेष्य पञ्चकुलं नृपः । प्रासादं कर्तुमारेभे च्यर्थारम्भो न तादृशाः(शाम् ?) ॥ ३३
§१२. कुमारपालभूपालः समं वीसलभूभुजा । सङ्ग्राममभिसन्धाय जगाम निजपत्तनम् ॥ ३४
राज्ञा वीसलदेवेन भगिनीपतिना समम् । जातं गतागतं दूतैः श्रीमतो गूर्जरेशितुः ॥ ३५
सन्धिविग्रहिकस्तस्यान्यदा पृष्टो महीभुजा । भंग्या स क्षेममाहेति 'वि शं ला ती वि वि श ठः' ॥ ३६
तद्विचक्षणतागर्वखर्वीकरणदक्षणः[1] । श्रीकपर्दिमहामात्यमुत्तरायादिशन्नृपः ॥ ३७
'विः' पक्षी तद्देवास्तौ 'श्लती'ति विखण्डिते । 'विग्रहराज' इत्याख्यां स प्रधानो यदाऽभणत् ॥ ३८
'विप्रौ'=विनाशिकौ कृत्रौ ह-राजाविति खण्डिते । 'कविवान्धव' इत्याख्यां स्वस्य धारितवान् ततः ॥ ३९
सपादलक्षदेशेऽथ जिनधर्मप्रवृत्तये । कुमारपालभूपालः समियाय बलाधिकः ॥ ६४०
समं विग्रहराजेन विगृह्य रणकौतुकी । जीवग्राहं तमादाय मुमोच भगिनीगिरा ॥ ४१
तदीये मण्डले जैनं धर्ममार्गं प्रवर्तयन् । तिलपीडनयन्त्राणि मिथ्यात्वमिव भञ्जयन् ॥ ४२
सर्वत्र स्थापयन् धर्मस्थितिं सह निजाज्ञया । श्रीमांश्चौलुक्यराजेन्द्रो गूर्जरात्रामुपागमत् ॥-युग्मम् ४३
§१३. एकदा देवबोधाख्यो योगी कपिलदर्शनी । जैनीभूतं नृपं श्रुत्वा स्वकलादुर्मदाशयः ॥ ४४
चकोरहंससारङ्गाधिरूढैर्योगिभिर्वृतः । आगतः कदलीपत्राधिरूढो नृपपर्षदि ॥ ४५
राजा सर्वोपधाशुद्धधर्मधौतमलोऽपि हि । स्फटिकोपलवत् किञ्चित् तत्कलारञ्जितोऽभवत् ॥ ४६
श्रीवाग्भटमहामात्यज्ञापिताः प्रभवोऽपि हि । योगशक्त्या परिलम्ब्य चतुरङ्गुलभूमिकाम् ॥ ४७
विधाय पश्यतो राज्ञः स्वकार्यं तूलवल्लघुम् । विस्मयं दलयामासुः स्वयं वादिगिरामिव ॥ ४८
नृपचित्तविमोहार्थं स एव पुनरन्यदा । प्रत्यक्षं मातापितरौ दर्शयामास विद्यया ॥ ४९
पिता जगाद वत्स ! त्वं पाखण्डैर्विप्रतारितः । कुलाचारमनाचारवचनैर्मुक्तवानसि ॥ ६५०
जैनश्राद्धतया श्राद्धपिण्डादि न ददासि यत् । तेन दिक्षु क्षुधाक्षामो भ्रमामि क्ष्मापते त्वयि ॥ ५१
यन्मुक्तं तुच्छवाक्येन तिथिपर्वोत्सवादिकम् । न लेभेऽहमतस्तात ! प्रवेष्टुं सुरपर्षदि ॥ ५२
जाते त्वयि मया वत्स ! विहिता ये मनोरथाः । ते सर्वे विफलीभूता भूतवेशोऽस्ति किं नु ते ॥ ५३
दीनानना पुनर्माता ताम्यन्तीव तदाऽवदत् । वरं वन्ध्या वरं निन्दुर्वरं निःस्वसुता प्रसूः ॥ ५४
न पुनस्त्वादृशो वत्स ! सार्वभौमः सुतोत्तमः । यत्तुल्यैर्जायते माता दीनानामपि दासवत् ॥-युग्मम् ५५
श्रुत्वेति दृढसम्यक्त्वसुधानिर्भरधीरपि । तद्वचो विषवेगेन मोहमित्थमधारयत् ॥ ५६
स्वकर्मवशगा जीवाः स्वकृतं कर्मभुञ्जते । चराचरहितं जैन वाक्यं चेति मतं मम ॥ ५७
पितृभ्यामुक्तमेवं च शृणोमि निजकर्णयो । हितौ च मातापितरौ तदिदं किमु सूनृतम् ॥ ५८
इत्याद्यमन्दसन्देहदोलान्दोलितमानसः । यावत्तस्थौ हृदालीनलयो योगीव भूपतिः ॥ ५९

---

B आदर्शगता पाठभेदा-१ गडफुट्ट २ मुत्तउ ३ आइ ४ निद् ५ बलियउ ६ सुहकरणइ जुत्त ७ माडिवि- ८ सरिसउ ९ वयर. १० सुयहिं निचिंतु 1 A चामर्षखर्वी° । 2 B दक्षिण ।

श्रीवाग्भटमहामात्यज्ञापिताः प्रभवस्तदा । तत्कालं कलिताकूतकलाकौशलशालिनः ॥ ६६०
कृत्वा जिनार्चनां सद्यो गुरुश्चान्तुगुपेयुषः । उपांशु दर्शयामास नृपतेरिन्द्रजालताम् ॥ ६१
आविर्भूय त्रिभुवनपालः सुतमलीलपत्[1] । धन्योऽसि कृतकृत्योऽसि वत्स ! यज्जैनधर्म्यसि ॥ ६२
सुरकिन्नरनारीभिर्गीयमानं यशस्तव । श्रुत्वा सर्वाधिकं वत्स ! स्वात्मानमभिमन्महे ॥ ६३
उद्धृताः पूर्वजाः कृत्स्नैः कुलं चेदं पवित्रितम् । सत्पुत्र ! तव धर्मेण सुरपङ्क्तौ रमामहे ॥ ६४
श्रीवाग्भटपुरे पार्श्वचैत्ये मन्नामनिर्मिते । नित्यं कृतार्थयन्नसि पूजाकृत्यैर्निजं जनुः ॥ ६५
तथैव माता वात्सल्यकुल्याभिस्तमसिञ्चत । प्रीणितात्मा नृपः स्मित्वा गुरूनाह सविस्मयम् ॥ ६६
किमिदं कौतुकं नाथ ! विनाथीकृतमानसम् । पुरापीदृक्षमेवाहमद्राक्षमिदमन्यथा ॥ ६७
सोल्लासं गुरवः प्राहुस्तथैवेदं यथा पुरा । ज्ञातव्या भ्रान्तिरेवेयं तत्त्वं त्वेकं जिनोदितम् ॥ ६८
कृत्रिमाडम्बरैरन्यैर्धर्मैः प्रौढिमवाप्यते । कर्तुर्ढौकयते प्रौढिं जैन एव परं विधिः ॥ ६९
श्राद्धादौ दत्तपिण्डेन प्रियन्ते पितरो यदि । तदाऽन्यविहितं कर्म भुज्यतामपरैरपि ॥ ६७०
तथा च पुण्यलाभाय न केनापि प्रयत्यताम् । सर्वागमविरोधश्चानवस्था च सुदुर्धरा ॥ ७१
सिद्धान्तदुग्धधाराभिर्धौतभ्रान्तिमलो नृपः । श्रीसर्वज्ञमतेनैव स्वं कृतार्थममन्यत ॥ ७२
इत्यादि बहुशो देशान्तरीयकृतविभ्रमैः । अदूषितमनोवृत्तिं सूरयश्चक्रिरे नृपम् ॥ ७३
§३४. [ *द्विजाद्यैः प्रेरितः कैश्चिद् भूपः पप्रच्छ प्रभुम् । किं जैनेष्वप्यदो राकाभूतेष्टादिमतान्तरम् ॥ ७४
ऊचे प्रभुर्न भेदोऽयं तोयं तोयधरस्य वै । तडागवापरगाभिन्नभूस्थं किंचित्तु भिद्यते ॥ ७५
तद्वद् राका-चतुर्दश्याश्रयेऽप्येको जिनः पतिः । जिनदीक्षेषु सर्वेषु मिथः पर्यायवन्दनम् ॥ ७६
सर्वे जैनर्षयो मान्या जिनाज्ञा चेत्ततो न भित् । राकाद्या भिच्च पाश्चात्या नैव चिन्त्या विपश्चिता ॥ ७७

इत्यालप्य विलुप्य भूपतिमनःकालुष्यमागात् प्रभुः
स्वस्थाने मुनिपुङ्गवांश्च सकलानाकार्य राकाङ्कितान् ।
मन्यध्वं मुनिनिर्मितां प्रथमतो यूयं प्रतिष्ठां ततो
राकापाक्षिकमागमोक्तविधितः कुर्मो वयं चैत्यवत् ॥ ७८

प्रपद्य ते स्वीयमुपाश्रयं ययू राकाङ्कगच्छेषु मिलत्सु सत्वरम् ।
इतः स्वविर्यार्यकया सुमुख्यया सूरिर्बभाषे सुमतिः समौख्यया ॥ ७९
श्राद्धप्रतिष्ठां विजहन्न लज्जसे सिद्धान्तगुर्वोरपलापपापकृत् ।
गुरुक्रमे चेत् किल क्वापि शिष्यिणी न्यषेत्स्यत त्वद्व्रतामलप्स्यत ॥ ६८०
तदा तया पण्डिकयेव भाषितः श्रीहेमसूचे सुमतिस्त्वकम्पितः ।
स्याद् यद् यथा तच्च तथाऽस्तु निःकृपं प्रभोर्गणिर्ज्ञापयति स्म तन्नृपम् ॥ ८१
नृपाज्ञया श्रीसुमतौ तु गर्जरधरां विहाय व्रजिते च कुङ्कणम् ।
नवयत्तु चान्येष्वपि निश्रया प्रभोः कति स्थिताः साधुतया च विश्रुताः ॥ ८२

किंच— कैकेय्युक्तिवशो व्यधाद् दशरथः पुत्रं प्रवासादरं,
पद्मावत्युदितश्च कौणिकनृपो दुर्धीर्युधं बन्धुभिः ।
रङ्कः कङ्कसिकार्यमङ्गसुतानुज्ञोऽकरोत् पूःक्षयं
तद्वत् पाक्षिकमेकतां व्रजदपीत्यस्याद् प्रतिन्या गिरा ॥ ८३

---

1 B °मलालपत् । * एतानि कोष्ठगतानि सर्वाण्यपि पद्यानि मोताम्नाये B प्रतौ आदर्शे ।

यत –कुमारपालभूपालवारके प्रतिनामभूत् । तां राकादुर्देशां मुक्त्वा पूर्जैवेति प्रसङ्गगी ॥* ] ८४

§३५. कलिकालैकसर्वज्ञान् मन्वानस्तानयो नृप । पप्रच्छ साग्रह पूर्वभव भवविरक्तधी ॥ ८५

अनन्योपायतासाध्य विमृश्यन्तस्तदाग्रहम् । सिद्धचक्रमहामन्त्र सस्मरुर्विधिपूर्वकम् ॥ ८६

तदधिष्ठायक शक्रसामानिकसुरोत्तम । पूजाजपतपोहोमध्यानादिप्रीणितान्तर ॥ ८७

कुमारपालभूपस्य कृतपुण्यस्य भाग्यत । अमलस्वामिनामाऽसौ सर्वेर्दि प्रकटोऽभवत् ॥ ८८

अभ्यर्थितस्तदा हेमसूरिभिर्गुणभूरिभि । महाविदेहक्षेत्रेऽगाच्च मोचप्रार्थना सुर ॥ ८९

गत्वा सीमन्धरस्वामिपादान्ते गूर्जरेशितु । पूर्वजन्म तथा भाव्यसिद्धिप्रान्तमबूबुधत् ॥ ६९०

ज्ञापयित्वा च श्रीहेमसूरये हर्षभूरये । यथागत गतो देवो गुरवो नृपमूचिरे ॥ ९१

§३६ इहैव जम्बूद्वीपे श्रीदेशे कर्णाटनामनि । कल्याणपुरमित्यस्ति यथार्थाभिधया पुरम् ॥ ९२

तत्र श्रेष्ठी गुणश्रेष्ठो धनदो निरवद्यधी । यो जिनधर्मलाभेन मेने स्व धनदोपमम् ॥ ९३

तद्धर्मचारिणी जैनधर्मकाननसारिणी । गङ्गा गङ्गाजलस्वच्छा पत्युश्छायेव देहिनी ॥ ९४

आबालकाल तद्गेहे पुत्रवत्पालितश्चिरम् । कर्मकृन्नायको नाम निर्मायो भद्रकाशय ॥ ९५

सोऽन्यदा लोकमद्राक्षीच्चतुर्मासकपर्वणि । पूजाविधितपोदानपौषधव्रततोयमम् ॥ ९६

अहो धन्या अमी लोका यथावसरमागतम् । समृद्धा धर्मकर्मादि सर्व सत्यपयन्ति ये ॥ ९७

मादृक्षा पुनराजन्मदरिद्रा मृतका इव । अपूर्णवान्छास्ताम्यन्ति भग्नपक्षा इवाण्डजा ॥ ९८

तदद्य निजशक्त्याहमपि पुण्यमुपार्जये । तप पूजादिक श्रेष्ठिश्चहलमोऽनुवादये ॥ ९९

सञ्जातभावनोल्लाससञ्चितै पञ्चरूपकै । पञ्चन्तपदानीव रक्तपुष्पाण्युपाददे ॥ ७००

पूजोपकृतिभृच्चैत्ये जगाम श्रेष्ठिना समम् । चेतोऽनुसारतो भाव्यसम्पदेव विकस्वर ॥ ७०१

श्रेष्ठिन कुर्वत पूजा तस्य भाव च बिभ्रत । कोऽपि पुण्यविशेषो यस्त वेद यदि केवली ॥ ७०२

अथारोपयतो जिनबिम्बे पुष्पपरम्पराम् । ददौ सोऽपि स्वपुष्पाणि पूजार्थं श्रेष्ठिन करे ॥ ७०३

श्रेतपुष्पैर्विधायार्चां तत्पुष्पाणि तदन्तरे । तथा निवेशयामास रेजे पूजा यथाधिकम् ॥ ७०४

नायकोऽपि तथा दृष्ट्वा प्रभुरानन्दतन्मना । भावना भावयामास रङ्को निधिधन यथा ॥ ७०५

धन्योऽहं यस्य पुष्पाणि व्यापृतानि जिनार्चने । अधन्या रसना मन्ये या न वेत्ति जिनस्तुतिम् ॥ ७०६

इयता कृतकृत्योऽस्मि यत्पुष्पैरन्तराश्रितै । सुतरा शुशुभे पूजा स्वैर्मौक्तिकहारवत् ॥ ७०७

महाटव्यामिव सर कानने जातिपुष्पवत् । इयत्काल गत जन्म वृथा मेऽधर्मजीविन[1] ॥ ७०८

धन्य सोऽवसरो भावी यत्राहमपि वासरे । स्वय पूजा करिष्यामि स्वभुजोपार्जितैर्धनै ॥ ७०९

भावना भावयन्नित्थ गुरुवन्दनकाम्यया । जगाम पौषधागारे श्रेष्ठिना सह सोऽन्यद ॥ ७१०

उपवासतपश्चके वन्दित्वा गुरुपादयो । न न्ययुङ्क्त क्वापि कार्ये श्रेष्ठी तमपि तद्दिने ॥ ११

प्रातर्भद्रकता वीक्ष्य तस्मै पारणकाहनि । परमान्न ददौ स्वेच्छ पुण्य हि फलद सदा ॥ १२

दासोऽपि दध्यौ धर्मस्य प्रभावोऽयमहो महान् । अलब्धपूर्व यल्लेभे पायस गौरव च तत् ॥ १३

अयमेव महाधर्मोऽनुचार्योऽत्त पर मया । आकण्ठभोजनाज्जातमजीर्णं कुक्षिशूलयुक् ॥ १४

आराधना कारयत श्रेष्ठिनाऽसौ समाधिना । विपद्य गूर्जराधाया जातश्चौलुक्यसद्मनि ॥ १५

1 B सैनदिर । 2 B जैनबिंबे । 3 B ऽधर्मजीविन ।

पुत्रस्त्रिभुवनपालदेवस्य परमार्हतः । कुमारपालभूपालः ससव्यसनवारकः ॥ १६
सम्यक्त्वमाप्य श्रीहेमसूरिपादप्रसादतः । विधास्यति महीपीठं जिनचैत्यविभूषितम् ॥ १७
पञ्चाशद्वर्षदेशीयो राजाऽष्टादशदेशभुक् । त्रिंशद्वर्षाणि राज्यं च भुक्त्वा पुण्यपरो मृतः ॥ १८
तृतीयदेवलोकेऽसौ देवो भावी महर्द्धिकः । ततश्च्युत्वा विदेहेषूत्पद्य मोक्षं व्रजिष्यति ॥ १९
श्रुत्वेति जाग्रदुत्कण्ठातरङ्गितभवान्तरः । कर्णाटदेशे भूपालः प्रैषीच्चतुरमानुषान् ॥ ७२०
प्रत्यक्षं सर्वमेवेदं ज्ञात्वा तैस्तैरुपक्रमैः । सर्वोत्तरं महीपालो जैनं धर्मममन्यत ॥ २१
शङ्कादिदोषनिर्मुक्तं सम्यक्त्वं पालयन् दृढम् । एकच्छत्रं जैनधर्मं चक्रे केनाप्यभाणि यत् ॥ २२

आज्ञावर्तिषु मण्डलेषु विपुलेष्वष्टादशस्वादरा-
दब्दान्येव चतुर्दश प्रसृमरां मारिं निवार्यौजसा ।
कीर्तिस्तम्भनिभांश्चतुर्दशशतीसंख्यान् विहारांस्तथा
कृत्वा निर्मितवान् कुमारनृपतिर्जैनो निजैनो व्ययम् ॥ २३

§ ३३. अथ कच्छपराजस्य भार्यायाः पुष्पभूपतेः । महासत्या लक्षराजजनन्याः किल शापतः ॥ २४
श्रीमूलराजवंशीयराजन्यानां तदाद्यपि । लूतिनामा महारोगः सङ्क्रामति सुदुर्धरः ॥—युग्मम् ॥ २५
कुमारपालभूभर्तुर्लूताव्याधिर्यदा पुनः । बाधामधात् तदा सूरिः प्रणिदध्यौ तदायुषि ॥ २६
आत्मायुः सबलं वीक्ष्य तं च रोगवशायुषम् । अष्टाङ्गयोगाभ्यासेन तं दोषमुदमूलयत् ॥ २७
चतुरशीतिवर्षायुर्मितैः श्रीहेमसूरिभिः । निजावसानं निखिलारेभेऽन्त्याराधनाक्रिया ॥ २८
तदर्थिदुःखिताय श्रीभूपाय प्रभवोऽभ्यधुः । षण्मासीशेषमेवास्ति तवाप्यायुरतः परम् ॥ २९
सन्तानाभावतो विद्यमान एव नराधिप ! । निजोत्तरक्रियां कुर्याः जागर्या धर्मवर्त्मनि ॥ ७३०
भाव्यराज्याधिपत्यादि कलिभावेन दुर्मदम् । उपदिश्य नृपस्याग्रे प्रभवोऽनशनं व्यधुः ॥ ३१
पद्मासनसमासीनलयैकाग्र्यवशेन्द्रियाः । सूरयो दशमद्वारा चक्रिरे प्राणनिर्गमम् ॥ ३२
संस्कारानन्तरं सूरेः पवित्रमिति भूपतिः । ववन्दे देहजं भस्म ततः सामन्तमण्डली ॥ ३३
पौरामात्यादिवर्गश्च तथा मृत्स्नामपाहरत् । यथा तदासदं हेमगर्तेत्यद्यापि विश्रुतम् ॥ ३४
प्रभुश्रीहेमसूरीणां शोकविक्लवमानसः । विज्ञप्तः सचिवै राजा सगद्गदमदोऽवदत् ॥ ३५
पुण्यार्जितशुभप्राप्तीन्न शोचामि प्रभून्नहम् । ससाङ्गमपि साम्राज्यमिदं मे त्वप्रयोजकम् ॥ ३६
तदेव खलु शोचामि राजपिण्डेन दूषितम् । यन्न लग्नं प्रभोरङ्गे मदीयमुदकाद्यपि ॥ ३७[1]
धर्मात्माऽपि स कष्टेन स्मारं स्मारं प्रभोर्गुणान् । षण्मासीमतिचक्राम च्यवनार्त इवामरः ॥ ३८
अथ प्रभूक्ते दिवसे समाप्तायुः समाधिना । कुमारपालभूपालः स्वर्लोकमधितस्थिवान् ॥ ३९

इति संक्षेपतः प्रोक्तं चरित्रं गूर्जरेशितुः ।
कुमारपालप्रतिबोधशास्त्राद्[2] ज्ञेयं विशेषतः[3] ॥ ७४०

इति श्रीरुद्रपल्लीयगच्छालङ्कारहारश्रीसंघतिलकसूरिशिष्यश्रीसोमतिलकसूरिविरचितं ॥

श्रीकुमारपालभूपालचरित्रं समाप्तं ।

[ A आदर्शे—'सं० १५१२ वर्षे आषाढमासे कृष्णपक्षे नवम्यां लिखितं ॥' ]

---

1 H पद्मासंगताधारेऽपि । 2 B प्रतिबोधचरित्रं । 3 H संक्षेपेन ।

# कुमारपालगुणोत्कीर्तनश्लोकाः ।



स्तुमस्त्रिसन्ध्यं प्रभुहेमसूरेरनन्यतुल्यामुपदेशशक्तिम् ।
अतीन्द्रियज्ञानविवर्जितोऽपि यः क्षोणिभर्तुर्व्यधित प्रबोधम् ॥

*

सत्वानुकम्पा न महीभुजां स्यादित्येष क्लृप्तो वितथः प्रवादः ।
जिनेन्द्रधर्मं प्रतिपद्य येन श्लाघ्यः स केषां न कुमारपालः ॥

*

नृपस्य जीवाभयदानडिण्डिमैर्महीतले नृत्यति कीर्तिनर्तकी ।
समं मनोभिस्तिमिकेकितित्तिरिस्त्रभोरणक्रोडमृगादिदेहिनाम् ॥

*

द्यूतासवादीनि नृणां निषेधादिहैव सप्तव्यसनानि भूपः ।
दुष्कर्मतो दुर्गतिसंभवानि परत्र तेषां त्वमितानि तानि ॥

*

पदे पदे भूमिभुजा निवेशितैर्जिनालयैः काञ्चनदण्डमण्डितैः ।
निवारिता वेत्रधरीरिवोद्धतैः स्फुरन्ति कुत्रापि न केऽप्युपद्रवाः ॥

*

—श्रीसोमप्रभाचार्यः ।



पुरातनाचार्यसंगृहीत-गद्य-पद्यमयः

# कुमारपालप्रबोधप्रबन्धः ।

॥ अर्हं नमः ॥

१. स्वयं कृतार्थः पुरुषार्थभावैर्जगाद यस्तान् जगतां हिताय ।
नाथः प्रजानां प्रथमः पृथिव्यां जीयाद् युगादौ पुरुषः स कोऽपि ॥ १ ॥

२. प्रणमामि महावीरं सर्वज्ञं पुरुषोत्तमम् ।
सुरासुरनराधीशैः सेव्यमानपदाम्बुजम् ॥ २ ॥

३. परा मनसि पश्यन्ती हृदि कण्ठे च मध्यमा ।
मुखे च वैखरीत्याहुर्भारती तामुपास्महे ॥ ३ ॥

४. अज्ञानतिमिरान्धानां ज्ञानाञ्जनशलाकया ।
नेत्रमुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ ४ ॥

*

§ १. सकलसुरासुरनरनिकरनायकशिरःशेखरायमाणपादारविन्दश्रीसर्वज्ञोपज्ञपथपान्थप्रष्ठस्य कलिकालसर्वज्ञश्रीहेमसूरिगुरूपदेशविवेकविशेषप्रासादनिःशेषभूवलयप्रतिष्ठस्य सकलजन्तुजातजीवातुजीवदयाधर्म्मनिष्ठस्य निजभुजबलकलितसकलभूपालकुलविजयविलसद्यशःप्रतापगरिष्ठस्य श्रीकुमारपालभूपालस्य प्रारभ्यतेऽयं प्रबोधप्रबन्धः ।

तत्र केऽपि जिज्ञासवः प्रश्नयन्ति—'कोऽयं कुमारपालभूपालः, कश्चायं कलिकालसर्वज्ञश्रीहेमचन्द्रसूरिगुरुः । कथं च तस्य प्रतिबोधः ?'—इति सर्वमिदमावेद्यमानं श्रूयताम् ।

§ २. तथाहि—अस्मिन् जम्बूद्वीपे द्वीपे भरतक्षेत्रे युगलधर्मकाले प्रवर्त्तमाने तृतीयारकपर्यन्ते सप्तकुलकराः पुराऽभूवन् । तेषु सप्तमः श्रीनाभिकुलकरः, तस्यादियोगिनी मरुदेविस्वामिनी धर्मपत्नी बभूव । तयोः पुत्रः सकलधर्मार्थकाममोक्षाणां चतुःपुरुषार्थानां प्रथमः प्रसाधकः, परेषामुपकाराय प्रथमोपदेष्टा, प्रथमः पुरुषः, प्रजानां सम्यग्योगक्षेमकरणात् प्रथमो नाथः, शैशवे प्रभुरेक्षुयष्टिकृतावष्टम्भहस्तत्वात् प्रणामागतेन्द्रस्थापितेक्ष्वाकुवंशः, समग्रैश्वर्यादिगुणोपेतत्वात् प्रथमभगवान्, प्रथमो जिनः समजनि । तस्मिंश्चेक्ष्वाकुवंशे क्रमेण षट्त्रिंशद् राजकुलान्यभूवन् । तेषु महापुरुषरत्नसंकुले श्रीचौलुक्यकुले षट्त्रिंशल्लक्षग्रामाभिरामे कन्यकुब्जदेशे कल्याणकटकपुरे श्रीभूयराजा राज्यं करोति । तेन राज्ञा स्वपुत्र्या महणल्लदेव्या गूर्जरधरित्री कञ्चुकसम्बन्धे दत्ता ।

*

§ ३. इतश्च गूर्जरात्रैकदेशे वढियारदेशे पंचासरग्रामप्रदेशे बहिः श्रीशील[गुण]सूरयः शकुनावलोकनार्थं गता वनगहनमध्ये वृक्षशाखानिबद्धझोलिकं बालकमेकं दृष्ट्वा समीपस्थतन्मातरमूचुः—'भद्रे ! काऽसि त्वम् ? ।' तयोक्तम्—'राजपत्नी अहम् । कन्यकुब्जदेशीयश्रीभूयराजभयेन चापोत्कटकुलकमलकमलबन्धोरस्य पुत्रस्य गोपनार्थमत्र स्थिताऽस्मि' । ततः श्रीसूरिभिरपराह्णेऽपि तद्वृक्षच्छायामनमितामालोक्य 'कोऽप्ययं महानरेश्वरो भावी'ति तत्स्वरूपं श्राद्धानामावेद्य तस्य रक्षा कारिता । स च बालकः श्रीगुरुदत्तवनराजनामाऽष्टवार्षिको राजचिह्नैः क्रीडन् परबालकासह्यतेजाः समभूत् ।

५. यतः—पीऊण पाणियं सरवरंमि पिट्ठिं न दिंति सिहिडिंभा ।
होही आण कलावो पयइ चिअ साहए ताण ॥ १ ॥

§४. ततः श्राद्धैर्मातुः समर्पितः सन् स चौरमातुलेन सह धाट्यादौ परिभ्रमन्, अन्यदा काकरग्रामे कस्यापि धनिनो गृहे खात्रं दत्त्वा प्रविष्टो दधिभाण्डे करे पतिते सति भुक्तोऽहमत्रेति सर्वं हित्वा गतः। प्रातस्तत्पुत्र्या श्रीदेव्या गोरसे हस्ताङ्गुलिचिह्नानि घृतभृतानि दृष्ट्वा 'कोऽप्ययं महापुरुषो भाग्यवान्' इति तं बान्धवत्वेन प्रतिपद्य, 'तं दृष्ट्वा भोक्ष्यामी'ति कृतप्रतिज्ञा। तत्स्वरूपमाकर्ण्य रात्रौ समागतो वनराजो गुप्तवृत्त्या भोजनवस्त्रादिना सत्कृतो 'मम राज्याभिषेके त्वयैव भगिन्या तिलकं कार्य'मिति प्रतिज्ञाय गतः।

§५. अन्यदा वनराजेन कोऽपि वने जांबाको वणिक् रुद्धः। शरपञ्चकमध्यात्, शरद्वयं भूमौ मुञ्चन् कारणं पृष्टः प्राह–'यूयं त्रयो जनाः, शरास्तु पञ्च; तेन द्वाभ्यामधिकाभ्यां किं प्रयोजनमिति'–प्रोक्ते 'कोऽप्ययं सत्वशाली शूरः पुमान्, मम राज्यकाले महामात्यो भावी'ति मुक्तो जांबाकः कृतप्रणामः किमपि शंबलादिकं दत्त्वा गतः। एकदा गूर्जरपंचकुलं षण्मासैरुद्ग्राहितसुराष्ट्रामण्डलं चतुर्विंशतिलक्षहेमनाणकान् चत्वारिंशतानि जात्यतुरंगमान् लात्वा व्याघुट्यमानं पथि वनराजेन हत्वा सर्वं जगृहे। ततो वर्षं यावत् कालुंभारवने स्थितिं कृत्वा कन्यकुब्जस्थितिरुत्थापिता।

§६. ततो नवीनपुरनिवेशाय भूमिं विलोकयता वनराजेनाऽणहिल्लो नाम गोपः प्राप्तः। तेन यत्र शशकेन श्वा त्रासितस्तत् स्थानं दर्शितम्। ततस्तन्नाम्ना अ ण हि ल्ल पु रं पत्तनं सकलवास्तुविधाविचारपुरःसरप्राकार–प्रतोली–परिखा–प्रासाद–विहार–हर्म्य–हस्तिशाला–तुरंगमशाला–भांडागार–कोष्ठागार–आयुधशाला–राजसभा–अलंकारसभा–स्नानगृह–सूतिगृह–धर्मशाला–दानशाला–सत्रागार–पानीयशाला–नाट्यगृह–क्रीडागृह–शांतिगृह–शिल्पशाला–चन्द्रशालादिभिर्विशालं स्थापितम्। ततः पंचाशद्वर्षवयसो वनराजस्य राज्याभिषेकः। श्रीपत्तने संवत् ८०२ वर्षे श्रीशील[गुण]सूरिभिर्जैनमंत्रे राज्यस्थापना कृता। तदा पुरा प्रतिपन्नभगिन्या तिलकश्चक्रे। तस्या महाप्रसादः। जांबाकः सर्वराजकार्यक्षमो महामात्यः समभूत्।

श्रीगुरूपदेशेन राजा वनराजः पुण्यवान् कृतज्ञः पंचासरग्रामे श्रीपार्श्वनाथप्रतिमालंकृतनिजाराधक–मूर्तियुतं प्रासादमचीकरत्।

६. गूर्जराणामिदं राज्यं वनराजात् प्रभृत्यपि।
स्थापितं जैनमन्त्रैस्तु तद् द्वेषी नैव नन्दति ॥ १ ॥

इति लोके प्रसिद्धिरभूत्। ततः षष्टिवर्षं वनराजस्य राज्यम्। पञ्चत्रिंशद्वर्षं तत्सुतयोगराजराज्यम्। पञ्चविंशतिवर्षाणि क्षेमराजराज्यम्। एकोनत्रिंशद्वर्षाणि भूयराजराज्यम्। पञ्चविंशतिवर्षं वैरसिंहराज्यम्। पञ्चदशवर्षं रत्नादित्यराज्यम्। सप्तवर्षं सामन्तसिंहराज्यम्। एवं चापोत्कटकुले सप्तराजानोऽभूवन्। एवं संवत्सर (वर्षाणि) १९६। ततो दौहित्रसन्ताने चौलुक्यकुले राज्यं गतम्।

*

§७. कथं गतम्?–तथा चाह–कन्यकुब्जीयचौलुक्य श्र.. ग्र (भूयड ?) राजस्य सुत. कर्णादित्यः, तत्सुतचन्द्रादित्य–तत्पुत्रसोमादित्य–तत्सुतो भुवनादित्यः। तस्य राज–बीज–दडुकनामानस्त्रयः पुत्राः। प्रथमो राजकुमारः।

७. *दीसइ विविहच्चरियं जाणिज्जइ सुजण–दुज्जणविसेसो।*
अप्पाणं च कलिज्जइ हिंडिज्जइ तेण पुहवीए ॥ १ ॥

इति विचार्य देशान्तरेषु परिभ्रमन् श्रीपत्तने समायातः। सामन्तसिंहं नृपं वाहकेलीं कुर्वन्तं दृष्ट्वाऽश्वघाते राज्ञा दत्ते राजकुमारोऽनवसरदत्तेन कशाघातेन पीडितो 'हा हेति' शब्दमकरोत्। राज्ञा कारणं पृष्टोऽवदत्–'देव! अश्वे कृते शोभनगतौ कशाघातो मम मर्माभिघातः सञ्जातः'। ततो राज्ञा तत्सारितोऽश्वः। तेन चाश्वशिक्षाकुशलेन दर्शितं वाहकेलीकौतुकम्। जातस्तयोः सख्यो योगः।

८. यतः-अश्वः शस्त्रं शास्त्रं वाणी वीणा नरश्च नारी च ।
पुरुषविशेषं प्राप्ता भवन्त्ययोग्याश्च योग्याश्च ॥ १ ॥

ततः **सामन्तसिंह**नृपेणाचारादिभिर्महत्कुलमाकलय्य;

९. यतः-अभणंताण वि नज्जइ माहप्पं सुपुरिसाण चरिएण ।
किं वुच्छंति मणीओ जाओ सहस्सेहिं घिप्पंति ॥ १ ॥

इति सञ्चिन्त्य राजकुमारस्य महताग्रहेण **लीलादेवी**नाम्नी स्वभगिनी ददे । अन्यदा कालान्तरे साऽऽपन्नसत्त्वा जाता । तस्याकाण्डमरणे सचिवैरुदरं विदार्य कर्षितमपत्यम् । मूलनक्षत्रमूले जातत्वात्, **मूलराजो**ऽयमिति नाम कृतम् । तज्जन्मतो राज्यादिवृद्धिं दृष्ट्वा मदमत्तेन **सामन्तसिंहेन** स राज्येऽभिषिच्यते, गतमदेन चोत्थाप्यते । तदादि चापोत्कटानां दानमुपहासाय जातम् । तदुक्तम्-'**चाउडा दाति** ।' एकदा मदमत्तेन स्थापितो राज्ये **मूलराजः** । तेन च विकलोऽयं मातुल इति विज्ञाय विनाशितः, ग्रहीतुं(तं ?) स्वयमेव राज्यम् । **संवत् ९९८ वर्षे** जातो राज्याभिषेकः ।

*

§८. स चातुलबलपराक्रमः प्रतापाक्रान्तसकलसीमालभूपालः स्वबलेन **लाखाकं** नृपं जितवान् । तत्स्वरूपं यथा-**परमार**वंशे **कीर्तिराज**सुता **कामलता**, शैशवे सखीभिः सह रममाणाऽन्धकारे प्रासादस्तम्भान्तरितं **फूलडडा**भिधं पशुपालं वृत्वा, ततः कतिपयैर्वर्षैः प्रधानवरेभ्यो दीयमाना पतिव्रतामतपालनाय तमेवोपयेमे । तयोः पुत्रो **लाखाकः** । स च **कच्छा**धिपः सर्वतोऽप्यजेयः । एकादशवारांस्त्रासितमूलराजसैन्यः । एकदा **कपिलकोटे** स्थितो **मूलराजेन** रुद्धः । द्वन्द्वयुद्धं कुर्वाणस्तस्य अजेयतां दिनत्रयेण विमृश्य तुर्ये दिने निजकुलदैवतमनुस्मृत्य, ततोऽवतीर्णदैवतकलया **लाखाको** निजघ्ने । तस्याजौ भूपतितस्य वातचलिते स्मश्रूणि पदं स्पृशन् **मूलराज**स्तज्जनन्या पतिव्रतातीव्रमतनिष्ठया 'लूतारोगेण भवद्वंश्या विनश्यन्तु' इति शप्तः **मूलराजः** पञ्चपञ्चाशद् वर्षाणि यावत् राज्यं कृत्वा, एकदा सान्ध्यनीराजनानन्तरं ताम्बूले कृमिदर्शनात्, पूर्वं गजादिदानं दत्त्वा संन्यासपूर्वं दक्षिणचरणाङ्गुष्ठे वह्निमोचनं कृत्वा अष्टादशदिनैः परलोकमगात् ।

*

§९. ततः त्रयोदशवर्षाणि **चामुंडराज**स्य राज्यम् । षण्मासान् यावद् राज्यं **वल्लभराज**स्य । एकादशवर्षाणि षण्मासान् **दुर्लभराज**राज्यम् । स स्वपुत्रं **श्रीभीमदेवं** स्वराज्ये न्यस्य स्वयं वैराग्यवान् तीर्थयात्रां कुर्वन् **मालवके** गतः । श्रीमुंजेन 'छत्रादिकं मुञ्च वा युद्धं कुरु' इत्युक्तो धर्मान्तरायं मत्वा प्रशमवान् कार्पटिकवेषेण यात्रां कृत्वा परलोकमसाधयत् ।

तत्स्वरूपं **भीमेन** ज्ञातम् । ततः प्रभृतिराजद्वयविरोधः । **भोजराजेन** सार्द्धं **भीमदेव**स्य [ विग्रहः ] ।

*

§१०. तस्य द्वे राज्यौ । एका **चउलदेवी**नाम्नी पण्याङ्गना, **पत्तन**प्रसिद्धं रूपपात्रं गुणपात्रं च । तस्याः कुलयोषितोऽपि अतिशायिनीं प्राज्यमर्यादां नृपतिर्निशम्य तद्व्रतपरीक्षानिमित्तं सपादलक्षमूल्यां क्षुरिकां निजानुचरैस्तस्यै ग्रहणके दापयामास । औत्सुक्यात् तस्यामेव निशि बहिरावासे प्रस्थानलग्नमसाधयत् । नृपतिर्वर्षद्वयं यावन्मालवमंडले विग्रहाग्रहात् तस्थौ । सा [ ] **बकुलदेवी** तद्दत्तग्रहणकप्रमाणेनैतद्वर्षद्वयं परिहृतसर्वपुरुषसंगा चन्द्रनीललीलयैव तस्थौ । निःसीमपराक्रमो **भीम**स्तृतीयवर्षे स्वं स्थानमागतो जनपरंपरया तस्यास्तां प्रवृत्तिमवगम्य तामन्तःपुरे न्यधात् । तदङ्गजो **क्षेमराजः** । द्वितीया राज्ञी **उदयमती**, तस्याः सुतः **कर्णदेवः** ।

*

**क्षेमराज-कर्णदेवौ** तत्पुत्रौ भिन्नमातृकौ । परस्परं प्रीतिभावौ यथा राघव-लक्ष्मणौ ॥ १
**कर्ण**मातुस्ततस्तेन **भीमदेवेन** चैकदा । अतिपन्नं राज्यदानं **श्रीकर्ण**स्य लघोरपि ॥ २

वशीकर्तुमिव स्वर्गं भीमदेवे दिवंगते । द्विचत्वारिंशद् वर्षाणि राज्यं कृत्वा मनोरमम् ॥ ३
सौदर्यवर्यगांभीर्यप्रज्ञादिगुणोत्तमे । राज्यक्षमे क्षेमराजे कर्णो राज्यं न वाञ्छति ॥ ४
राम इव क्षेमराजः स्मृत्वा भाषां पितुस्ततः । कर्णं महोपरोधेन स्वयं राज्ये न्यवीविशत् ॥ ५

§ ११. तस्य राज्ञी मयणल्लदेवी । तस्याः स्वरूपं किंचिदुच्यते—शुभकेशिनामा कर्णाटराट् तुरंगमापहृतः प्रान्तरप्रान्तभूमौ नीतः । कुत्रापि पत्रलवृक्षच्छायां सेवमानः प्रत्यासन्नदावपावके प्राणानामाहुतिं चाकरोत् । तत्सूनुः जयकेशिनामा तद्राज्ये सचिवैरभिषिक्तः । तस्य राज्ञी विजया । तत्सुता मयणल्लदेवी नाम्नी समजनि । सा च शिवभक्तैः श्रीसोमेश्वरस्य नाम्नि गृहीतमात्र एव इति पूर्वभवमस्मार्षीत्—'यत् पूर्वभवेऽहं ब्राह्मणी द्वादशमासोपवासान् कृत्वा, प्रत्येकं द्वादशवस्तूनि तदुद्यापनके दत्त्वा, श्रीसोमेश्वरनमस्याकृते बाहुलोडनगरं प्राप्ता । तत्करं दातुमक्षमाऽप्रतो गन्तुमलभमानाच—"अहमागामिभवेऽस्य करस्य मोचयित्री भूयासं"—इति कृतनिदाना विपन्ना जाता'—इति पूर्वभवस्मृतिः । अथ सा श्रीबाहुलोडकरमोचनाय गूर्जरेश्वरं प्रवरं वरं कामयमाना मातरं प्रति तं वृत्तान्तं निवेदितवती । जयकेशिराज्ञाऽपि तं व्यतिकरं ज्ञापितः श्रीकर्णः । स्वप्रधानपुरुषैः मयणल्लदेव्याः कुरूपतां निशम्य तस्मिन्मन्दादरे, तस्मिन्नेव राज्ञि निर्बन्धपरां तामेव स्वयंवरां प्राहिणोत् । अथ श्रीकर्णनृपो गुप्तवृत्त्या स्वयमेव तां कुत्सितरूपां विलोक्य सर्वथा निरादरपरो जातः । ततः सा दिकन्याभिरिव मूर्तिमतीभिरष्टाभिः सहचरीभिः सह नृपतिहत्याकृते प्राणान् परिजिहीर्षुः, श्रीउदयमत्या राज्या तासां विपदं द्रष्टुमक्षमतया ताभिः सह प्राणसंकल्पश्चक्रे ।

१०. यतः—स्वापदि तथा महान्तो न यान्ति खेदं यथा परापत्सु ।
अचला निजोपहतिषु प्रकम्पते भूः परव्यसने ॥ १ ॥

इति न्यायात्, तदाग्रहादेव, अनिच्छतापि सर्वथा श्रीकर्णेन सा परिणिन्ये । तदनन्तरं दृग्मात्रेण सर्वथा तामसम्भावयन्, कस्यामपमयोषिति साभिलाषं नृपं मुंजालमंत्री कञ्चुकिना विज्ञाय, तद्वेषधारिणीं मयणल्लदेवीं ऋतुस्नातामेव रहसि प्राहिणोत् । तामेव स्त्रियं जानता नृपतिना सप्रेम भुज्यमानायास्तस्या आधानं समजनि । तदा च तया संकेतज्ञापनाय नृपकरात् नामाङ्कितमङ्गुलीयं निजाङ्गुल्यां न्यधायि । प्रातः तद्दुर्विलसितात् प्राणपरित्यागोपायाय नृपतये स्मार्तैस्तप्तताम्रमयपुत्तलिकालिङ्गनमिति निवेदिते, अवधिसाय तत्रैव चिकीर्षवे, स मंत्री यथावदथावदत् । शुभे जातस्य तस्य सूनोर्नृपतिना जयसिंह इति नाम निर्ममे । स पालकस्त्रिवार्षिकः सवयोभिः समं रममाणः सिंहासनमलञ्चक्रे । तद् व्यवहारविरुद्धं विमृश्य नृपेण पृष्टैर्नैमित्तिकैस्तस्मिन्नेवाभ्युदयिनि क्षणे निवेदिते राजा तदैवाभिषेकं चकार । स्वयं तु देवयात्रायां गन्तुमना अभूत् ।

पालयत्यन्यदा राज्यं जयसिंहे नरेश्वरे । चचाल देवयात्रायां कर्णः कर्ण इवापरः ॥ ६
श्रीदेवपत्तनादर्वाक् गव्यूतैः सप्तभिः स्थित । प्रासादं सोमनाथस्य दृष्ट्वाऽभिग्रहमग्रहीत् ॥ ७
यथा—पापक्षयं हारं चन्द्रादित्याख्यकुंडले । श्रीतिलकमंगदं च परिधाय समाहितः ॥ ८
यदा सोमेश्वरं देवं पूजयिष्यामि भक्तितः । भोक्ष्ये तदाशनं पानं तांबूलमपि नान्यथा ॥ ९
स्नात्वा प्रभासे श्रीकर्णो यदायाचत भूषणम् । कोशाधिपस्तदा स्माह नादिष्टं स्वामिभिस्ततः ॥ १०
आभरणं पत्तनेऽस्मात् विषण्णश्च ततो नृपः । तदा मदनपालाख्यो मंडलीकोऽब्रवीदिति ॥ ११
मा विषीद महाराज! मन्त्रसिद्धिधरा यतः । मया सन्ति सहानीताः श्रीधनेश्वरसूरयः ॥ १२
अथ च राज्ञाभ्यर्थितैस्तैरणहिल्लपत्तनात् । आकृष्टिमन्त्रेणाकृष्याभरणं तत्समर्पितम् ॥ १३
संपूर्णाभिग्रहो राजा प्राह सूरिवरं प्रति । युष्माभिर्जीवितं दत्तं ममाभिग्रहपूरणात् ॥ १४
गृहाण तदिदं राज्यमित्युक्तः सूरिरब्रवीत् । रक्ष जीवदयां राजन् नवरात्रद्वयेऽपि हि ॥ १५

तथेति कृत्वा संसाध्य सुराष्ट्रामण्डलं नृपः । चकार वामनस्थल्यां सज्जनं दण्डनायकम् ॥ १६
ततो मदनपालेन विज्ञप्तः कर्णभूपतिः । सार्धं धनेश्वराचार्यैरारूढो रैवताचलम् ॥ १७
सज्जनोऽपि स्वगुरुभिः श्रीभद्रेश्वरसूरिभिः । चतुर्विधेन संघेन सार्धं राजानमन्वगात् ॥ १८
श्रीनेमिभवनं जीर्णं वीक्ष्य काष्ठमयं ततः । सज्जनो गुरुणादिष्टो जीर्णोद्धारकृते कृती ॥ १९

११. यतः–जिणभुवणाइं जे उद्धरंति भत्तीए सडियपडियाइं ।
ते उद्धरंति अप्पा भीमाओ भवसमुद्दाओ ॥ १ ॥

१२. अथवा–अप्पा उद्धरिओ चिय उद्धरिओ तह य तेहिं नियवंसो ।
अन्ने य भव्वसत्ता अणुमोयंता य जिणभवणं ॥ २ ॥

युक्तमिदमुपदेशकथनं साधूनाम् । यतः–

१३. राया–अमच–सेट्ठी–कुडुंबिए वावि देसणं काउं ।
जिण्णे पुव्वाययणे जिणकप्पी वावि कारवइ ॥ ३ ॥

जीर्णोद्धाराय विज्ञप्तः सज्जनेन नृपस्ततः । सुराष्ट्रोद्ग्राहितं दत्त्वाऽणहिल्लपुरमाययौ ॥ २०
अथ भद्रेश्वरः सूरिः सज्जनेन सहाष्टमम् । तपः कृत्वाऽम्बिकादेवीमाह्वानयददीनधीः ॥ २१
प्रत्यक्षीभूय साऽप्यूचे युवाभ्यां किमहं स्मृता । सूरिराह नेमिचैत्यमुद्धरिष्यति सज्जनः ॥ २२
तदेनमनुजानीहि पापाणखनिमादिश । अंबाऽप्यूचे भवत्वेतदल्पायुः पुनः सज्जनः ॥ २३
दण्डाधिपः प्राह कार्यस्तीर्थोद्धारो विशेषतः । परलोकप्रस्थितानां पाथेयं धर्म एव यत् ॥ २४

१४. दीपे म्लायति तैलपूरणविधिः स्तोयं द्रुमे शुष्यति,
प्रावारो हिमसंगमे जलगृहं ग्रीष्मज्वरोज्जागरे ।
निर्घातं कवचं शरद्व्यतिकरे रोगोद्भवे भेषजम्,
धर्मो मृत्युमहाभये सति सतां संसेवितुं युज्यते ॥ १ ॥

अम्बानुज्ञां ततो लब्ध्वा पापाणस्य खनिं च सः । श्रीनेमिचैत्यं षण्मास्यां कलशान्तमकारयत् ॥ २५
ज्येष्ठस्य सितपञ्चम्यां शिरोऽर्त्याऽऽर्तोऽथ सज्जनः । अम्बादेवीवचः स्मृत्वा जातपंचत्वनिश्चयः ॥ २६
आदिश्य परशुरामं स्वपुत्रं ध्वजरोपणे । भद्रेश्वरगुरोः पार्श्वे संस्तारव्रतमग्रहीत् ॥ २७
दिनाष्टकं पालयित्वाऽनशनं सज्जनो मुनिः । दिवं जगाम पुत्रोऽथ ध्वजारोपं व्यधापयत् ॥ २८

§१२. द्वयोः राज्ञोर्नैकत्रावस्थानं युक्तमिति आशापल्लीनिवासिनं प्रबलभुजबलशालिनं आशाकं भिल्लं जित्वा कर्णावती पुरीं विधाय, २९ वर्षाणि राज्यं कृत्वा पञ्चत्वमाप । अत्रान्तरे परशुरामेणाचिन्ति–राजा जयसिंहनामा दण्डं सोधयिष्यति तदा किं भावी । तदा वामनस्थलीनिवासिभिर्व्यवहारिभिर्दण्डदानं प्रतिपन्नम् ।

अथ पञ्चत्वमापन्ने कर्णदेवे महीपतौ । श्रीमान् जयसिंहदेवः स्वयं राज्यमपालयत् ॥ २९
ततः समुद्रमर्यादा मही तेन वशी कृता । सिद्धो बर्बरकश्चाथ सिद्धराजस्ततोऽभवत् ॥ ३०

–इति घनतरेषु देशेषु निजाज्ञां जगन्मान्यां दापयित्वा वलमानो रैवताचलासन्नां वामनस्थलीं प्राप । तत्र दण्डनायकमाकार्य दण्डमयाचत । दण्डाधिपेनोक्तम्–श्रीरैवताचलोपरि महाऽभयस्थाने निक्षिप्तोऽस्ति । ततो राजा रैवताचलं गन्तुमिच्छुर्विप्रैर्भोत्स्यर्यालिंगाकारमिति निषिद्धोऽपि श्रीकर्णस्य निजपितुर्गमनं श्रुत्वा छत्रशिलायां छत्रमोचनं च कृत्वा गतः । तत्र गजेन्द्रपदकुण्डे स्नात्वा श्रीनेमिजिनपूजां विधाय तुष्टाव । यथा–

१५. परं ज्योतिः परब्रह्म परमात्मानमित्यपि ।
यं स्तुवन्ति बुधा नित्यं स श्रीनेमिजिनः श्रिये ॥ १ ॥

१६.    चिदानन्दमयं यस्य स्वरूपं योगचक्षुषा।
       पश्यन्ति योगिनो नित्यं स श्रीनेमिजिनः श्रिये ॥ २ ॥

इत्यादि स्तुत्वा, धर्मशिलायामुपविश्य प्रासादरम्यतां विलोक्योचे—धन्यौ मातृपितरौ तस्य, येनेदं मन्दिरं कारितम्। अत्रावसरे परशुराम उवाच—'राजन्! धरणीतले श्रीकर्णदेव-मयणल्लदेव्यौ धन्यौ, ययोः भवान् सूनुः। श्रीकर्णविहारोऽयं मत्पित्रा कारितो वर्षत्रयोद्ग्राहितव्ययेन। यदि देवपादानां प्रासादेच्छा विद्यते तदा प्रासादः; यदि वा द्रव्येच्छा, तदा द्रव्यं व्यवहारिगृहे स्थापितमस्ति। तन्निशम्य प्रमुदितो राजा प्राह—'भव्यं सज्जनेन दण्डाधिकारिणा कृतम्। यदत्र कृत्यं भवति तत्सर्वमपि त्वं कारय'—इत्यादिश्य देवदाये ग्रामद्वादशकं दत्त्वा श्रीशत्रुंजयमाजगाम। आकृष्टकृपाणकैर्विमैर्निषिद्धो रात्रौ समारुरोह। श्रीयुगादिदेवस्य सर्वोपाधं पूजां विधाय स्तुतिमकरोत्। यथा—

१७.    नमोऽस्तु युगादिदेवाय तस्मै ज्ञानमयात्मने।
       प्रावर्त्तन्त यतः सर्वा हेयोपादेयबुद्धयः ॥ १ ॥
१८.    चराचरं जगत्सर्वं यस्यान्तःप्रतिबिम्बितम्।
       तस्मै युगादिदेवाय परमज्योतिषे नमः ॥ २ ॥

इति श्रीआदिजिनं स्तुत्वा द्वादशग्रामान् देवदायं कृत्वा, विविधतोरणपताकालक्षलक्षितं श्रीपत्तनं प्राप।

*

§ ११३. प्रतिदिनं सर्वदर्शनेषु आशीर्वाददानायाहूयमानेषु यथावसरमाकारिता जैनाचार्याः श्रीहेमचन्द्रमुख्याः। सिद्धराजनृपेण दुकूलादिनाऽर्चिताः। सर्वैरपि कविभिरप्रतिमप्रतिभाभिरामैर्विधाऽपि पुरस्कृतो नृपतये श्रीहेमचन्द्र इत्यादिमं पपाठ—

१९.    भूमिं कामगवि स्वगोमयरसैरासिञ्च रत्नाकरा,
       मुक्तास्वस्तिकमातनुध्वमुडुप त्वं पूर्णकुम्भीभव।
       छित्त्वा कल्पतरोर्दलानि सरलैर्दिग्वारणास्तोरणा—
       न्याधत्त स्वकरैर्विजित्य जगतीं नन्वेति सिद्धाधिपः ॥ १ ॥

अस्मिन् काव्ये निःश्रपथे प्रपठ्यमाने, तद्वचनचातुरीचमत्कृतचेता नृपतिस्तं प्रशंसन्, कैश्चिदसहिष्णुभिरस्मच्छास्त्राध्ययनबलादेतेषां विद्वत्तेत्यभिहिते, राज्ञा पृष्टाः श्रीहेमचन्द्राचार्याः प्राहुः—'पुरा श्रीजिनेन श्रीमन्महावीरेण इन्द्रस्य पुरतः शैशवे यद्व्याकृतं तत् जैनेन्द्रं व्याकरणं वयमधीयामहे।' इति वाक्यानन्तरम्, 'इमां पुराणवार्त्तामपहाय, अस्माकं संनिहितं कमपि व्याकरणकर्त्तारं ब्रूत।' इति तत्पिशुनवाक्यानन्तरं नृपं सूरयः प्राहुः—'यदि श्रीसिद्धराजः सहायीभवति, तदा कतिपयैरेव दिनैः पञ्चाङ्गमपि नूतनं व्याकरणं स्वयं रचयामः।' अथ नृपेण प्रतिपन्नम्। 'राजन्! इदं भवता निर्वहणीयमि'त्यभिधाय तद्विसृष्टाः स्वपदं सूरयः प्रापुः। ततो बहुभ्यो देशेभ्यस्तत्तद्वेदिभिः पण्डितैः समं सर्वाणि व्याकरणानि समानीय श्रीहेमचन्द्राचार्यैः श्रीसिद्धहेमाभिधानं प्रधानमभिनवं पञ्चाङ्गमपि व्याकरणं सपादलक्षग्रन्थप्रमाणं संवत्सरेण रचयांचक्रे। राजवाह्यकुम्भिकुम्भे तत्पुस्तकमधिरोप्य सितातपवारणे ध्रियमाणे चामरग्राहिणीभ्यां चामरयुग्मं वीज्यमानं नृपमन्दिरमानीय, प्राज्यवर्यसपर्यापूर्वकं कोशागारे न्यधीयत। नृपाज्ञयाऽन्यानि व्याकरणानि अपहाय तस्मिन्नेव व्याकरणे सर्वथाऽधीयमाने, केनापि मत्सरिणा भवदन्वयवर्णनाविरहितं व्याकरणमिति व्याहरता, क्रुद्ध [नृपं] नृपाङ्ग [रक्षक] वचनादवबुद्ध्य द्वात्रिंशत् श्लोकान्, नूतनान् निर्माय, द्वात्रिंशत्सूत्रपादेषु तान् सम्बद्धानेव लेखित्वा प्रातर्नृपसभायां वाच्यमाने व्याकरणे—

२०. हरिरिव बलिबन्धकरस्त्रिशक्तियुक्तः पिनाकपाणिरिव ।
कमलाश्रयश्च विधिरिव जयति श्रीमूलराजनृपः ॥ १ ॥

२१. चक्रे श्रीमूलराजेन नवः कोऽपि यशोऽर्णवः ।
परकीर्त्तिस्रवन्तीनां न प्रवेशमदत्त यः ॥ २ ॥

इत्यादीश्चौलुक्यवंशोपश्लोकान् द्वात्रिंशत्सूत्रपादेषु द्वात्रिंशत् श्लोकानवलोक्य प्रमुदितो राजा व्याकरणं विस्तारयामास । ततो राजाज्ञया सर्वः कोऽपि हेमव्याकरणं पठति । भणति च–

२२. भ्रातः ! संवृणु पाणिनिप्रलपितं कातन्त्रकन्थाकथाम्,
मा कार्षीः कटु शाकटायनवचः क्षुद्रेण चान्द्रेण किम् ।
कः कण्ठाभरणादिभिर्बठरयत्यात्मानमन्यैरपि,
श्रूयन्ते यदि तावदर्थमधुराः श्रीसिद्धहेमोक्तयः ॥ १ ॥

श्रीसिद्धराजदिग्विजयवर्णने द्व्याश्रयनामा ग्रन्थः समर्थितः ।
श्रीहेमसूरीनभ्यर्थ्य सर्वविद्याविशारदान् । व्याकरणं सिद्धहेमं ततो राजा प्रवर्त्तयत् ॥ ३१
( पाठान्तरेण–सिद्धहेमचन्द्राख्यं स व्यधापयत् । )

*

§ १४. अथान्यस्मिन्नवसरे श्रीसिद्धराजः संसारसागरतितीर्षया सर्वदर्शनेषु सुदेवत्व-सुधर्मत्व-सुपात्रत्वजिज्ञाशया पृच्छ्यमानेषु निजस्तुति-परनिन्दापरेषु सन्देहदोलाधिरूढमानसः श्रीसिद्धराजो हेमाचार्यमाकार्य विचार्यं कार्यं पप्रच्छ । आचार्यैस्तु चतुर्दशविद्यास्थानरहस्यं विमृश्य इति पौराणिकनिर्णयो वक्तुमारेभे–'यत् पुरा कश्चिद् व्यवहारी पूर्वपरिणीतां पत्नीं परित्यज्य संगृहिणीसात्कृतसर्वस्वः, सदैव पूर्वपत्न्या पतिवशीकरणाय तद्वेदिभ्यः कार्मणकर्मणि पृच्छ्यमाने कश्चिद् गौडदेशीय इति प्राह–'रश्मिनियमितं तव पतिं करोमि ।' इति उक्त्वा, किंचिद्-चिन्त्यवीर्यं भेषजमुपनीय 'भोजनान्तर्देयमि'ति भाषमाणः, कियद्दिनान्ते समागते क्षयाहनि तस्मिंस्तथाकृते, स प्रत्यक्षां वृषतामाप । सा च तत्प्रतीकारमनवबुध्यमाना विश्वविश्वाक्रोशान् सहमाना निजदुश्चरितं शोचयन्ती, कदाचिन्मध्यन्दिने दिनेश्वरकठोरतरकरनिकरप्रसरतप्यमानाऽपि शाड्वलभूमिषु तं वृषभरूपं पतिं चारयन्ती, कस्यापि तरोर्मूले विश्रान्ता निर्भरं विलपन्ती, आलपं नभसि अकस्मात् शुश्राव । तदा तत्रागतो विमानाधिरूढः पशुपतिर्भवान्या तद्दुःखकारणं पृष्टो यथावस्थितं निवेद्य च, तरोश्छायायां पुंस्त्वनिबन्धनमौषधं तन्निर्बन्धादादिश्य तिरोदधे । सा तदनु तदीयां छायां रेखाङ्कितां निर्माय तन्मध्यवर्त्तिन औषधाङ्कुरान् उच्छेद्य वृषभवदने निक्षिपन्ती, तेनाऽप्यज्ञातस्वरूपेण औषधाङ्कुरेण वदनन्यस्तेन स वृषभो मनुष्यतां प्राप । यथा तदज्ञातस्वरूपेणापि भेषजाङ्कुरेण सा समीहितां कार्यसिद्धिं चकार, तथा कलियुगे मोहान्धिते तिरोहितपात्रपरिज्ञाने समक्तिकं सर्वदर्शनाराधनेनाविदितस्वरूपमपि मुक्तिप्रदं भवतीति निर्णयः ।

*

पुनः पात्रपरीक्षाविचारे श्रीहेमसूरयः प्राहुः–राजन् ! द्वैपायन-युधिष्ठिर-भीमसंवादे पात्रपरीक्षायां भीमः प्राह–

२३. मूर्खस्तपस्वी राजेन्द्र ! विद्वांश्च वृषलीपतिः ।
उभौ तौ द्वारि तिष्ठेते कस्य दानं प्रदीयते ॥ १ ॥

युधिष्ठिर उवाच–

२४. सुखासेव्यं तपो भीम ! विद्या कष्टदुरासदा ।
विद्वांसं पूजयिष्यामि तपसा किं प्रयोजनम् ॥ २ ॥

भीमोऽप्यूचे–

२५. श्वानचर्मगता गंगा क्षीरं मद्यघटस्थितम् ।
अपात्रे पतिता विद्या किं करोति युधिष्ठिर ! ॥ ३ ॥

द्वैपायन उवाच—

२६. *न विद्यया केवलया तपसा चापि पात्रता ।*
**यत्र ज्ञानं क्रिया चोभे तद्धि पात्रं प्रचक्षते ॥ ४ ॥**

एवंविधगुणपात्रभक्त्या मुक्तिः—इति श्रीहेमचन्द्राचार्यैः सर्वदर्शनसंमते निवेदिते सति सर्वधर्मान् श्रीसिद्धराज आराध ।

*

§ १५. अथ सा **मयणल्लादेवी** जातिस्मरणात् पूर्वभववृत्तान्ते श्रीसिद्धराजे निवेदिते सति श्रीसोमनाथयोग्यां सपादकोटिमूल्यां हेममयीं पूजां सहादाय बाहुलोडनगरे संप्राप्ता । तत्र पंचकुलेन कार्पटिकेषु कदर्थ्यमानेषु राजदेयविभागस्याप्राप्त्या सयाप्यं पश्चान्निवर्त्यमानेषु श्रीमयणल्लादेवी हृदयादर्शसंक्रान्तबाष्पा स्वयमेव पश्चाद्व्याघुटन्ती अन्तरा अन्तरायीभूतेन श्रीसिद्धराजेन विज्ञपयांचक्रे—'स्वामिनि ! अलममुना संभ्रमेण, कुतो हेतोः पश्चान्निवर्त्यते ?'—इति राज्ञाऽभिहिते 'यदेव सर्वथा अयं करमोक्षो भवति तदैवाहं श्रीसोमेश्वरं प्रणमामि, नान्यथेति । किंचात्मरसशन-नीरयोश्च नियमः'—इति राज्ञा श्रुते पंचकुलमाकार्य तत्पट्टकस्यान्ते द्वासप्ततिलक्षान् उत्पद्यमानान् विमृश्य, तं पट्टकं विदार्य मातुः श्रेयसे तं करं मुक्त्वा, तत्करे जलचुलुकं मुञ्चति स्म । तदनु विप्राः पृष्टाः—'करमोक्षे किं फलम् ?' तैरूचे—

२७. **अकरे करकर्ता च गोसहस्रवधः स्मृतः ।**
**प्रवृत्तकरविच्छेदे गवां कोटिफलं लभेत् ॥ १ ॥**

इति स्मृतिः । तच्छ्रुत्वा मुदितो राजा । अथ सा श्रीसोमेश्वरं गत्वा तया सुवर्णपूजयाऽभ्यर्च्य तुलापुरुषगजाश्वगोदानादीनि दत्त्वा महादानानि प्रदाय, *'मत्सदृशा काऽपि नाभूत् न भविष्यती'ति दर्पाध्माता निशि निर्भरं प्रसुप्ता ।* तपस्विवेषधारिणा तेनैव देवेन जगदे—'इहैव मदीयदेवकुलमध्ये काचित् कार्पटिकनितंबिनी यात्रार्थं समायाताऽस्ति । तस्याः सुकृतं याचनीयं त्वया' इत्थमादिश्य तिरोहिते तस्मिन्, राजपुरुषैर्विलोक्य सा समानीता । तस्मिन् पुण्ये याचितेऽप्यददाना कथमपि, 'त्वया यात्रायां किं व्ययीकृतमि'ति उक्ता सती, सा प्राह—'भिक्षावृत्त्या मया योजनशतानि देशान्तरमतिक्रम्य ह्यस्तनदिवसे कृततीर्थोपवासा पारणकदिने कस्यापि सुकृतिनः सदनं भोजनार्थमुपविष्टा । तदर्द्धमतिथये दत्त्वा च स्वयं पारणकमकार्षम् । भवती पुण्यवती यस्याः पितृ-भ्रातरौ नृपौ, पति-सुतौ च राजानौ । बाहुलोडकरद्वासप्ततिलक्षान् मोचयित्वा सपादकोटिमूल्यया सपर्यया अगण्यपुण्यमर्जयन्ती, मदीयपुण्ये कुतोऽपि कथं लुब्धासि ? । अन्यच्च—हे **मयणल्लादेवि** ! यदि न कुप्यसि तदा किंचिद् वच्मि । तत्त्वतस्तव पुण्यात् मम पुण्यं महीतले महीयः । यतः—

२८. **संपत्तौ नियमः शक्तौ सहनं यौवने व्रतम् ।**
**दारिद्र्ये दानमत्यल्पमपि लाभाय भूयसे ॥ १ ॥**

इति तस्या युक्तियुक्तेन वाक्येन सर्वकषं गर्वं विससर्ज । श्रीपत्तनं प्राप्ता ।

*

§ १६. अन्यदा **सिद्धपुरे** रुद्रमहालयप्रासादे निष्पद्यमाने मन्त्रिणा च चतुर्मुखश्रीराजविहाराख्यश्रीमहावीरप्रासादे कार्यमाणे पिशुनप्रवेशो राजा स्वयमवलोकनार्थमायातः । पप्रच्छ कोऽत्र विशेषः । श्रीहेमसूरिभिः प्रोक्तम्—'देव ! महेश्वरस्य ललाटे चन्द्रः, श्रीजिनस्य पादान्ते नवग्रहा भवन्ति'—इति विशेषः । राजा तन्न मन्यते । ततो वास्तुविद्याविशारदः सूत्रधारो विचारं प्राह—'सामान्यलोकानां गृहद्वारं पंचशाखम्, राज्ञां सप्तशाखम्, रुद्रादिदेवानां नवशाखम्, श्रीजिनस्यैकविंशतिशाखं द्वारम् । अष्टोत्तरशतं च मण्डपाः । रुद्रादीनामेक एव । श्रीजिनस्य पद्मासनं, छत्रं, पादान्ते नवग्रहाः, सिंहासनं च । नान्यदेवानाम् । चेत् कश्चित् कारयति, सूत्रधारः करोति, तदा द्वयोर्विघ्नमुत्पद्यते । नान्यथात्वं वास्तुविद्यायाः सर्वज्ञभाषितत्वात् । एतदाकर्ण्य राजा प्रमुदितः । स्वयं राजविहारे कलशाधिरोपणादिकमकारयत् ।

२९. मुद्गानुद्गतमुद्गरानुरुगदाघातोद्यतान् व्यन्तरान्,
वेतालानतुलानलाभविकटान् झोटिंगचेटानपि ।
जित्वा सत्त्वरमाजितः पितृवने नक्तंचराधीश्वरं,
यद्वा बर्बरमुर्वरापतिरसौ चक्रे चिरात् किंकरम् ॥ १ ॥

एवं सर्वत्राखण्डप्रतापो जयसिंहो राज्यं करोति । 5

*

§ १७. इतश्च क्षेमराजस्य पुत्रो देवप्रसादकः । तस्य पुत्रास्त्रिभुवन-देवपालादयोऽभवन् ॥ ३२
त्रिभुवनपालस्याभूत् सुतैका तनयास्त्रयः । आद्यः कुमारपालाख्यो राजलक्षणलक्षितः ॥ ३३
महीपालः कीर्तिपालस्तथा श्रीमलदेव्यभूत् । श्रीकृष्णदेवभट्टेन योदूढा मोहडवासके ॥ ३४
भार्या भोपलदेवीति कुमारस्य बभूव च । [ कुमारपालस्य पुत्री लीलू । इति टिप्पण्याम् । ]
अत्रान्तरे सिद्धराजो दैवज्ञं पृष्टवानिति ॥ ३५ 10
मम पट्टे को भविता सोऽप्यूचेऽस्ति महाभुजः । मध्ये दधिस्थलीकाया यस्ते भ्रातृव्यनन्दनः ॥ ३६
राज्यं नो मम पुत्रस्य जीवति भ्रातृनप्तरि । तत्तं ज्ञात्वा हनिष्यामीत्यचिन्तयदयं नृपः ॥ ३७
ततोऽसौ पादचारेण कपोतीमुद्वहन् स्वयम् । गत्वा प्रभासे पुत्रार्थं सोमनाथमयाचयत् ॥ ३८
सोमनाथोऽप्ययोवाच मया राज्यधरः पुरा । सृष्टः कुमारपालोऽस्ति तदलं पुत्रयाच्ञया ॥ ३९
सविषादस्ततो भूपो व्यावृत्तः पत्तनं प्रति । अस्मिन् जीवति पुत्रोऽपि न मे भावीत्यचिन्तयत् ॥ ४० 15
मन्त्रिणेऽकथयच्चैतत् सोऽप्यूचे युक्तमेव तत् । यदा पूर्वं देवपादाः विजेतुं मालवान् गताः ॥ ४१
घाटे दुन्धिलिकायाश्च संरुद्धे यशवर्मणा । युष्माभिर्ज्ञापितश्चाहं पारापतप्रयोगतः ॥ ४२
त्रिभुवनपालस्यैतत् तदा राज्यं समर्पितम् । स्वसमीपेऽहमायातस्तेन राज्यं वशीकृतम् ॥ ४३
निर्जित्य जसवर्म्माणं त्वय्यायातेऽपि वक्ति सः । राज्यं दास्ये स्वपुत्राय हत्वा सिद्धनरेश्वरम् ॥ ४४
इति मन्त्रिवचः श्रुत्वा क्रुद्धः सिद्धाधिपस्ततः । त्रिभुवनपालदेवं घातयामास घातकैः ॥ ४५ 20
कुमारपालोऽप्यवन्त्यां प्रेष्य भ्रातृपितृव्यकान् । भार्यां भोपलदेवीं तु दधिस्थल्यामसुञ्चत ॥ ४६
स्वयं तु त्रिपुरुपाणां मठाधिपतिसंनिधौ । कपटेन जटाधारी भूत्वा श्रीपत्तने स्थितः ॥ ४७
सिद्धराजोऽपि तत्रस्थं ज्ञात्वा तं च कथंचनः । श्राद्धे कर्णदेवस्य द्वात्रिंशत्तापसैः सह ॥ ४८
तं निमन्त्र्य मठाधीशं पंक्त्या धावन् पदौ स्वयम् । ददर्श राजचिह्नानि कुमारस्य च पादयोः ॥ ४९
उपलक्ष्य कुमारं तं राज्ञा पृष्टो मठाधिपः । अवोचच्च त्रयस्त्रिंशत्तापसा वयमास्महे ॥ ५० 25
नानाविधैर्भक्ष्यभोज्यै राजा संभोज्य तानथ । धौतापोतीकृते तेषां भाण्डागारे स्वयं गतः ॥ ५१
अत्रान्तरे कुमारोऽपि गृहीत्वा कुण्डिकां करे । उत्क्रान्तिव्याजतो नंष्ट्वा कुम्भकारगृहं गतः ॥ ५२
आपाके रच्यमाने तु मृत्पात्राणां कृपालुना । आलिगेन तदन्तस्तं निधायेति सुरक्षितः ॥ ५३
सिद्धराजोऽप्यदृष्ट्वा तं पृष्ठेऽप्रैषीच्च साधनम् । आगतं साधनं प्रेक्ष्य ययौ सन्मुखमालिगः ॥ ५४
राट्पुरुषैस्ततः पृष्टं पुमान् कश्चिदिहाययौ ? । किमन्धा यूयमग्रेऽपि किं न पश्यथ पावकम् ॥ ५५ 30
राजलोके गते तेन नोंशितोऽनाशितो निशि । दृष्ट्वा सैन्यं आगकस्मात् कुमारो हालिकं जगौ ॥ ५६
रक्ष मामिति तेनापि संछन्नः कण्टकाम्भरैः । तमदृष्ट्वा सैन्यमपि गतं व्याघुट्य पत्तने ॥ ५७
निःसृत्याथ कुमारोऽपि मुण्डाप्य विकटा जटाः । गत्वा दधिस्थलीं रात्रौ मिलितः स्वजनैः समम् ॥ ५८
आकार्य वोसिरिं मित्रं कुलालमालिगं तथा । गन्तुं देशान्तरं ताभ्यां सह यावदमन्त्रयत् ॥ ५९

१ श्राद्धदिने । २ निष्काशितः ।

तावदुज्जागरोद्विग्नौ जनकावूचतुस्तयोः। भवतां मत्प्रणे(द्ग)ग्घाः केयं जागरिका मुधा॥ ६०
यदा कुमारपालस्य राज्यं यदि भविष्यति। तत्कथं वोसिरे! तुभ्यं लाटदेशं प्रदास्यति॥ ६१
किंच रे आलिग! तव चित्रकूटस्य पट्टिकाम्। बबन्ध शकुनग्रन्थिस्तत् श्रुत्वा राजनन्दनः॥ ६२
आलिगं भोपलदेव्या सहादीपीदवन्तिकाम्। स्वयं वोसिरियुक्तस्तु चेले देशान्तरं प्रति॥ ६३
मध्येवं कुमारोऽपि नानाश्चर्यावलोकधीः। विश्रान्तस्तरुच्छायायां यावदस्ति समाहितः। ६४

तावद् बिलान्मूषकं मुखेन रूपनाणकमाकर्षन्तं निभृततया विलोक्य यावदेकविंशतिसंख्यानि दृष्ट्वा एकं गृहीत्वा बिलं प्रविष्टः। कुमारपालः पाश्चात्यानि तु सर्वाणि गृहीत्वा यावत्रिभूतीभूत्वा तिष्ठति तावन्मूषकस्तान्य-नवलोक्य तदसून् विपेदे। तच्छोकशङ्क्याकुलितमानमधिरं परितप्य चेतसीदं चिन्तयामास—

३०. अर्थानामर्जने दुःखमर्जितानां च रक्षणे।
आये दुःखं व्यये दुःखं धिगर्थो दुःखभाजनम्॥ १॥
३१. धनेषु जीवितव्येषु स्त्रीषु चाहारेषु सर्वदा।
अतृप्ताः प्राणिनः सर्वे याता यास्यन्ति यान्ति च॥ २॥

तस्मात् पुरो मजन् कयापि हम्यवध्वा श्वशुरगृहात् पितुर्गृहं व्रजन्त्या, पथि पाथेयाभावाद् दिनत्रयक्षुत्क्षाम-कुक्षिर्मातृवात्स(ल्य)त्वात् कुमारपालः कर्पूरपरिमलशालिना शालिकरम्बेन सुहितीचक्रे। तदीयविलेन हृष्टो-ऽचिन्तयत्—

३२. करचलुयपाणिएण वि अवसरदिन्नेण मुच्छियं जियइ।
पच्छा मुयाण सुंदर! घडसयदिन्नेण किं तेण॥ १॥
३३. जं अवसरेण न हुयं दाणं विणओ सुभासियं वयणं।
पच्छागयकालेणं अवसररहिएण किं तेण॥ २॥

तस्मिन् करोटकग्रामे उषित्वा जातलंघनौ। अचछाविल्यां द्वितीयेऽह्नि प्रयातौ प्रहरद्वये॥ ६५
कुमारो वोसिरिं प्राह अद्य स्याद् भोजनं कथम्। सोऽप्याहास्ति जननी मे सा मे दास्यति भोजनम्॥ ६६
३४. यतः—प्रतिदिनमयत्नलभ्ये! भिक्षुकजनजननि! कल्पलते!!
नृपतिनतिनरकनारणि! भगवति भिक्षे! नमस्तुभ्यम्॥ १॥
इत्युक्त्वा वोसिरिर्भिक्षां कृत्वा यातस्तदन्तिके। करम्भकुम्भीं संगोप्य भिक्षाडुंडीमुपानयत्॥ ६७
भुक्त्वोभावपि क्षुत्वा च पूर्वमादाय वोसिरिः। करम्भं यावदश्नाति कुमारोऽचिन्तयत् तदा॥ ६८
अहोऽस्याद्भुतता येन सुप्ते मय्येककोऽत्यसौ। जीर्णे करम्भे सोऽप्याहोत्तिष्ठ भुंक्ष्व नृपात्मज!॥ ६९
ऊचे कुमारः किं पूर्वमेकाकी भुक्तवान् भवान्। स ऊचे मम भिक्षार्थं गतस्योक्तं स्त्रियैकया॥ ७०
करम्भकुम्भं हे विप्र! शरावुद्घाटितं स्थितम्। गृहाण यदि ते कार्यं न पुनर्मम दूषणम्॥ ७१
वरं भवति मे मृत्यू रक्षणीयो भवान् पुनः। गोपितः स मयादाय स्वयं भुक्त्वा परीक्षितः॥ ७२
राज्ये दास्ये तव ग्राममेनमुक्त्वेति राजसूः। प्राप्तो वांगुरिकाग्रामे साध्वीलक्ष्मीश्रियो मठे॥ ७३
तथा च क्षुधितो ज्ञात्वा भोजितश्चारुमोदकैः। तयैवार्पितपाथेयः पाटलापद्रकं गतः॥ ७४
तत्रेश्वरवणिग्वाट्यां प्रविष्टस्य पटी गता। न लब्धा चाटुभिरपि विषादोऽस्य महानभूत्॥ ७५
प्राघूर्ण वोसिरिपटीं स्तम्भतीर्थं गतस्ततः। श्रीहेमसूरीन् पप्रच्छ कदा सेत्स्यति वाञ्छितम्॥ ७६
लोकोत्तराणि चिह्नानि तदङ्गे वीक्ष्य सर्वतः। तेऽप्यूचुर्नृपतिर्भावी सार्वभौमो नरोत्तमः॥ ७७
तां च वाणीं निशम्यासौ हर्षमालासमाकुलः। उवाच राज्यसन्देहो म्रि(म्रि)यते तु क्षुधाऽधुना॥ ७८

श्रीविक्रमाद्धि शरदां नवनवत्यधिकेषु कार्त्तिके मासे । हस्तार्करवौ द्वितीयायां गतेष्वेकादशशतेषु ॥ ७९
भवतस्तदाऽभिषेको न भवति यदि राज्यसम्भवस्तन्मे । यावज्जीवं नियमोऽतः परं सन्निमित्तस्य ॥ ८०

इति निश्चयं श्रुत्वा कुमारपालः प्राह–'यद्यदः सत्यं ततस्त्वमेव राजाऽहं तव सेवकः' । श्रीसूरिर्बभाषे–'राजन् ! सुरासुरनरनिकरनायकमुकुटमणिकिरणनीराजितपादारविन्दस्य श्रीसर्वज्ञस्य शासने प्रभावको भवतु भवान्' । इति प्रतिपन्नं राज्ञा ।

इतश्चागादुदयनो गुरून्नन्तुं सुतैः सह । आस्थायाम-चप्पभट्ठ्योर्दृष्टान्तं हेमसूरिभिः ॥ ८१
प्रोक्तं चेति कुमारोऽयं भविता परमार्हतः । सार्वभूमस्ततो मन्त्रीन् ! सन्मान्योऽयं महादरात् ॥ ८२

*

§ १८. अथोदयनस्य पुण्योदयः कथ्यते । यथा– पूर्वं मरुमण्डलवास्तव्यः श्रीमालवंश्य ऊदाभिधानो वणिक् प्रावृषि काले प्राज्याज्यक्रयाय निशीथे व्रजन्, कर्मकरैरेकस्मात् केदारादपरस्मिन् पूर्यमाणेऽम्भोभिः 'के यूयमि'ति तान् पप्रच्छ । तैर्वयममुकस्य कामुका इत्यभिहिते, 'ममापि क्वापि सन्ती'ति पृच्छन्, तैः "कर्णावत्यां तवापि सन्ति' इति अभिहिते स सकुटुम्बस्तत्र गत्वा वायडीयजिनायतने विधिवद् देवान्नमस्कुर्वन्, कया छिंपिकया श्राविकया साधर्मिकत्वाद् ववन्दे । पृष्टश्चेति–'भवान् कस्यातिथिः ?' तेनोक्तम्–'वैदेशिकोऽहमिति भवत्या एवातिथिः'–इति तद्वाक्ये श्रुते तं सह नीत्वा कस्यापि वणिजो गृहे कारितान्नपाकेन भोजयित्वा, निजतलके निर्मा[पि]तकायमाने निवास्य स्थापितः । स तत्र सम्पन्नसम्पत् इष्टकं गृहं चिकीर्षुः खातावसरे निरवधिं सेवधिमधिगम्य तामेव स्त्रियमाकार्य समर्प्ययत् । तया निषिद्धः । तत्प्रभावेन ततःप्रभृति उदयसंयुक्तत्वात् उदयननामा मन्त्रीति पप्रथे । तेन कर्णावत्यामतीत–वर्त्तमान–भविष्यचतुर्विंशतिजिनसमलंकृतः श्रीउदयनविहारः कारितः । तस्यापरमातृका वाहड–सोला–आंबड–चाहडदेवनामानश्चत्वारः सुता अभूवन् ।

*

कुमारोऽप्युदयनस्य गृहेऽतिष्ठत् तदाऽन्यदा । केनाप्युक्तः सिद्धराजः प्रैषीत् तत्प्रति घातकान् ॥ ८३
तत् श्रुत्वा कुमारो भीतः प्राणत्राणकृते कृती । एकाकी निशि निर्गत्य जगाम वटपद्रके ॥ ८४
विंशोपकैकचणकान् कट्टुवणिज आपणे । क्षुधार्त्तो भक्षयित्वाऽसौ खड्गमङ्गाणके ददौ ॥ ८५
निर्द्रव्यं राजपुत्रं तं विलोक्य वणिगूचिवान् । खड्गेनालं मंगलीके भवन्तु चणकास्तव ॥ ८६
कन्नाली-सिद्धपुरके जटीभूत्वाऽथ सोऽगमत् । सिद्धेश्वरस्य पूजार्थं स्थापितस्तन्निवासिभिः ॥ ८७
तत्रैकदा शकुनिनं मारवं पृष्टवानसौ । वाञ्छितासिः कदा मे स्यात् सोऽप्यूचे प्रातरापसेः ॥ ८८
प्रातर्मिलित्वा शकुनान्वेषणाय गतावुभौ । मुनिसुव्रतचैत्योर्द्ध्वं दृष्ट्वा दुर्गां स्थितौ ततः ॥ ८९
शुभचेष्टाऽकरोद् दुर्गाऽमलसारे स्वरद्वयम् । स्वरत्रयं च कलशे दण्डे स्वरचतुष्टयम् ॥ ९०
दृष्टः शाकुनिकोऽत्रोचत् सिद्धिस्ते वाञ्छिताधिका । भाविन्येव विशेषात्तु जिनभक्तिप्रभावतः ॥ ९१
यत्नैः संपूज्य कुमरस्तं मुक्त्वा तापसव्रतम् । गत्वाऽवन्त्यां स्वजनानां मिलित्वा सिद्धराद्भयात् ॥ ९२
क्वचिद्योगी क्वचिद्बौद्धः क्वचित्तापसवेषभृत् । क्वचित्कार्पटिकाकारो भृशं बभ्राम भूतले ॥ ९३

§ १९. गत्वा कोलापुरेऽद्राक्षीद् दानभोगादिसद्गुणम् । सर्वार्थसिद्धियोगीन्द्रं सेवित्वा चाप्यतोषयत् ॥ ९४
उवाच योगी मन्त्री स्त एकः साम्राज्यदायकः । स्वेच्छया धनदाताऽन्य आद्यः सोपद्रवः पुनः ॥ ९५
सत्वसारः कुमारोऽथ मन्त्रं जग्राह राज्यदम् । उक्तेन तेन विधिना पूर्वसेवां व्यधत्त सः ॥ ९६
ततः कृष्णचतुर्दश्यां गत्वा पितृवने निशि । शवस्य वक्षसि न्यस्य वह्निकुण्डं स्वयं पुनः ॥ ९७
उपविश्य तस्य कट्यां यावद् होमं ददाति सः । करालमूर्त्तिः प्रत्यक्षस्तावत् क्षेत्राधिपोऽवदत् ॥ ९८
मामनभ्यर्च्य रे धृष्ट ! किमारब्धं मुमूर्षुणा । इति श्रुत्वापि निःक्षोभः सोऽपि जापं समापयत् ॥ ९९
तदा च भूत्वा प्रत्यक्षं महालक्ष्मीरवोचत । गूर्जरात्राधिपत्यं ते दत्तं वर्षैस्तु पञ्चभिः ॥ १००

सिद्धमन्त्रः कुमारोऽथ नत्वा सर्वार्थयोगिनम् । कल्याणकटके देशे क्रमात् कान्तीपुरीं ययौ ॥ १०१

३५. यतः–पुष्पेषु जाती नगरेषु कान्ती नारीषु रम्भा पुरुषेषु विष्णुः ।
सतीषु सीता द्रुषु कल्पवृक्षो जिनस्तु देवेषु नगेषु मेरुः ॥ १ ॥

*

§ २०. कुमारः कौतुकात् तस्यां भ्रमन् परिसरेऽन्यदा । कबन्धमेकमद्राक्षीद् वैरिणाऽपास्तमस्तकम् ॥ १०२
तत्पार्श्वे मिलितः स्त्रीणां शुश्रावान्योऽन्यजल्पितम् । अहो कचकलापोऽस्य अहो श्रवणलम्बता ॥ १०३
अहो घनत्वं कूर्चस्य ताम्बूले व्यसनं तथा । अहो विरलदन्तत्वं श्रुत्वेत्येकां ततो जगौ ॥ १०४
कथमेतत्, ततस्ताश्चावोचन् किं चित्रमत्र यत् । दीर्घं वेणीस्थलं पृष्ठे स्कन्धे कुण्डलयोः किणे ॥ १०५
आनाभि हृदि गौरत्वात् दृश्यते श्मश्रुणः स्थलम् । ताम्बूलव्यसनाच्चैपोऽङ्गुष्ठश्चूर्णेन चर्चितः ॥ १०६
नित्यं विरलदन्तानां क्षिप्ता रक्ता कनिष्ठिका । तत् श्रुत्वाऽचिन्तयदसौ बहुरत्ना वसुन्धरा ॥ १०७

*

§ २१. कृत्वा स्नानं कुमारोऽथ सरस्यमृतसागरे । तीरदेवकुले गत्वाऽर्च्यमानं ददृशे शिरः ॥ १०८
तस्येतिवृत्तं पृष्टश्च कश्चन स्थविरोऽवदत् । पुरे हि प्रवरे राज्ञा कारिते सरसि स्वयम् ॥ १०९
पद्मकोशाद् विनिर्गत्य शीर्षमेकं सकुण्डलम् । एकेन मुडतीत्युक्त्वा निमज्जद् ददृशे स्वयम् ॥ ११०
तदर्थं पण्डितैः पृष्टैः प्राप्य मासचतुष्टयम् । तं ज्ञातुं प्रेषिता विप्राश्चत्वारो वृद्धसन्निधौ ॥ ११

३६. यदेकः स्थविरो वेत्ति न तत्तरुणकोटयः ।
यो नृपं लत्तया हन्ति वृद्धवाक्यात् स पूज्यते ॥ १ ॥

तैश्च गत्वा मरौ देशे स्थविरः कोऽप्यपृच्छत । स्वपिता दर्शितस्तेन तेनापि स्वपितामहः ॥ १२
सविंशतिशतवर्षदेशीयस्यास्य संनिधौ । विप्रैरपृच्छि शीर्षस्य मुडतीत्युक्तिकारणम् ॥ १३
सोऽप्यूचे भोजयित्वा तान् मुनीडिम्भचतुष्टयम् । गृह्णीतेदं महामूल्यं शुद्धलक्ष्यव्ययो यतः ॥ १४
लोभाद् विप्रा अपि कट्यौ कृत्वा तांश्चलनाक्षमान् । व्याघुटन्त वृद्धमूचुः स्वसन्देहस्तथैव नः ॥ १५
संशयच्छिन्न एवायमित्युक्ते तेन तेऽभ्यधुः । कथं स ऊचे शास्त्रज्ञा अप्येतदपि वेत्थ न ॥ १६

३७. श्वानगर्दभचाण्डालमद्यभाण्डरजस्वलाः ।
स्पृष्ट्वा देवकुलं चैव सचैलं स्नानमाचरेत् ॥ १ ॥

शास्त्रे निषिद्धः संस्पर्शो विप्राणां युज्यते कथम् । तेऽप्यूचुर्बहुमूल्यानि श्वडिम्भानि त्वमप्यधाः ॥ १७
ततोऽस्माभिर्गृहीतानि लोभाद् विक्रीयते न किम् । ऊचे वृद्धस्तदेवेदं विप्रे मुडति लोभतः ॥ १८
इति ते छिन्नसन्देहाः कुमारेहागताः पुनः । पण्डितैः पुस्तकेष्वेवं लिखितोऽर्थः सविस्तरः ॥ १९
राज्ञेऽदर्शि नृपोऽप्याह सत्यमेतत् शिरो यदि । श्रुत्वेनमर्थं न पुनः सरसो निःसरिष्यति ॥ १२०
तथाकृते तथाजाते चैत्यं निर्माय भूभुजा । देवस्थाने स्थापितं च शीर्षमेतत् प्रसिद्धये ॥ २१
तत् श्रुत्वा विविधाश्चर्यदर्शनाज्जातविस्मयः । किंचित् कालं कुमारोऽपि स्थित्वा कान्त्या विनिर्ययौ ॥ २२

*

§ २२. मल्लिनाटजनपदे गतः कोलंबपत्तने । महालक्ष्म्या च कोलंबस्वामी स्वप्ने न्यगद्यत ॥ २३
भविष्यो गूर्जरात्र्यायाः स्वामी यस्तव पत्तने । समेष्यति जटाधारी विधेयं तस्य पूजनम् ॥ २४
चतसृषु दिक्षु मुक्तैः पुरुषैः पुरसीमनि । यथोक्तलक्षणैर्वीक्ष्य कुमारो भक्तिपूर्वकम् ॥ २५
आहूय नृपतेः पार्श्वे समानिन्ये ततो नृपः । अभ्युत्थाय स्वकीयार्द्धासने तं स न्यवेशयत् ॥ २६
निगद्य च तमादेशं राज्ञा राज्ये निमन्त्रितः । निषिद्धः कुमारस्तस्य पार्श्वे तस्थौ यथासुखम् ॥ २७

सोचे तथापि तेऽभीष्टं कुमार ! किं करोम्यहम् । कुमारः प्राह येनात्र ज्ञायते मे समागमः ॥ २८
दशगव्यूतिविस्तारे कोलंवपत्तनान्तरे । भूमीमप्राप्य राज्ञाऽथ संकोच्य निजमन्दिरम् ॥ २९
कुमारपालेश्वराख्यः प्रासादस्तत्र कारितः । कुमारपालनामाङ्कं नाणकं च प्रवर्त्तितम् ॥ १३०

तद् दृष्ट्वा कुमारश्चिन्तितवान्–अहोऽस्य परमा प्रीतिः ।

३८. यथा चित्तं तथा वाचो यथा वाचस्तथा क्रिया ।
चित्ते वाचि क्रियायां च साधूनामेकरूपता ॥ १ ॥

ततः कुमारो निर्याय प्रतिष्ठानपुरं गतः । द्विपंचाशद्वीरकूपाद्याश्चर्याणि विलोकयत् ॥ ३१

*

§ २३. प्राप्तः क्रमेणोज्जयिन्यां निजस्वजनसन्निधौ । भ्रमंस्तत्रान्यदायातः कुडंगेश्वरमन्दिरे ॥ ३२
प्रणम्य लिङ्गं तन्मध्ये व्याप्तं सप्तफणाङ्कुरैः । वीक्ष्य प्रशस्तिमध्ये तु गाथामेतामवाचयत् ॥ ३३

३९. पुन्ने वाससहस्से सयंमि वरिसाण नवनवइ अहिए ।
होही कुमरनरिंदो तुह विक्कमराय ! सारिच्छो ॥ १ ॥

आत्मनो नामसाम्यं च वर्षाणां वीक्ष्य पूर्णताम् । गाथार्थं कुमरोऽपृच्छत् जैनदर्शनसन्निधौ ॥ ३४
सोऽप्याह पूर्वमत्रासीत् सिद्धसेनो दिवाकरः । विक्रमादित्यभूपस्य तेनाभ्यर्थनया किल ॥ ३५
द्वात्रिंशद्वात्रिंशिकाभिर्वीतरागः स्तुतस्ततः । कुडंगेश्वरलिङ्गं च स्फुटितं तस्य मध्यतः ॥ ३६
आविरभूद् धरणेन्द्रः श्रीपार्श्वप्रतिमाकरः । तं दृष्ट्वा विक्रमादित्यः संजातः परमार्हतः ॥ ३७
गुरूपदेशतस्तेन कारितं भूमिमण्डलम् । अनृणं निजदानेन ततः संवत्सरोऽस्य महान् ॥ ३८
तेनैकदा सिद्धसेनः पृष्टः किं कोऽपि भारते । अतःपरं जैनभक्तः सार्वभूमो भविष्यति ॥ ३९
श्रुतज्ञानेन विज्ञाय गाथेयं गुरुणोदिता । राज्ञा च लेखिताऽत्रैव तत् श्रुत्वा कुमरोऽवदत् ॥ १४०
आर्हतानामहो शक्तिः, अहो ज्ञानमहो मतम् । अहो परोपकारित्वं, किममीषां हि नाद्भुतम् ॥ ४१
ततः सज्जन-भोपलदेवी-वोसिरिभिः समम् । धृत्वा निर्भरवेषं स उज्जयिन्या विनिर्ययौ ॥ ४२

*

दशपुरे पद्मासनासीनं प्रशमामृतधरं योगिनं विलोक्य ननाम । स ध्यानं मुक्त्वा कुमारमूचे–

४०. सर्वस्मिन्नणिमादिपङ्कजवने रम्येऽपि हित्वा रतिं,
शुद्धां मुक्तिमरालिकां प्रति दृशं यो दत्तवानादरात् ।
चेलोवृत्तिनिरोधलब्धपरमब्रह्मप्रमोदाम्बुभृत्,
सम्यक्साम्यसरोजसंस्थितिजुषे हंसाय तस्मै नमः ॥ १ ॥

ततः कुमारोऽपृच्छत्–'योगिन् ! किं स्नानं किं दानं किं ध्यानं चेति ?' योग्यूचे–

४१. स्नानं मनोमलत्यागो दानं चाभयदक्षिणा ।
ज्ञानं तत्त्वार्थसंबोधो ध्यानं निर्विषयं मनः ॥ १ ॥

एतदाकर्ण्य प्रमुदितः ।

*

§ २४. मध्ये दशपुरे स्थित्वा चित्रकूटनगं गतः । शान्तिचैत्ये श्वेतभिक्षो रामचन्द्रस्य सन्निधौ ॥ ४३
जाते चित्रे चित्रकूटदुर्गोत्पत्तिमपृच्छ्यत । रामोऽप्यूचेऽतः क्रोशत्रयेऽभून्मध्यमापुरी ॥ ४४
तत्र चित्राङ्गदो राजा सोऽन्यदामितैः फलैः । योगिना व्याघ्रयुक्तेन षण्मासावधि सेवितः ॥ ४५

पृष्टो हेतुरयो राज्ञा योग्यूचे मन्त्रसिद्धये । द्वात्रिंशल्लक्षणवतः सान्निध्यात् ते भवेच्च सः ॥ ४६

राज्ञा पृष्टे पुनः कानि लक्षणानि महीतले । कौतुकं यदि ते तर्हि श्रूयतां तानि भूधर ! ॥ ४७

४२. नाभिः स्वरः सत्त्वमिति प्रतीतं गम्भीरमेतत्त्रितयं नराणाम् ।
उरो ललाटं वदनं च पुंसां विस्तीर्णमेतत्त्रितयं प्रदिष्टम् ॥ १ ॥

४३. वक्षोऽथ कुक्षिर्नखनासिकास्यं कृकाटिका चेति षडुन्नतानि ।
ह्रस्वानि चत्वार्यथ लिङ्गपृष्ठं ग्रीवा च जंघेऽभिमतप्रदानि ॥ २ ॥

४४. नेत्रान्त-पाद-कर-ताल्वधरोष्ठ-जिह्वा रक्तान्यमूनि ननु सप्त हितप्रदानि ।
सूक्ष्माणि पंच दशनाङ्गुलिपर्वकेशाः साकं त्वचा कररुहाश्च न दुःखितानाम् ॥ ३ ॥

४५. हनु-लोचन-बाहु-नासिका-स्तनयोरन्तरमत्र पञ्चकम् ।
इति दीर्घमिदं तु पञ्चकं न भवत्येव नृणाममूभुजाम् ॥ ४ ॥

४६. त्रिषु विपुलो गम्भीरस्त्रिष्वेव षडुन्नतश्चतुर्ह्रस्वः ।
सप्तसु रक्तो राजा पञ्चसु सूक्ष्मश्च दीर्घश्च ॥ ५ ॥

श्रुत्वेति मुदितो राजा प्राह योगीन्द्रमुत्तमम् । किमु कार्यं मयाख्याहि यथा तथा करोम्यहम् ॥ ४८

यतः कृष्णचतुर्दश्यां रात्रौ चित्रनगोपरि । मम सिद्ध्यति मन्त्रश्चेत् त्वं तत्रोत्तरसाधकः ॥ ४९

ओमित्युक्त्वा नरेन्द्रेण स योगीन्द्रो व्यसृज्यत । राजपक्ष्यान्तरितया तत् श्रुत्वाऽवाचि मन्त्रिणे ॥ १५०

उवाच मन्त्री ज्ञाप्योऽहं यदा तत्र व्रजेत् नृपः । ततो यथोक्तवेलायां खड्गव्यग्रकरो नृपः ॥ ५१

एकाकी निर्ययौ छन्नो राजा ज्ञात्वा मन्त्र्यपि । दक्षो नरेन्द्ररक्षार्थं नृपेणालक्षितो ययौ ॥ ५२

नृपोऽपि चित्रशैलाग्रमारूढो वीक्ष्य योगिनम् । व्याघ्रं च होमसामग्री ततोऽजल्पत् करोमि किम् ॥ ५३

रक्षार्थं होमसामग्र्या मुक्त्वा तत्र नरेश्वरम् । योगी जलार्थं सव्याघ्रः क्षीरकूपं गतः स्वयम् ॥ ५४

इतश्च प्रकटीभूय नत्वोचे मन्त्रिणा नृपः । देवोपकरणैरेभिः साध्यते स्वर्णपूरुषः ॥ ५५

तत्वं सिसाधयिषुर्योगी होमित्वा त्वत्तनुं ध्रुवम् । तद् यतस्व स्वरक्षायै इत्युक्त्वाऽन्तरितोऽथ सः ॥ ५६

राज्ञा सह ततः स्नात्वा जलमानीय योगिना । विलेपनैर्विलिप्याङ्गं होमार्थं ज्वालितोऽनलः ॥ ५७

उक्तश्च राजा त्वं देव ! प्रतिपन्नैकवत्सलः । तदस्य वह्निकुण्डस्य देहि प्रदक्षिणात्रयम् ॥ ५८

राजा सशङ्कस्तं स्माह त्वं योगिन्नग्रतो भव । ततो योगी तथा कुर्वन् च्छलं प्राप भूपतेः ॥ ५९

अथ व्यावृत्त्य सहसा नृपं यावज्जुहोति सः । तावन्नरेन्द्र-मन्त्रिभ्यां स एवाग्नौ हुतो हठात् ॥ १६०

व्याघ्रोऽप्यनुप्रविष्टस्तं संजातः स्वर्णपूरुषः । संपूज्य तं गृहीत्वा च राजाऽगान्मध्यमां पुरीम् ॥ ६१

यच्छन् यथेच्छं द्रविणं ख्यातिं स प्राप सर्वतः । ततः स्वर्णद्धिरक्षार्थमादिदेशेति मन्त्रिणम् ॥ ६२

यथा चित्रगिरेः पार्श्वे कूटशैलोऽस्ति दुर्गमः । तस्योपरि महादुर्गं कारयामघुरोधमः ॥ ६३

मन्त्रिणापि तथारब्धे यावच्चेचीयते दिवा । तावन्निपतति रात्रौ षण्मासा इति जज्ञिरे ॥ ६४

तथाप्यमङ्गुरोत्साहं नृपं कूटाचलाधिपः । उवाच मा कृथा दुर्गमत्र कर्तुं न कोऽप्यलम् ॥ ६५

प्राणात्ययेऽपि कर्ताऽस्मि नृपेणोक्ते सुरोऽब्रवीत् । यद्येव निश्चयस्तर्हि कुरु चित्रनगोपरि ॥ ६६

दुर्गस्य नाम मध्ये तु देय मन्नाम भूपते ! । तत्र चित्राङ्गदश्चक्रे दुर्गं चित्रनगोपरि ॥ ६७

नगरं चित्रकूटाख्य देवेन तदधिष्ठितम् । कोटीध्वजाना यन्मध्ये सहस्राणि चतुर्दश ॥ ६८

लक्षेश्वराणां योग्या च कारिता तत्रहट्टिका । वापीकूपसरोमुख्यं शेषं देवेन कारितम् ॥ ६९

इतश्च स्वर्णपुरुषं सिद्धं चित्राङ्गदस्य तम् । श्रुत्वा कन्यकुब्जेशः शांभरीशो नृपो बली ॥ १७०

अरौत्सीद् दुर्गमागत्य ततश्चित्राङ्गदोऽपि हि । नियन्त्रितपुरद्वारो लसत्युपरि निर्भयः ॥ —युग्मम् ॥ ७१
चराः कौशिकवेषेण वर्यैः कतिपयैः पुरम् । प्रविश्य शुश्रुवुर्वार्तां गृहे शुल्काधिकारिणः ॥ ७२
गवाक्षस्था मन्त्रिपुत्री लालयन्ती निजं सुतम् । भाषते तात ! किं नैते मुच्यन्ते वणिजारकाः ? ॥ ७३
हसित्वा तत्पिताहैते न वत्से ! वणिजारकाः । शंभलीशचमूरेषाऽवात्सीद् दुर्गजिघृक्षया ॥ ७४
वत्से ! जन्म यदा तेऽभूत्, तदेदं सैन्यमागतम् । त्वमूढा च पुत्रवती जाताप्येतत् तथैव च ॥ ७५
तत् श्रुत्वा शंभलीशोऽपि ससैन्यो दुर्गमे पुरे । प्रातः प्रोक्तो गवाक्षस्थवर्करीवेश्यया यतः ॥ ७६

४७. गण्डूपदः किमधिरोहति मेरुशृङ्गं किं वा रवेरजगरो निरुणद्धि मार्गम् ।
शक्येषु वस्तुषु बुधाः श्रममारभन्ते दुर्गग्रहग्रहिलतां त्यज शंभलीश ! ॥ १ ॥

अथापसृत्य राज्ञापि प्रेषिता गूढपूरुषाः । समर्प्य प्राभृतं तस्याः प्रोचुः स्वामिनि ! नः प्रभुः ॥ ७७
जित्वा चित्राङ्गदं दुर्गजिघृक्षुस्त्वत्प्रसादतः । तत् प्रसीदादिशोपायं साऽपि हृष्टा जगाद तान् ॥ ७८
सर्वप्रतोलीरुद्घाट्य पूरितार्थिमनोरथः । भुंक्ते चित्राङ्गदो नित्यं प्रवेष्टव्यं तदा त्वया ॥ ७९
विवृणोमि गवाक्षस्था यदा केशानहं तदा । ज्ञेया भोजनवेला सा तं ज्ञात्वा शंभलीशकः ॥ १८०
वर्करीगणिकाभेदाद् द्वितीये जगृहेऽह्नि तम् । दुर्गे ततश्चित्राङ्गदो गृहीत्वा स्वर्णपूरुषम् ॥ ८१
क्षीरकूपे ददौ झंपां तत् श्रुत्वा शंभलीशराट् । क्षीरकूपाज्जलं कृष्ट्वा द्रष्टा तं स्वर्णपूरुषम् ॥ ८२
यावदाकर्षते तावत् पुनः पूर्णः स कूपकः । विलक्षोऽप्यसौ मनसि स्त्रीचरित्रमचिन्तयत् ॥ ८३

४८. एता हसन्ति च रुदन्ति च कार्यहेतोर्विश्वासयन्ति च परं न च विश्वसन्ति ।
तस्मान्नरेण कुलशीलसमन्वितेन नार्यः श्मशानघटिका इव वर्जनीयाः ॥ १ ॥

अपि च—

४९. संमोहयन्ति मदयन्ति विषादयन्ति निर्भर्त्सयन्ति रमयन्ति विडम्बयन्ति ।
एताः प्रविश्य सदयं हृदयं नराणां किं नाम वामनयना न समाचरन्ति ॥ २ ॥

५०. सउ चित्तहं सट्ठी मणहं पंचासठी हीयाइं ।
अम्मी ते नर ढड्डसी जे पत्तिज्जइ ताहं ॥ ३ ॥

५१. पाहित्थी सवि वंकडी किम पत्तिज्जि तास ।
नीयसिरि घड उवडावि करि पच्छइं दिइ जे पास ॥ ४ ॥

५२. प्राप्तुं पारमपारस्य पारावारस्य पार्यते ।
स्त्रीणां प्रकृतिवक्राणां दुश्चरित्रस्य नो पुनः ॥ ५ ॥

ततो विलक्ष्य चित्राङ्गसुतं वाराहयुग्मकम् । संस्थाप्य च स्वयं राज्ये महोत्सवपुरस्सरम् ॥ ८४
शनैःशनैर्व्रजन् भूयः कन्यकुब्जं पुनर्गतः । सभायामेऽपठद् दुर्गं भद्रो वादीश्वरोऽन्यदा ॥ ८५

५३. चित्रकूटमिदं भद्रे ! पृथिव्यामेकलोचनम् ।
द्वितीयस्याप्यकस्यार्थे तपस्तपति मेदिनी ॥ १ ॥

कुमारः सपरीवारः तत् श्रुत्वाऽऽरुह्य तं नगम् । विस्मितः सर्वतो वीक्ष्य दिग्भागान् निजगाद च ॥८६

५४. शैलाः सर्वे गण्डशैलानुकारा वृक्षा ग्रामाः क्षामधामोपमानाः ।
कुल्याकल्पाः प्रौढसिन्धुप्रवाहाः सन्दृश्यन्ते दूरतोऽस्याधिरूढैः ॥ १ ॥

ततः श्रीरघुवंशमौक्तिकश्रीकीर्तिधरराजर्षिपुत्रस्य सुकोसलमहर्षेः पूर्वभवमातृव्याघ्रीकृतोपसर्गस्य समुत्पन्न-केवलज्ञानस्य निर्वाणभूमिकां चित्रकूटाख्यां नत्वा,

§ २५. ततस्तदीक्ष्य सोत्कण्ठः कान्यकुब्जपुरं ययौ । आम्राणां लक्षशो वीक्ष्य लक्षारामान् सविस्मयः ॥ ८७

पप्रच्छ कंचित् किमाम्रा दृश्यन्ते गणनातिगाः । सोऽप्यूचे न करोऽस्त्यत्र धूर्तानां तद् घना अमी ॥ ८८

राज्येऽहमपि धूर्तानां करं मोक्ष्ये स्वनीवृति । विचिन्त्येति कुमारोऽगात् काशीं निर्भरवेषभाक् ॥ ८९

ग्राममेकेन वणिजा यष्ट्याद्यैः सत्कृतः कृती । द्वितीयेऽह्नि लुण्ट्यमानं तद्गृहं वीक्ष्य दुःखितः ॥ १९०

कंचित् पप्रच्छ किमिदं सोचेऽप्यपुत्रको वणिक् । मृतोऽस्मी तद्गृहं तेन लुण्ट्यते राजपूरुषैः ॥ ९१

श्रुत्वेति चकितः स्वान्ते भवरूपं विभावयत् । यथा क्षणादसौ नष्टः श्रेष्ठी सर्वं तथा भवेत् ॥ ९२

५५. असारः संसारः सरलकदलीसारसदृशो,
लसद्विद्युद्वल्लीचकितचपलं जीवितमिदम् ।
यदेतत् तारुण्यं नगगतनदीवेगसदृशं,
अहो धार्ष्ट्यं पुंसां तदपि विषयान् धावति मनः ॥ १ ॥

कुमारश्चिन्तयदसौ धिग् राज्यं यदपुत्रिणाम् । म्लेच्छानामपि सर्वस्वं राजा गृह्णाति पुत्रवत् ॥ ९३

५६. दुर्भिक्षोदयमन्नसंग्रहपरः पत्युर्वधं बन्धुकी,
व्यापत्सर्वपतेर्भिषक् गदगणोत्पातं कलिं नारदः ।
दोषग्राहिजनस्तु पश्यति परच्छिद्रं छलं शाकिनी,
निःपुत्रं म्रियमाणमाढ्यमवनीपालो दृढं वाञ्छति ॥ १ ॥

राज्ये नाहं ग्रहीष्यामि स्वदेशे स्वमपुत्रिणाम् । प्रतिज्ञायेति कुमरो गतः पाटलिपुत्रके ॥ ९४

तत्र च पुरा संजातनवनन्दकारितनवस्वर्णमयपर्वतादिस्वरूपं श्रुत्वा मनस्यचिन्तयत्–

५७. येषां वित्तैः प्रतिपदमियं पूरिता भूतधात्री,
यैरप्येतद् भुवनवलयं निर्मितं लीलयैव ।
तेऽप्येतस्मिन् गुरुभवहृदे बुद्बुदस्तम्बलीलां,
धृत्वा धृत्वा सपदि विलयं भूभुजः संप्रयाताः ॥ १ ॥

यदस्माकं वित्तव्ययो भविष्यति तदा दानभोगादौ व्ययं करिष्याम इत्यादि बहु विचिन्त्याग्रे चचाल ।

ततो राजगृहे गच्छन् वीक्ष्य वैभारपर्वतम् । श्रुत्वा समवसरणस्थानान्येष विसिष्मिये । ९५

तत्र प्राग्भवपुण्यप्राग्भारशालिनः श्रीशालिभद्रस्य सौधनिर्माल्योत्तीर्णस्वर्णमाणिक्यमणिमयाभरणप्रक्षेपवापी-प्रमुखस्थानानि निरीक्ष्य भोगलीलां वैराग्यं च श्रुत्वा विस्मयस्मेरमनाश्चिन्तयति स्म । यथा–

५८. प्रज्ञाज्ञानविवेकिनोऽमलधियः कुर्वन्त्यहो दुष्करं,
यन्मुञ्चन्त्युपभोगभाञ्ज्यपि धनान्येकान्ततो निस्पृहाः ।
न प्रासानि पुरा न संप्रति न च प्राप्तौ दृढप्रत्ययाः,
वाञ्छामात्रपरिग्रहाण्यपि परं त्यक्तुं न शक्ता वयम् ॥ १ ॥

ततो वैभारगिरिमारुरोह । श्रीशालिभद्रपादपोपगमानशनशिलातलादि निरीक्ष्य चेतसि चमत्कृतो वैराग्यवान् जातः । ततो नवद्वीपकदेशेषु गत्वाऽजयपुरं ययौ । तत्र बहिः सर्वर्तुपुष्पफलोपेतमनोरमोद्याने शक्रावतारतीर्थे गतः । तत्र कमपि वृद्धपुरुषं तत्स्वरूपमपृच्छत् । तेनोक्तम्–'पुरा श्रीयुगादिदेवस्य शतं पुत्रा आसन् । तेषु जयनामकुमारस्थापितमिदं जयपुरम् । अन्यदाऽत्र शक्रादिसुरासुरनरनिकरनायकसेव्यपादारविन्दः श्रीऋषभदेवः समवासार्षीत् । तदा समवसरणस्थाने शक्रनिर्मितः प्रासादोऽयम् । षड्ऋतुमयमुद्यानं च भगवत्पूजार्थमिदम् ।

एतदाकर्ण्य विस्मयमनाश्चेतसीदं चिन्तयन्–'अहो! अनादिकालीनोऽयं श्रीजिनधर्मः, महाप्रभावश्च। ततः स्वयं तत्र गत्वा आदिदेवं ननाम।

ततोऽपि कामरूपेऽगात् कामाख्येक्षणकौतुकी।

तत्र कामाक्षीदेवीभवने गतः। पूजार्थमागतं निजरूपनिर्जितकामवामाक्षीगर्वसर्वस्वं स्त्रीवृन्दं देशस्वभावान्मुक्तमर्यादं सकलकलाकुशलमवेक्ष्याचिन्तयत्–

**५९. संसार! तव निस्तारपदवी न दवीयसि। अन्तरा दुस्तरा न स्युर्यदि रे मदिरेक्षणाः॥**
**६०. वैरिवारणदन्ताग्रे समारुह्य स्थिरीकृता। धीरश्रीर्यैर्महासत्त्वैर्योपिद्भिस्तेऽपि खण्डिताः॥**

§ ३६. ततोऽगात् तत्र 'यत्रास्ति सर्परूपेण भूपतिः। मौलिकं दैवकं चापि यद्राज्ये न भयं भवेत्॥ ९६

कश्चिद्नृपपार्श्वे सर्पराज्यकारणमपृच्छत्–तेनोक्तम्–'भो! पुरा नागकुमारदेवस्थापितं नागेन्द्रपत्तनमिदम्। तत्र श्रीकान्तराजा अत्यन्तश्रीमान् दाता भोक्ता विवेकी प्रजाप्रियः परं यदपि तदपि कारणं प्राप्य क्रोधी भवति।

**६१. यतः–नाकारणरुषां संख्या संख्याताः कारणे क्रुधः।**
**कारणेऽपि न कुप्यन्ते ये ते जगति पंचषाः॥ १॥**

ततः स राजाऽन्यदा क्रोधान्धो भ्रजन् सौधान्धकारे स्तम्भाभिघातमूर्च्छितो निःपुत्रो मृत्वाऽऽर्त्तध्यानवशात् सप्तफणालंकृतः सर्पोऽभूत् स्वभाण्डागारे। स मंत्रिभिर्वारं वारं बहिर्मुक्तः स्वद्रविणमोहितः पुनः पुनस्तत्रैवायाति। राज्यं पुत्रं विना[शून्यं]जातम्। वैरिभिर्निरुद्धम्। ततो महति संकटे लोकैः पुरस्थापकनागकुमारदेवः स्मृतः। स समायातः। स जातिस्मरं नागं सप्तफणालंकृतं [दृष्ट्वा, अयं] अस्मदीयकुलोत्पन्नः, पुराऽप्यस्य पुरस्य स्वामी, ततोऽयमेव राजा भवतु,–इति नागकुमारदेवकृतराज्याभिषेकस्तत्प्रभावाद्राज्यं करोति। देवः सौस्थ्यं विधाय स्वस्थानमगात्। सोऽयं नागराजसाम्राज्यम्। एतन्निशम्य कुमारेण चिन्तितम्–'अहो! दुर्गतिदाता क्रोधः। ततः पुरमध्ये–

कुमारोऽगाच्चर्मकारवालचंद्रापणेऽन्यदा। उपानद्द्वयं तेनापि सादरं पूर्वनिर्मितम्॥ ९७
उपानद्युगलमेतद् युज्यते तव पादयोः। मूल्येनालं तव स्वामिन्! मंगलीके मया कृतम्॥ ९८
हृष्टश्च शुभवाक्येन शुश्राव कुमरस्तदा। पत्तने पादुकाराज्यं मरणं सिद्धभूपतेः॥ ९९
कुमारपालराजानं शृणोपि पत्तने यदा। शीघ्रमेवास्तदामन्त्र्य मोचिकं कुमरस्ततः॥ २००
उज्जयिन्यां सानुचरो गत्वाऽखण्डप्रयाणकैः। कलाली–सिद्धपुरेऽमालात्ताशेषकुटुम्बकम्॥ २०१
तत्र पूर्वमतिपन्नमातुलस्य द्विजन्मनः। गृहे मुक्त्वा स्वकुटुम्बमेकाकी पत्तने ययौ॥ २०२

*

§ २७. गत्वा गृहे कृष्णभट्टदेवस्य भगिनीपतेः। रात्रौ ननाम भगिनीं कुमारः प्रमिलाभिधाम्॥ २०३
भ्रातेति प्रत्यभिज्ञाय तयापि स्नापितः स्वयम्। स्नाननीरे वीक्ष्य स्नातां दुर्गां शाकुनिकोऽब्रवीत्॥ २०४
सप्ताहान्तर्भवान् राजा प्रमाणं शकुना यदि। तदाकर्ण्य भगिन्याऽपि विज्ञप्तं पत्युरात्मनः॥ २०५
मण्डलेशकृष्णदेवः कुमारं परिरभ्य तम्। तवैव राज्यं नान्यस्य मा विषीदेत्युवाच सः॥ २०६
महितटदेशाधीशं विजयपालराणकम्। मित्रमाकार्य कृष्णेन पर्यालोचः कृतस्ततः॥ २०७
अग्रे प्रधानैश्चोलुक्यौ तौ द्वौ राज्यार्थमाहूतौ। महीपाल–रत्नपालौ राज्यं स्वस्यैव मे मतिः॥ २०८
द्वितीयेऽह्नि प्रधानानां ज्ञापयित्वेति तौ ततः। आजूहवत् कुमारं च श्रीजयसिंहमेरुके॥ २०९
ततः प्रधानैः सम्भूय पूर्वं राज्यार्थमाहूतः। महीपालस्तु तान्नत्वा दत्तादेशं करोमि किम्॥ २१०
तं निरस्य रत्नपालस्तैराहूतो महेश्वरम्। प्रणम्य सचिवादींश्च प्राञ्जलिः प्राह पूर्ववत्॥ ११
विसृष्टः सोऽप्यथाहूतः कुमारपाल ईश्वरम्। नत्वा सद्देत्मानयोत्तरीयाग्रस्प्रशयम्॥ १२
कुमारपालः [तैः] पृष्टः–'कथं राज्यं करिष्यसि?'। कृपाणं दर्शितं तेन केनापि पठितं पदः॥ १३

९२. न श्रीः कुलक्रमायाता शासने लिखिता न तु ।
खड्गेनाक्रम्य भुञ्जीत वीरभोग्या वसुन्धरा ॥ १ ॥

स्नानाद्यास्ताभिषेकाय मृगेन्द्रासनमास्थितः । ततः कृष्णादिभिः प्रोचे परामर्शं विमुच्य भोः ! ॥ १४
अत्रार्थे मा विलम्बध्वं कार्यं चेज्जीवितेन वः । तद्धीतैस्तैस्तया चक्रे कुमारगुणरञ्जितैः ॥ १५
मुक्तानां सैनिका क्षिप्ता तच्छीर्षेऽभूत् सपत्रिका । कृष्णदेवभट्टमुख्यैस्ततो राजेत्यसौ नतः ॥ १६
श्रीकुमारपालदेवो वेष्टितो मण्डलेश्वरैः । पट्टहस्तिसमारूढो मेघाडम्बरमण्डितः ॥ १७
चामरैर्वीज्यमानस्तु शृण्वन् पौरजनाशिषः । विविधातोद्यनिर्घोषैर्बधिरीकृतदिङ्मुखः ॥ १८
हास्तिकाश्वीयपादातिरथकट्यामिकोटिभिः । पुरतः पार्श्वतः पश्चाल्लोकैश्च परिवारितः ॥ १९
प्रदत्तच्छटकुङ्कुमैर्मदैर्मृगमदैरपि । ददानं तदाऽर्थिभ्यो राजा प्रासादमासदत् ॥ २२०

§ २८. ततः श्रीमत्कान्हडदेवमुख्यैः समस्तैरपि [सामन्तैः] पश्चात्चुम्बितभूतलं नमोऽकारि । स प्रौढतया देशान्तरपरिभ्रमणनैपुण्येन राज्यशास्तिं स्वयं कुर्वन्, राज्यवृद्धानां प्रधानानामरोचमानस्तैः सम्भूय व्यापादयितुं व्यवस्थितः । सान्धकारगोपुरेषु न्यस्तेषु घातकेषु प्राक्तनशुभकर्मणा प्रेरितेन केनाप्याप्तेन ज्ञापितस्तद्वृत्तान्तस्तं प्रदेशं विहाय द्वारान्तरेण धर्मं प्रविष्टः । तदनु तान् प्रधानान् यमपुरीं प्रति प्राहिणोत् ।

§ २९. स भावुकमण्डलेश्वरः शालकसम्बन्धात् राजस्थापनाचार्यत्वाच्च राजपाटिकायां सर्वावसरेषु च प्राक्तनदुःखावस्थां समर्मतया जल्पति स्म । राज्ञोक्तम्—'त्वयाऽवसरमेवंविधं सभासमक्षं न वाच्यं, विजने तु यदृच्छया वाच्यम् ।

९३. यतः—आज्ञाभङ्गो नरेन्द्राणां महतां मानखण्डना ।
मर्मवाक्यं च लोकानामशस्त्रो वध उच्यते ॥ १ ॥
९४. याचको यक्षको व्याधिः पंचत्वं मर्मभाषकः ।
योगिनामप्यमी पञ्च प्रायेणोद्वेगहेतवः ॥ २ ॥

इति राज्ञोपरुद्ध उत्कटतया अवज्ञावशाच्च—'रे नालभज्ञ ! इदानीमेव पादौ त्यजसि ?' इति भाषमाणो भर्तुकाम औषधमिव तद्वचं पथ्यमपि न जग्राह । नृपस्तदा तदाकारसंवरणेनापह्नवं विधायापरस्मिन् दिवसे नृपसङ्केतितैर्मल्लैस्तदङ्गभङ्गं कृत्वा नयनयुगलमुद्धृत्य, तत्रस्थं तदावासे प्रस्थापयामास । अन्यान्तरेऽप्युक्तम्—

९५. काके शौचं द्यूतकारेषु सत्यं, सर्पे क्षान्तिः स्त्रीषु कामोपशान्तिः ।
क्लीबे धैर्यं मद्यपे तत्त्वचिन्ता, राजा मित्रं केन दृष्टं श्रुतं वा ॥ १ ॥
९६. यतः—शास्त्रं सुनिश्चितधिया परिचिन्तनीयमाराधितोऽपि नृपतिः परिशङ्कनीयः ।
आत्मीकृताऽपि युवतिः परिरक्षणीया; शास्त्रे नृपे च युवतौ च कुतः स्थिरत्वम् ॥२॥
९७. आद्रौ मयैवायमदीपि नूनं, न तद्दहेन्मामवहीलितोऽपि ।
इति भ्रमादङ्गुलिपर्वणापि, स्पृशेन्न नो दीप इवावनीपः ॥ ३ ॥

इति विमृशद्भिः समन्ततः सामन्तैर्भयभ्रान्तचित्तैस्ततःप्रभृति स नृपतिः प्रतिपदं सिषेवे ।

*

§ ३०. पट्टाभिषेकादनन्तरं सोलाकनामा गन्धर्वोऽवसरे गीतकलयाऽतुलया रञ्जिताद् राज्ञः षोडशाधिकं शतं प्रसादे द्रम्माणामवाप्य, तैः सुखभक्षिकां विसाध्य, बालकान् तया सन्तर्पयन् 'राज्ञो दानमल्पमि'त्युपहसन्, कुपितेन राज्ञा निर्वासितो विदेशं गतः । तत्रत्य भूपतेः परितोषिताद् गजयुगलमानीयोपायनीकुर्वन् चौलुक्यभूपालेन संमानितः । कदाचित् कोऽपि वैदेशिकगन्धर्वो 'मुषितोऽस्मी'ति तारं पुत्कारं कुर्वाणः, 'केन मुषितोऽसी'ति राज्ञाभिहितो 'मम गीतकलयाऽतुलया सामीप्यमुपेयुषा कौतुकार्पितगलप्रवक्ष्ठेन नश्यता मृगेणे'ति विज्ञापयामास । तदनु

सोलाभिधानो गन्धर्वराद् नृपतिना समादिष्टः, अटवीमटन्तं स्फीतगीतादिकृष्टिविधया गले खेलत्कनकशृङ्खलमृगं नगरान्तः समानीय तस्य नृपतेः समासमक्षं दर्शयामास । अथ तत्कलाकौशलेन चमत्कृतमानसः नृपतिः सोलाकं गीतकलाया अवधिं पप्रच्छ । स तु शुष्कदारुणः पल्लवप्ररोहमवधिं विज्ञप्तवान् । तर्हि तत्कौतुकं दर्शयेत्यादिष्टः, अर्बुदाद् गिरेर्विरहनामानं वृक्षमाक्षेपादानाय्य तत्शुष्कशाखाखण्डं राजाङ्गणे कुमारमृत्तिकाकृतालवाले चिक्षेप । मल्हारवर्णास्तअनवद्यगीतकलया सद्यः प्रोल्लसत्पल्लवितं निवेदयन्, स सपरिवारं नृपं तोषयामास । तदा सन्तुष्टेन राज्ञा पारितोषके ग्रामयमलं दत्तम् ।—चङ्कारसोलप्रबन्धः ।

*

§ ३१. कृतोपकारानाकार्य सर्वान् सत्त्वहितस्ततः । कृतज्ञः कृतवान् राजा तेषां पूजां यथोचिताम् ॥ २१

६८. स्वामिभक्तो जनोत्साही कृतज्ञो धार्मिकः शुचिः ।
अकर्कशः कुलीनश्च शास्त्रज्ञः सत्यभाषकः ॥ १ ॥

६९. विनीतः स्थूललक्षश्चाव्यसनी वृद्धसेवकः ।
अक्षुद्रः सत्त्वसंपन्नः प्राज्ञः शूरोऽचिरक्रियः ॥ २ ॥

७०. पूर्वपरीक्षितः सर्वोपधासु निजदेशजः ।
राजार्थ-स्वार्थ-लोकार्थकारको निस्पृहः शमी ॥ ३ ॥

७१. अमोघवचनः कल्पः पालिताशेपदर्शनः ।
पात्रौचित्ये च सर्वत्र नियोजितपदक्रमः ॥ ४ ॥

७२. आन्वीक्षिकी–त्रयी–वार्त्ता–दण्डनीतिकृतश्रमः ।
क्रमागतो वणिक्पुत्रो भवेन्मन्त्री न चापरः ॥ ५ ॥

इति नीतिं विमृश्य तेन राज्ञा पूर्वोपकारकर्तुः श्रीमदुदयनाङ्गजः श्रीवाग्भटदेवो महामात्यश्चक्रे । आलिगनामा ज्यायान् प्रधानः, महं उदयनदेवश्च ।

§ ३२. तदा चौलुक्यराज्ञा कृतज्ञचक्रवर्तिना आलिगकुलालाय सप्तशतीग्राममिता विचिना चित्रकूटपट्टिका ददे । ते तु निजान्वयेन लज्जमाना अद्यापि 'सागरा' इत्युच्यन्ते । यैश्च छिन्नकण्टकान्तरे प्रक्षिप्याक्षतो रक्षितस्तेऽङ्गरक्षकपदे प्रतिष्ठिताः । विस्मृताः श्रीहेमसूरयः ।

*

§ ३३. अन्यदा उदयनमन्त्रिणाऽऽहूताः श्रीपत्तने समायाताः समहोत्सवम् । कदाचिद् गुरुभिरूचे–'हे मन्त्रिन्! त्वं भूपं रहो ब्रूयाः–अद्य त्वया नवीनराज्ञीगृहे न सुप्तव्यं रात्रौ, सोपसर्गत्वात् । केनोक्तमिति पृच्छेच्चेत् तदाऽस्याग्रे मम नाम ब्रूयाः' । ततस्तेन मन्त्रिणा तथोक्ते, राज्ञा च तथाकृते, निशि विद्युत्पातात् तस्मिन् गृहे दग्धे, तस्यां च राज्यां मृतायां राजा चमत्कृतः । जगाद सादरम्–'मन्त्रिन्! कस्येदमनागतज्ञानं, महत्परोपकारित्वं च?।' ततो राज्ञानिर्बन्धे कृते मन्त्रिणा श्रीगुरूणामागमनमूचे । तत् श्रुत्वा प्रमुदितो नृपस्तानाकारयामास । राजसभायामुपागतानभ्युत्थाय ववन्दे, प्राञ्जलिरुवाच च–'भगवन्नहं निजास्यमपि दर्शयितुं नाऽलं तत्रभवताम् । तदा स्तम्भतीर्थे रक्षितः, भाविराज्यसमयचिठडिका चार्पिता । परमहं प्राप्तराज्योऽपि नास्मार्षम् । युष्माकं निष्कारणप्रथमोपकारिणामहं कथंचनापि नानृणीभवामि' । सूरिभिरूचे–

इत्थं विकल्पसे कस्मात् त्वमात्मानं मुधा नृपः । उपकारक्षणो यत्ते संप्रत्यस्ति समागतः ॥ २२

कृतज्ञत्वेन चेत् प्रत्युपचिकित्सि, तर्हि विश्वजनीने श्रीजैने धर्मे निजं मनो निधेहि । राज्ञा तत्प्रतिपद्योक्तम्–'युष्माभिरिहानिशमागन्तव्यमिति' । एवमाचार्यैः सह राज्ञः संगतिः समजनि ।

*

§ ३४. अथ श्रीकुमारपालः समस्तसामन्तचक्रवालचतुरङ्गचमूचंक्रमणचलाचलभूवलयः, दिग्विजययात्रायै चचाल। तत्र प्रथमं दक्षिणाशां प्रति प्रस्थितो लाट-महाराष्ट्र-कर्णाट-तिलंगादिदेशाना विन्ध्याचलम-साधयत्। ततो दक्षिणसमुद्रतटनिकटेऽटन् कल्लोलान् दृष्ट्वा कम्पकारणमपृच्छत्। तत्र कवयः प्रोचुः—

७३. प्राप्तः श्रीरेष कस्मात् पुनरपि मथितुं मन्थखेदं विधित्सुः
निद्रामप्यस्य संप्रत्यनलसमनसो नैव संभावयामि।
सेतुं बध्नाति भूयः किमिति च सकलद्वीपनाथानुपात-
स्त्वय्यायाते विकल्पानिति दधत इवाभाति कम्पः पयोधेः ॥ १ ॥

सपादलक्षटंकानौचित्येऽदात्। ततः सेतुबन्धं विलोक्य श्रीरामदेवप्रशस्तिमवाचयत्। यथा—

७४. शय्या शाड्वलमासनं शुचि शिलासद्म द्रुमाणामधः,
शीतं निर्झरवारि पानमशनं कन्दाः सहाया मृगाः।
इत्यप्रार्थितलभ्यसर्वविभवे दोषोऽयमेको वने,
दुःप्रापार्थिनि यत्परार्थघटनावन्ध्यैर्वृथा स्थीयते ॥ १ ॥

अहो रामस्य वदान्यता वनेऽपि। ततः परशुरामस्याश्रमं विलोक्योवाच—'अहो! क्रोधस्य विस्फूर्जितम्। यः पूर्वं स्वां जननीमघातयत्'। ततः—

७५. येन त्रिःसप्तकृत्वो नृपपलवसासान्द्रमांस्तिप्रपङ्कः,
प्राग्भारेऽकारि भूरिच्युतरुधिरसरिद्वारिपूरेऽभिषेकः।
यस्य स्त्रीबालवृद्धावधिनिधनविधौ निर्दयो विश्रुतोऽसौ,
राजन्योत्तंसकूटक्रथनपटुरटद् घोरधारः कुठारः ॥ १ ॥

अहो प्राणिनां सकलपुरुषार्थप्रत्यर्थी सदा संनिहितोऽयं क्रोधः आचन्द्रार्कमयशःपटुपटहघटनारणित इति सचिन्त्य पश्चाद् व्याघुट्यमानः पथि प्रवीणजनवाणीमशृणोत्। यथा—

७६. साधर्मीनकटकैरथोद्धता धूलयो जगति कुर्युरन्धताम्।
चेदिमाः करिघटामदाम्भसा भूयसा प्रशमयेस सर्वतः ॥ १ ॥

सपादलक्षमत्र दानम्।

अथ पश्चिमां प्रति चचाल। तत्र सुराष्ट्र-ब्राह्मणवाहक-पंचनद-सिन्धु-सौवीरादिदेशान् साधयामास। तत्र सिन्धुपश्चिमतटे पद्मपुरे पद्मनृपपुत्री पद्मिनी पद्मावती नाम्नी स्वप्रतीहारीमुखेन श्रीकुमारपाल-देवस्यातिरूपादिस्वरूपं श्रुत्वा, ततः कृतनिश्चया पित्रा विसृष्टा, सप्तकोटीद्रव्ययुता, सप्तशतसैन्धवतुरङ्गमपरिवृता, स्वसमानषोडशवराङ्गनासहिता, स्वयंवरा समायाता राज्ञा परिणीता। अस्मिन्नवसरे कश्चित् पपाठ—

७७. एकस्त्रिधा हृदि सदा वसति स्म चित्रं यो विद्विषां विदुषां च मृगीदृशां च।
तापं च संमदभरं च रतिं च सिञ्चन् शौर्योष्मणा च विनयेन च लीलया च ॥१॥

अत्रापि सपादं लक्षदानम्। ततः पश्चादागच्छन् द्वारिकासन्नः केनापि विज्ञप्तः—देवात्र कृष्णराजो 'श्रीकीर्तिकन्दे। राज्यमकरोत्'। तत्र [illegible]।

अथोत्तरां प्रति प्रतस्थे। तत्र काश्मीरोड्डियान-जालंधर-सपादलक्ष पर्वत-खसादिदेशान् हिमाचलमसाधयत्। तत्र गंगातटे नानावेषक्रियाचारदेवतादिभेदेन परस्पराधिक्षेपपरान् विवदमानान् बहु-विधतीर्थकानवलोक्याचिन्तयत्—

७८. प्रसन्नस्यास्तसङ्गस्य वीतरागस्य योगिनः।
भवन्ति सिद्धयः सर्वा विपर्यासे न किंचन ॥ १ ॥

७९. सर्वज्ञता नास्ति मनुष्यलोके नात्यन्तमूर्खोऽपि जनो हि कश्चित् ।
ज्ञानेन हीनोत्तममध्यमेन यो यद् विजानाति स तेन पण्डितः ॥ २ ॥

ततस्तत्र राजा निजकीर्त्तिप्रसरावसरमवेत्य सकलपाखण्डिनां यथाकामं दानमदात् । ततो वाणारस्यां भूतानन्दयोगिनं बहुपरीवारावृतं अनेकविद्यामन्त्रतन्त्रयन्त्रादिविचित्रकलाकौशलेनात्मीयकृतबहुजनं दृष्ट्वाऽचिन्तयत्—

८०. ये लुब्धचित्ता विषयार्थभोगे बहिर्विरागा हृदि बद्धरागाः ।
ते दाम्भिका वेषधराश्च धूर्त्ता मनांसि लोकस्य तु रञ्जयन्ति ॥ १ ॥

८१. कुलीनाः सुलभाः प्रायः सुलभाः शास्त्रशालिनः ।
सुशीलाश्चापि सुलभा दुर्लभा भुवि तात्त्विकाः ॥ २ ॥

ततः प्राचीं प्रति प्रतस्थे । तत्र कुरु-सूरसेन-कुशावर्त्त-पांचाल-विदेह-दशार्ण-मागधादीन् देशानसाधयत् । ततो राजाऽग्रतो गच्छन् क्वापि वने निर्विजने रहः प्रदेशे कमपि मुनिपुंगवमेकाकिनमन्तः समाधिस्वाधीनमनःप्रयोगं नासाग्रविन्यस्तार्द्धनिमीलितनयनं प्रशमपीयूषपानसुहितं सकलप्राणिवर्गस्य निजसंसर्गप्रणाशितनिसर्गवैरं स्वान्तैकान्तभावज्ञातनृपनिर्मितप्रणामं विलोक्य राजा सविस्मयं चिन्तयति स्म—

८२. तृणं ब्रह्मविदः स्वर्गस्तृणं शूरस्य जीवितम् ।
विरक्तस्य तृणं नारी निरीहस्य तृणं नृपः ॥ १ ॥

ततो राजा क्षणान्तरे कृतप्रणामः पुनः सकलभवक्लेशनाशिनीं धर्माशिषं समासाद्य प्रश्नमकरोत्—'भगवन् ! कथं दुरन्तविषयाशा निराश्यते ?' मुनिरुवाच—'राजन् !

८३. यस्यात्म-मनसोर्भिन्नरुच्योर्मैत्री प्रवर्त्तते ।
योगविघ्नैकनिघ्नेषु तस्येच्छाविषयेषु का ॥ १ ॥

एतन्निशम्य राजा सपरिकरः क्षणं मुनिप्रभावात् प्रशान्तस्वान्तः चेतसि चिन्तां चकार । अहो स्वार्थकृतस्यापि साम्यस्य महिमा नहि मानगोचरः । यतः—

८४. सारंगी सिंहशावं स्पृशति सुतधिया नन्दिनी व्याघ्रपोतं,
मार्जारी हंसबालं प्रणयपरवशा केकिकान्ता भुजङ्गम् ।
वैराण्याजन्मजातान्यपि गलितमदा जन्तवोऽन्ये त्यजेयु-
र्दृष्ट्वा साम्यैकरूढं प्रशमितकलुषं योगिनं क्षीणमोहम् ॥ १ ॥

ततो मुनिस्वरूपं निरूप्य स्वात्मानं निनिन्द । अहो विषयाशाकलुषं जगत् । ततो मुनिदेशनां निशम्य कतिभिः प्रयाणैः साधितभूवलयः, निभृतं भृतभाण्डागारः, चतुरङ्गचमूचमत्कृतचतुराशः, पूरितार्थिजनाशः, कृतकुनीतिप्रणाशः, प्रादुःकृतधर्ममार्गप्रकाशः, यशःपुञ्जपूरितत्रिभुवनावकाशः श्रीकुमारपालनरेश्वरः कृतप्रवेशमङ्गलमहोत्सवः श्रीपत्तनमाजगाम । द्वासप्ततिसामन्तभूपालैः कृतराज्याभिषेकः साम्राज्यं करोति ।

*

§ ३९. अथान्यदा श्रीचौलुक्यचक्रवर्त्ती सर्वावसरे स्थितः कौंकणदेशीयस्य मल्लिकार्जुनस्य राज्ञो मागधेन राजपितामह इति बिरुदमभिधीयमानमशृणोत् ।

८५. यथा—जित्वा प्राग् निखिलानिलापतिवरान् दुर्वारदोर्वीर्यतः,
कृत्वा चात्मवशंवदानविरतं तान् पौत्रवत् सर्वदा ।
धत्ते राजपितामहेति बिरुदं यो विश्वविश्वश्रुतं,
सोऽयं राजति मल्लिकार्जुननृपः कोदण्डविद्यार्जुनः ॥ १ ॥

§ ३४. अथ श्रीकुमारपालः समस्तसामन्तचक्रवालचतुरङ्गचमूचङ्क्रमणचलाचलभूवलयः, दिग्विजययात्रार्थं चचाल । तत्र प्रथमं दक्षिणाशां प्रति प्रस्थितो लाट-महाराष्ट्र-कर्णाट-तिलंगादिदेशान् विन्ध्याचलमसाधयत् । ततो दक्षिणसमुद्रतटनिकटेऽटन् कल्लोलान् दृष्ट्वा कम्पकारणमपृच्छत् । तत्र कवयः प्रोचुः –

७३. ग्रासः श्रीरेष कस्मात् पुनरपि मथितं मन्थखेदं विधित्सुः
निद्रामप्यस्य संप्रत्यनलसमनसो नैव संभावयामि ।
सेतुं बध्नाति भूयः किमिति च सकलद्वीपनाथानुयात-
स्त्वय्यायाते विकल्पानिति दधत इवाभाति कम्पः पयोधेः ॥ १ ॥

सपादलक्षटङ्कानौचिलेऽदात् । ततः सेतुबन्धं विलोक्य श्रीरामदेवप्रशस्तिमवाचयत् । यथा–

७४. शय्या शाड्वलमासनं शुचि शिलासद्म द्रुमाणामधः,
शीतं निर्झरवारि पानमशनं कन्दाः सहाया मृगाः ।
इत्यप्रार्थितलभ्यसर्वविभवे दोषोऽयमेको वने,
दुःप्रापार्थिनि यत्परार्थघटनावन्ध्यैर्वृथा स्थीयते ॥ १ ॥

अहो रामस्य वदान्यता वनेऽपि । ततः परशुरामस्याश्रमं विलोक्योवाच–'अहो ! क्रोधस्य विस्फूर्जितम् । यः पूर्वं स्वां जननीमघातयत्' । ततः –

७५. येन त्रिःसप्तकृत्वो नृपवलयवसासान्द्रमास्तिन्यपङ्कैः,
प्राग्भारेऽकारि भूरिच्युतरुधिरसरिद्वारिपूरेऽभिषेकः ।
यस्य स्त्रीबालवृद्धावधिनिधनविधौ निर्दयो विश्रुतोऽसौ,
राजन्योघांसकूटक्रथनपटुरटद् घोरधारः कुठारः ॥ १ ॥

अहो प्राणिनां सकलपुरुषार्थप्रत्यर्थी सदा सन्निहितोऽयं क्रोधः आचन्द्रार्कमयशःपटहपटनापण्डित इति सचिन्त्य पश्चाद् व्याघुट्यमानः पथि प्रवीणजनवाणीमशृणोत् । यथा–

७६. तावकीनकटकैरथोद्धता धूलयो जगति कुर्युरन्धताम् ।
चेदिमाः करिघटामदाम्भसा भूयसा प्रशमयेन्न सर्वतः ॥ १ ॥

सपादलक्षमत्र दानम् ।

अथ पश्चिमां प्रति चचाल । तत्र सुराष्ट्र-ब्राह्मणवाहक-पंचनद-सिन्धु सौवीरादिदेशान् साधयामास । तत्र सिन्धुपश्चिमतटे पद्मपुरे पद्मनृपपुत्री पद्मिनी पद्मावती नाम्नी स्वप्रतीहारीमुखेन श्रीकुमारपालदेवस्यातिरूपादिस्वरूपं श्रुत्वा, ततः कृतनिश्चया पित्रा विसृष्टा, सप्तकोटीद्रव्ययुता, सप्तशतसैन्धवतुरङ्गमपरिवृता, स्वसमानषोडशवराङ्गनासहिता, स्वयंवरा समायाता राज्ञा परिणीता । अस्मिन्नवसरे कश्चित् पपाठ–

७७ एकत्रिधा हृदि सदा वसति स्म चित्रं यो विद्विषां विदुषां च मृगीदृशां च ।
तापं च संमदभरं च रतिं च सिञ्चन् सूर्योष्मणा च विनयेन च लीलया च ॥१॥

अत्रापि सपाद लक्षदानम् । ततः पश्चादागच्छन् द्वारिकासन्नं केनापि विज्ञप्तः –देवात्र कृष्णराजो बलिनिकन्दनो राज्यमकरोत् । तत्र देवदाये द्वादशग्रामान् ददौ ।

अथोत्तरां प्रति प्रतस्थे । तत्र काश्मीरोड्डियान-जालंधर-सपादलक्ष पर्वत-खसादिदेशान् हिमाचलमसाधयत् । तत्र गंगातटे नानावेषनियमाचारदेवतादिभेदेन परस्पराधिक्षेपपरान् विवदमानान् बहुविधतीर्थिकानवलोक्याचिन्तयत्–

७८. प्रसन्नस्याप्तसङ्गस्य वीतरागस्य योगिनः ।
भवन्ति सिद्धयः सर्वा विपर्यासे न किंचन ॥ १ ॥

७९. सर्वज्ञता नास्ति मनुष्यलोके नात्यन्तमूर्खोऽपि जनो हि कश्चित् ।
ज्ञानेन हीनोत्तममध्यमेन यो यद् विजानाति स तेन पण्डितः ॥ २ ॥

ततस्तत्र राजा निजकीर्त्तिप्रसरावसरमवेत्य सकलपाखण्डिनां यथाक्रमं दानमदात् । ततो वाणारस्यां भूतानन्दयोगिनं बहुपरीवारवृतं अनेकविद्यामन्त्रतन्त्रयन्त्रादिविचित्रकलाकौशलेनात्मीयकृतबहुजनं दृष्ट्वाऽचिन्तयत्–

८०. ये लुब्धचित्ता विषयार्थभोगे बहिर्विरागा हृदि बद्धरागाः ।
ते दाम्भिका वेषधराश्च धूर्त्ता मनांसि लोकस्य तु रञ्जयन्ति ॥ १ ॥

८१. कुलीनाः सुलभाः प्रायः सुलभाः शास्त्रशालिनः ।
सुशीलाश्चापि सुलभा दुर्लभा भुवि तात्त्विकाः ॥ २ ॥

ततः प्राचीं प्रति प्रतस्थे । तत्र कुरु-सूरसेन-कुशावर्त्त-पांचाल-विदेह-दशार्ण-मागधादीन् देशानसाधयत् । ततो राजाऽग्रतो गच्छन् क्वापि वने निर्विजने रहः प्रदेशे कमपि मुनिपुंगवमेकाकिनमन्तः समाधिस्थाधीनमनःप्रयोगं नासाग्रविन्यस्तार्द्धनिमीलितनयनं प्रशमपीयूषपानसुहितं सकलप्राणिवर्गस्य निजसंसर्गप्रणाशितनिसर्गवैरं स्वान्तैकान्तभावज्ञातनृपनिर्मितप्रणामं विलोक्य राजा सविस्मयं चिन्तयति स्म–

८२. तृणं ब्रह्मविदः स्वर्गस्तृणं शूरस्य जीवितम् ।
विरक्तस्य तृणं नारी निरीहस्य तृणं नृपः ॥ १ ॥

ततो राजा क्षणान्तरे कृतप्रणामः पुनः सकलभवक्लेशनाशिनीं धर्माशिषं समासाद्य प्रश्नमकरोत्–'भगवन् ! कथं दुरन्तविषयाशा निराशाक्रियते ?' मुनिरुवाच–'राजन् !

८३. यस्यात्म-मनसोर्भिन्नरूच्योर्मैत्री प्रवर्त्तते ।
योगविप्रैकनिष्ठेषु तस्येच्छाविषयेषु का ॥ १ ॥

एतन्निशम्य राजा सपरिकरः क्षणं मुनिप्रभावात् प्रशान्तस्वान्तः चेतसि चिन्तां चकार । अहो स्वार्थकृतस्यापि साम्यस्य महिमा नहि मानगोचरः । यतः–

८४. सारंगी सिंहशावं स्पृशति सुतधिया नन्दिनी व्याघ्रपोतं,
मार्जारी हंसबालं प्रणयपरवशा केकिकान्ता भुजङ्गम् ।
वैराण्याजन्मजातान्यपि गलितमदा जन्तवोऽन्ये त्यजेयु-
र्दृष्ट्वा साम्यैकरूढं प्रशमितकलुषं योगिनं क्षीणमोहम् ॥ १ ॥

ततो मुनिस्वरूपं निरूप्य स्वात्मानं निनिन्द । अहो विषयाशाकलुषं जगत् । ततो मुनिदेशानां निशम्य कतिभिः प्रयाणैः साधितभूवलयः, निभृतं भृतभाण्डागारः, चतुरङ्गचमूचक्रीकृतचतुराशः, पूरितार्थिजनाशः, कृतकुनीतिप्रणाशः, प्रादुःकृतधर्ममार्गप्रकाशः, यशःपुञ्जपूरितत्रिभुवनावकाशः श्रीकुमारपालनरेश्वरः कृतप्रवेशमङ्गलमहोत्सवः श्रीपत्तनमाजगाम । द्वासप्ततिसामन्तभूपालैः कृतराज्याभिषेकः साम्राज्यं करोति ।

*

§ ३८. अथान्यदा श्रीचौलुक्यचक्रवर्त्ती सर्वावसरे स्थितः कौंकणदेशीयस्य मल्लिकार्जुनस्य राज्ञो मागधेन राजपितामह इति बिरुदमभिधीयमानमशृणोत् ।

८५. यथा–जित्वा प्राग् निखिलानिलापतिवरान् दुर्वारदोर्वीर्यतः,
कृत्वा चात्मवशंवदानविरतं तान् पौत्रवत् सर्वदा ।
धत्ते राजपितामहेति बिरुदं यो विश्वविश्वश्रुतं,
सोऽयं राजति मल्लिकार्जुननृपः कोदण्डविद्यार्जुनः ॥ १ ॥

एतदाकर्ण्य सोम्माणं राजानमधिगम्यागाधबुद्धिनिधिर्मागधः पुनरभ्यधात्—

८६. रवेरेवोदयः श्लाघ्यः कोऽन्येषामुदयाग्रहः।
न तमांसि न तेजांसि यस्मिन्नभ्युदिते सति ॥ १ ॥

८७. यतः—अहंकारे सति प्रौढे यदस्त्येवं गुणावली।
अहं कारे पतिष्यामि समायाता तवान्तिकम् ॥ २ ॥

इति मागधवचनैरुद्दीपितो राजाऽवदत्—'अहो अविज्ञाताहंकारस्वरूपोऽयं भूपः।' ततस्तदसहिष्णुतया स्वसभां निभालयन्, नृपचित्तविदा मन्त्रिश्रीआम्बडेन कृतं ललाटे करसंपुटम्। दृष्ट्वा चमत्कृतो भूपतिः। सभाविसर्जनानन्तरमञ्जलिबन्धस्य कारणमपृच्छत्। ततो मन्त्रिपुत्रोऽवदत्—'देव! यदस्यां सभायां स कोऽपि सुभटोऽस्ति यो मिथ्याभिमानं नृपाभासं चतुरङ्गनृपवत् मल्लिकार्जुनं जयतीति युष्मदाशयविदा मया स्वाम्यादेशक्षमेणायमञ्जलिबन्धश्चक्रे। इति तद्वचः श्रुत्वा राजाऽवदत्—'अहो अस्य चातुर्यम्'।

८८. उदीरितोऽर्थः पशुनापि गृह्यते हयाश्च नागाश्च वहन्ति चोदिताः।
अनुक्तमप्यूहति पण्डितो जनः परेङ्गितज्ञानफला हि बुद्धयः ॥ १ ॥

ततस्तद्वचःसममनन्तरमेव नृपस्तं प्रति प्रयाणाय दलनायकं कृत्वा पञ्चाङ्गप्रसादं दत्त्वा समस्तसामन्तैः समं विससर्ज। स चाविच्छिन्नप्रयाणैः कौंकणदेशमासाद्य दुर्वारवारिपूरां कालंविणिनाम्नीं नदीमुत्तीर्य परस्मिन् कूले गते सैन्ये तं संग्रामासक्तं विमुखय्य मल्लिकार्जुनः सर्वाभिसारेण प्राहरन् तत्सैन्यं त्रासयामास। अथ तेन पराजितः स सेनापतिः कृष्णवदनः कृष्णच्छत्रालङ्कृतमौलिः कृष्णगुडुरे निवसन् श्रीपत्तनबहिःप्रदेशे स्थितः।

अथ विजयादशमीदिने राजपाटिकागतेन श्रीचौलुक्यभूभुजा विलोक्य 'कस्यासौ सेनानिवेशः?' इति पृष्टे कश्चिदुवाच—'देव! कौंकणात् प्रत्यावृत्तस्य पराभूतस्याम्बडसेनापतेः सेनासंनिवेशोऽयमिति।' तदीयलज्जया चमत्कृतो नृपश्चिन्तयति स्म—'अहोऽस्य लज्जाशीलत्वम्'। अत्रान्तरेऽवसरपाठकः पपाठ—

८९. लज्जां गुणौघजननीं जननीमिवार्यामत्यन्तशुद्धहृदया अनुवर्तमानाः।
तेजस्विनः सुखमसूनपि सन्त्यजन्ति सत्यस्थितिव्यसनिनो न पुनः प्रतिज्ञाम् ॥१॥

ततोऽस्य सपादलक्षदानमदात्। पुनः प्रसादललितया दशाऽऽश्रयं समाप्य तदपरैर्बलवद्भिः सामन्तैः समं मल्लिकार्जुनं जेतुं प्राहिणोत्। ततः कतिभिः प्रयाणैः पुनस्तां नदीमासाद्य प्रवाहबन्धे विरचिते तेनैव पथा सैन्यमुत्तार्य सावधानवृत्त्या सन्मुखमायातेन मल्लिकार्जुनसैन्येन सहासमसमरारम्भे जायमाने हस्तिस्कन्धारूढं वीरवृत्त्या मल्लिकार्जुनमेव रुरोध। द्वयोर्भिरं खड्गाखड्गि दृष्ट्वा मागधः पपाठ—

९०. अभिमुखागतमार्गणघोरणिध्वनितपल्लवताम्बरगह्वरे।
वितरणे च रणे च समुद्यते भवति कोऽपि परं विरलः परः ॥ १ ॥

इति श्रुत्वा वर्द्धितोत्साह आम्बडः सुभटो दन्तिदन्तमुसलसोपानेन कुम्भस्थलमधिरुह्य मायदुद्दामरणरसः 'प्रथमं त्वं प्रहर, इष्टं वा देवतं स्मर' इत्युच्चरन्, करवालघातप्रहारात् मल्लिकार्जुनं भूपीठे लोठयित्वा, सामन्तेषु तन्नगरलुण्टनव्यापृतेषु केसरिकिशोर इव करिणं तं लील्यैव जघान। तन्मस्तकं सुवर्णेन वेष्टयित्वा तस्मिन् देशे श्रीचौलुक्यनृपाज्ञां दापयित्वा, त्रिशतीजालान् प्रज्वाल्य श्रीपत्तनमाजगाम। तत सभानिषण्णेषु द्वासप्ततिसामन्तेषु तस्य कोशमार्पयत्।

शाटीं शृंगारकोट्याख्यां, पटं माणिक्यनामकं। पापक्षयं करं हारं मुक्तासुक्तिं विषापहाम् ॥ २३
हैमान् द्वात्रिंशतं कुम्भान् मनुमारान् प्रमाणतः। षण् मूडकांस्तु मुक्तानां स्वर्णकोटीः चतुर्दश ॥ २४
विंशं शतं च पात्राणां चतुर्दन्तं च दन्तिनम्। श्वेतं सेढुकनामानं दत्त्वा नव्यं नवग्रहम् ॥ २५

इत्याद्यपरमपि तत्सत्कं सर्वं समर्प्य तच्छिरःकमलेन स्वस्वामिनः श्रीकुमारपालस्य पादौ पूजयामास।
महावदातप्रीतेन राज्ञा श्रीआम्बडस्य 'राजपितामह' इति बिरुदं दत्तम्। चतुर्विंशतिशतं जात्यतुरंगमाश्च प्राप्य तेन स्वगृहादर्वाक् सर्वे याचकेभ्यः प्रदत्ताः। अत्रान्तरे पिशुनप्रवेशः।

९१. यतः—जम्मे वि जं न हूअं नहु होही जं च जम्मलक्खेहिं।
तं चिय जंपंति तहा पिसुणा जह सच्चसारिच्छं॥ १॥

ततः प्रभाते किंचिदूनेन राज्ञा सेवावसरे समायातः प्रणामपर्यन्ते श्रीआम्बडः प्रोक्तः—'त्वं मम दानादप्यधिकमियत् कस्माद्दत्से?। यतः, सेवकेन स्वामिन आधिक्येन दानं न देयमिति सेवाधर्मः।' अत्रावसरे श्रीआम्बडस्य मागधः पपाठ राजसभायाम्—

९२. शय्या शैलशिला गृहं गिरिगुहा वस्त्रं तरूणां त्वचः,
सारंगाः सुहृदो ननु क्षितिभृतां वृत्तिः फलैः कोमलैः।
येषां नैर्झरमम्बुपानमुचितं रत्यैव विद्याङ्गना,
मन्ये ते परमेश्वराः शिरसि यैर्बद्धो न सेवाञ्जलिः॥ १॥

मन्त्रिणा लक्षमौपिल्ये दत्तम्। राज्ञः समधिकः कोपः। ततो मन्त्रिणा प्रोचे—'राजन्! त्वं द्वादशग्रामस्वामिनस्त्रिभुवनपालपुत्रः, अहं त्वष्टादशदेशाधिपत्यभुजस्तव पुत्रः। ततः स्तोकमिदं मम दानमिति' श्रुत्वा राजा प्रमुदितः पुत्रपदमदात्। द्विगुणं च प्रसादमकरोत्। अत्रान्तरे राज्ञो मागधः पपाठ—

९३. ते गच्छन्ति महापदं भुवि परा भूतिः समुत्पद्यते,
तेषां तैः समलंकृतं निजकुलं तैरेव लब्धा क्षितिः।
तेषां द्वारि नदन्ति वाजिनिवहास्ते भूषिता नित्यशो,
ये दृष्टाः परमेश्वरेण भवता रुष्टेन तुष्टेन वा॥ १॥

राजा सपादलक्षदानमदात्। ततः—

९४. यः कौबेरीमा तुरुष्कमैन्द्रीमा त्रिदिवापगाम्।
याम्यामा वन्ध्यमा सिन्धुं पश्चिमां यो ह्यसाधयत्॥ १॥

अष्टादशदेशेषु राज्ञ आज्ञा प्रवर्तिता श्रीआम्बडेन।

§ ३६. अथान्यदा श्रीहेमसूरिमाता चाहिणिदेवी प्रव्रजिता। कालान्तरे कृतानशना नमस्कारकोटिपुण्ये दत्ते सति श्रीपत्तने पुण्यवरे त्रिषष्टिशलाकापुरुषचरित्रादिलक्षग्रन्थो नवीनः कार्यः इति प्रोक्ते सति सूरिणा, सा मृता। कर्णमेरुप्रासादाग्रे विप्रैस्तथा भरडकैरसूयया तद्विमानभङ्गेऽत्यन्तदूनाः श्रीसूरयस्तदुत्तरक्रियां निर्माय तेनैव मन्युना मालवकदेशे संस्थितस्य श्रीकुमारपालस्य स्कन्धावारमलंचक्रुः।

९५. प्रभुः स्वयं यदि भवेत् स्फुरेद् वा यदि प्रभुः।
स शक्नोति तदा कार्यं कर्तुं नैवान्यथा पुमान्॥ १॥

इति वचस्तत्त्वं विचिन्तयन्तः श्रीमदुदयनमन्त्रिणा नृपतेर्निवेदितागमनाः कृतशिरोरत्नेन नृपेण परोपरोधान्महोत्सवपुरस्सरं सौधमानीताः। तद् राज्यप्राप्तिनिमित्तज्ञानं स्मारयन् नृपः, तत्रभवद्भिः सदैव देवपूजावसरेषु समागम्यमिति प्राह। सूरिस्त्वाच—

९६. भुञ्जीमहि वयं भैक्षं जीर्णवासो वसीमहि।
शयीमहि महीपृष्ठे कुर्वीमहि किमीश्वरैः॥ १॥

राजाह—'महर्षे! ऽहं परलोकसमाचरणाय समतृणमणिभिर्भवद्भिः सह संगतिसांगत्यमभिलषामि। यतः—

९७. एकं मित्रं भूपतिर्वा यतिर्वा..............॥ १ ॥

९८. विना गुरुभ्यो गुणनीरधिभ्यो जानाति धर्मं न विचक्षणोऽपि।
आकर्णदीर्घोज्वललोचनोऽपि दीपं विना पश्यति नान्धकारे ॥ २ ॥

महाकविप्रणीतत्वात्। किं मित्रं यन्निवर्त्तयति न पापात्'। श्रीसर्वज्ञशासने महाप्रभावनां ज्ञात्वा श्रीगुरुभिरप्रतिषिद्धं तद्वचनम्। ततो नृपस्तस्य महर्षेः परीक्षितचित्तवृत्तिः श्रीमुखेन सर्वावसरं येन्निणमादिदेश।

§ ३७. अथ तत्र यातायाते संजायमाने सूरीणां गुणग्रामस्तवं कुर्वत्सुर्वीपतौ पुरोधा विरोधादित्यभ्यधात्—'अमी न नमस्कारार्हाः, अजितेन्द्रियत्वात्'। कथमिति राज्ञा पृष्टे प्राह—

९९. विश्वामित्र-पराशरप्रभृतयो ये चाम्बुपत्राशिनः,
तेऽपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहं गताः।
आहारं सघृतं पयोदधियुतं भुञ्जन्ति ये मानवा-
स्तेषामिन्द्रियनिग्रहः कथमहो दम्भः समालोक्यताम् ॥ १ ॥

इति वचः श्रुत्वा श्रीसूरिभिरूचे—'न चैवमाहारमाहारयन्ति मुनयः। न चैकान्तेनाजितेन्द्रियत्वकारणमाहारः, किन्तु मोहनीयकर्मणः प्रकृतिरपि, तीव्रमन्दमन्दतरभेदा। तथा च—

१००. सिंहो बली द्विरदशूकरमांसभोजी, संवत्सरेण रतिमेति किलैकवारम्।
पारापतः खरशिलाकणभोजनोऽपि कामी भवत्यनुदिनं वद कोऽत्र हेतुः ॥ २ ॥

इति तन्मुखमुद्राकारिणि प्रत्युत्तरेऽभिहिते नृपः प्रमुदितः।

§ ३८. पुनः कियद्दिने गते नृपप्रत्यक्षं केनापि मत्सरिणाऽमाणि—'राजन्नेते जैनाः सूर्यं न मन्यन्ते, प्रत्यक्षदैवतम्। तत्र श्रीसूरिः प्राह—

१०१. अधामधामधामेदं वयमेव हृदि स्थितम्।
यस्यास्तव्यसने प्राप्ते त्यजामो भोजनोदके ॥ १ ॥

इति प्रामाण्याद् वयमेव भक्ताः सूर्यस्य नचैते तत्वतः।

१०२. पयोदपटलैश्छन्ने नैव कुर्वन्ति भोजनम्।
अस्तंगतेऽतिभुञ्जाना अहो भानोः सुसेवकाः ॥ २ ॥

व्यासेनापि प्रोक्तम्—

१०३. ये रात्रौ सर्वदाहारं वर्जयन्ति सुमेधसः।
तेषां पक्षोपवासस्य फलं मासेन जायते ॥ ३ ॥

§ ३९. इति तन्मुखबन्धे जाते कदाचिद्देवपूजाक्षणे सौधमागते मोहान्धकारतिरस्कारचन्द्रे श्रीहेमचन्द्रे यशश्चन्द्रगणिना रजोहरणेनासनपट्टं प्रमार्ज्य तत्र कम्बले निहिते ज्ञानतत्त्वजुषां किमेतदिति नृपेण पृष्टाः श्रीगुरवः प्राहुः—'राजन्! कदाचिदिह कोऽपि जन्तुर्भवति, तदा तत्पीडापरिहरणायासौ प्रयत्नः, सर्वजन्तुरक्षारूपत्वाद् धर्मरहस्यस्य'। 'यदा प्रत्यक्षतया दृश्यते जन्तुस्तदैवेदं युज्यते नान्यथा वृथाप्रयासहेतुत्वादिति' युक्तियुक्तां नृपोक्तिमाकर्ण्य श्रीगुरुभिरुक्तम्—'राजन्! यथा भवद्भिर्वैरायभावेऽपि नगररक्षार्थं प्रत्यहमारक्षिकाः स्थाप्यन्ते, कटकाभावेऽपि गजतुरङ्गमादिचमूः श्रमाभ्यासं कार्यते, मा मुष्णन्तु नगरमिति। तथात्रापि ज्ञेयम्। राजव्यवहारवद् धर्मव्यवहारः। तथा चागमः—

१०४. पाणेहिं संसत्ता पडिलेहा होइ केवलीणं तु ।
संसत्तमसंसत्ता छउमत्थाणं तु पडिलेहा ॥ १ ॥

संसज्जइ धुवमेयं.........॥ २ ॥ संसत्तमसंसत्ता.........॥ ३ ॥

१०५. तित्थयरा रायाणो साहू आरक्खि भंडगं च पुरं ।
तेणसरिसा य पाणा तिगं च रयणा भवो दंडो ॥ ४ ॥

तथा धर्मसमुद्देशेऽप्युक्तम्—

१०६. आत्मवत् सर्वजीवेषु कुशलवृत्तिचिन्तनम् ।
धर्माधिगमनोपायः शक्तितस्त्यागतपसी च ॥ १ ॥

एतदाकर्ण्य राजा चमत्कृतोऽवादीत्—'अहो ! श्रीजैनागमगम्भीरता जीवरक्षादक्षता च'। ततः समधिकः श्रीजिनमतानुरागः समजनि नृपस्य ।

§ ४०. अथ राज्ञा श्रीगुरूणां हैमटंककसहस्रदशकं पुरो मुक्त्वा योगक्षेमकरणाय गृह्यतामित्युक्ते श्रीसूरिभिरूचे—'सर्वं दीयमानं द्विजा गृह्णन्ति, नतु वयम्'। ततो राज्ञोचे—'भगवन्नेते परदर्शनिनः सर्वेऽपि मया दीयमानं सर्वस्वमपि गृह्णन्ति । परं ब्रह्मचारिभिर्निर्ग्रन्थैर्भवद्भिः कस्मात् कमपि नादीयतेति ?' सूरयः प्राहुः—'राजन् ! सर्वशास्त्रविरोधहेतुत्वात् प्रतिषिद्धं राजपिण्डम् । यदाह स्मृतौ—

१०७. अधीत्य चतुरो वेदान् साङ्गोपाङ्गान् सलक्षणान् ।
शूद्रात् प्रतिग्रहं कृत्वा खरो भवति ब्राह्मणः ॥ १ ॥

१०८. खरो द्वादशजन्मानि षष्टिजन्मानि शूकरः । श्वानः सप्ततिजन्मानि इत्येवं मनुरब्रवीत् ॥

१०९. राज्ञः प्रतिग्रहो घोरो मधुस्वादो विषोपमः । पुत्रमांसं वरं भुक्तं नतु राजप्रतिग्रहः ॥

११०. राजप्रतिग्रहदग्धानां ब्राह्मणानां युधिष्ठिर ! ।
सदितानामिव बीजानां पुनर्जन्मो न विद्यते ॥ ४ ॥

—महाभारते शान्तिपर्वेऽप्युक्तम् । तथा जैनागमे च—

१११. संनिहीगिहमित्ते य रायपिंडे किमिच्छिए ।......... ॥

११२. संवाहणं दंतपहोयणाय संपुच्छणदेहपलोअणा य ॥

एतत्सर्वं साधूनामनाचीर्णम् ।

११३. आचेलुक्क उद्देसिय सिज्जायर रायपिंड किइकम्मे ।
वयजिट्ठपडिक्कमणे मासं पज्जोसवणकप्पे ॥ १ ॥

इति दशधा साधूनां सामाचारीकल्पः । इत्याकर्ण्य राजा प्रमुदितो जैनाचारप्रशंसामकार्षीत् । लज्जिताश्च द्विजाः सर्वेऽधोमुखा अभूवन् ।

§ ४१. अथ कतिभिर्दिनै राजा श्रीपत्तनमाजगाम । अन्यदा सभायां निषण्णे राजनि सपरिकरे कोऽपि मत्सरी प्राह—'राजन्नेते जैना वेदान् न मन्यन्ते, अतो वेदबाह्या न नमस्कारार्हाः'। किमेतदिति पृष्टा राज्ञा श्रीसूरयः प्राहुः—'राजन् ! यदि वेदेषु जीवदयाधर्मोऽस्ति तर्हि सकलशास्त्रसंवादशुद्धं जीवदयाधर्मं कुर्वाणां वयं कथं वेदबाह्याः । यदाहुः—

११४. अहिंसा प्रथमो धर्मः सर्वशास्त्रेषु विश्रुतः । यत्र जीवदया नास्ति तत्सर्वं परिवर्जयेत् ॥

११५. ध्रुवं प्राणिवधो यज्ञे नास्ति यज्ञस्त्वहिंसकः । सर्वसत्त्वेष्वहिंसैव दयायज्ञो युधिष्ठिर ! ॥

११६. यदि प्राणिवधे धर्मः स्वर्गश्च खलु इष्यते । संसारमोचकानां च ततः स्वर्गोऽभिधीयते ॥

जैनागमश्च—

११७. सयमूअप्पभूयस्स सम्मं भूयाइं पासओ। पिहियासवस्स दंतस्स पावं कम्मं न बंधइ॥
११८. सव्वे जीवा वि इच्छंति जीविउं न मरिज्जिउं। तम्हा पाणवहं घोरं निग्गंथा वज्जयंति णं॥

अथ वेदेषु नास्ति जीवदया तर्हि न प्रमाणम्, चार्वाकधर्मशास्त्रवत्, दयाविकलत्वात्। किमस्माकं दयाधर्मनिष्ठानां तैः प्रयोजनमि'ति श्रुत्वा ते सर्वे तूष्णीं कृत्वा स्थिताः। चमत्कृतो राजा दयाधर्मे मनो दधौ।

§४२. अथान्यदा विप्रैः सम्भूय प्रोक्तम्—'शूद्रा एते, न प्रणामार्हाः'। श्रीगुरुभिरुक्तम्—'किं नाम तत् शूद्रत्वं, ब्राह्मणत्वं वा किमुच्यते। न तावदेकान्तेन जात्या शूद्रत्वं, ब्राह्मणत्वं वा भवति। यदुक्तम्—

११९.　शूद्रोऽपि शीलसंपन्नो गुणवान् ब्राह्मणो भवेत्।
　　ब्राह्मणोऽपि क्रियाहीनः शूद्रापत्यसमो भवेत्॥

१२०.　अतः—सर्वजातिषु चाण्डालाः सर्वजातिषु ब्राह्मणाः।
　　ब्राह्मणेष्वपि चाण्डालाः चाण्डालेष्वपि ब्राह्मणाः॥

१२१.　कृषि-वाणिज्य-गोरक्षां राजसेवामकिंचनाः।
　　ये च विप्राः प्रकुर्वन्ति न ते कौन्तेय! ब्राह्मणाः॥ ३॥

१२२. हिंसकोऽनृतवादी च चौर्येणाभिरतश्च यः। परदारोपसेवी च सर्वे ते पतिता द्विजाः॥
१२३. ब्रह्मचर्यतपोयुक्ताः समानलोष्टकाञ्चनाः। सर्वभूतदयावन्तो ब्राह्मणाः सर्वजातिषु॥
१२४. क्षान्त्यादिकगुणैर्युक्तो न्यस्तदण्डो निरामिषः। न हन्ति सर्वभूतानि प्रथमं ब्रह्मलक्षणम्॥

१२५.　सदा सर्वानृतं त्यक्त्वा मिथ्यावादाद् विरज्यते।
　　सानृतं च वदेद् वाक्यं द्वितीयं ब्रह्मलक्षणम्॥

१२६. सदा सर्वं परद्रव्यं बहिर्वा यदि वा गृहे। अदत्तं नैव गृह्णाति तृतीयं ब्रह्मलक्षणम्॥
१२७. देवासुरमनुष्येषु तिर्यग्योनिगतेषु च। न सेवते मैथुनं यश्चतुर्थं ब्रह्मलक्षणम्॥
१२८. त्यक्त्वा कुटुम्बवासं तु निर्ममो निःपरिग्रहः। युक्तश्चरति निःसङ्गः पञ्चमं ब्रह्मलक्षणम्॥
१२९. पञ्चलक्षणसंपूर्ण ईदृशो यो भवेद् द्विजः। महान्तं ब्राह्मणं मन्ये शेषाः शूद्रा युधिष्ठिर!॥

१३०.　कैवर्त्तीगर्भसम्भूतो व्यासो नाम महामुनिः।
　　तपसा ब्राह्मणो जातस्तस्माज्जातिरकारणम्॥

१३१.　हरिणीगर्भसम्भूतो ऋषिशृङ्गो महामुनिः। तप०॥
१३२.　शुनकीगर्भसम्भूतः शुको नाम मुनिस्तथा। तप०॥
१३३.　मण्डूकीगर्भसम्भूतो माण्डव्यश्च महामुनिः। तप०॥
१३४.　उर्वशीगर्भसम्भूतो वशिष्ठस्तु महामुनिः। तप०॥
१३५.　न तेषां ब्राह्मणी माता संस्कारश्च न विद्यते। तप०॥

१३६. यद्वत्काष्ठमयो हस्ती यद्वच्चर्ममयो मृगः। ब्राह्मणस्तु क्रियाहीनस्त्रयस्ते नामधारकाः॥

इति श्रुत्वा निरुत्तरेषु विप्रेषु प्रमुदितो राजा। जातं मनसि स्थैर्यं श्रीजिनधर्मे।

§४३. अन्यदा कैश्चित् मत्सरिभिः प्रोक्तम्—'राजन्नेते मलविलिप्ताः स्नानाभावादपवित्रगात्रा राजसभायां स्थातुं नोचिताः।'—इति श्रुत्वा तत्र सकलराजवर्गसमक्षं श्रीसूरिभिरभिदधे—'कस्य नामापावित्र्यं, शरीरस्यात्मनो वा? यदि शरीरस्य तर्हि सर्वेषां शरीरस्य तावत् सप्तधातुमयत्वात् पावित्र्यापावित्र्यविभागः कर्तुं केनापि नो पार्यते।

आत्मनश्चेत् तद् युष्मादृशामनतिशयदृशां प्राकृतपुरुषाणामतीव दुर्लक्ष्यम्। जलक्षालनकृतं तु यत् पावित्र्यापावित्र्य-विवेचनं तन्मूढविस्मापनम्। यदुक्तम्–

१३७. शौचमाध्यात्मिकं त्यक्त्वा भावशुद्ध्यात्मकं शुभम्।
जलादिशौचं यद् दृष्टं मूढविस्मापनं हि तत्॥

१३८. कुर्याद् वर्षसहस्राणि प्रत्यहं मज्जनं मुहुः। सागरेणापि कृत्स्नेन वधको नैव शुध्यति॥

१३९. चित्तं रागादिभिः क्रान्तमलीकवचनैर्मुखम्।
जीवहिंसादिभिः कायो गंगा तस्य पराङ्मुखी॥

१४०. चित्तमन्तर्गतं शुद्धं वदनं सत्यभाषणैः। ब्रह्मचर्यादिभिः कायः शुद्धो गंगाविनाप्यसौ॥

१४१. ब्रह्मचर्येण सत्येन तपसा संयमेन च। मातंगा अपि शुध्यन्ति न शुद्धिस्तीर्थयात्रया॥

१४२. शृङ्गारमदनोत्पादं यस्मात् स्नानं प्रकीर्तितम्।
तस्मात् स्नानं परित्यक्तं नैष्ठिकैर्ब्रह्मचारिभिः॥

१४३. सुखशय्यासनं वस्त्रं ताम्बूलं स्नानमण्डनम्। दन्तकाष्ठं सुगन्धं च ब्रह्मचर्यस्य दूषणम्॥

१४४. सत्यं शौचं तपः शौचं शौचमिन्द्रियनिग्रहः। सर्वभूतदया शौचं जलशौचं च पञ्चमम्॥

इति शास्त्रोक्तं किं युष्माभिरपि न दृष्टं न वा श्रुतं, येनेयं चर्चा क्रियते।'–इति निशम्य नृपः सपरिकरः प्रमुदितः। ज्ञातः शौचस्य समाचारः। प्राह च तदा–'अहो! श्रीहेमसूरीणां स्वपरशास्त्ररहस्यस्फूर्तिः, सदाचार-चतुरता च।

१४५. यतः–एहिरेयाहिरां चक्रे केषां न श्रुतिपु श्रुतम्। परं परिमलस्तस्य विलीनो विमलात्मसु॥

ज्ञातं च जलशौचं मूढजनमनोविस्मापनम्।

§४४. अथान्यदा क्षमापतिः पप्रच्छ–'कयापि युक्त्याऽस्माकमपि यशःप्रसरः कल्पान्तःस्थायी भवति?'–इति तदीयां गिरमाकर्ण्य 'विक्रमार्क इव विश्वस्यानृणकरणात्, यद्वा श्रीसोमेश्वरस्य प्रासादं वारांराशितरंगनिकरासन्ना-म्भोभिः शीर्णप्रायं युगान्तकीर्तये समुद्धर'–इति चन्द्रातपनिभया श्रीहेमचन्द्रगिरा उद्वेलप्रमदाम्भोधिर्नृपस्तमेव महर्षिं पितरं दैवतं गुरुं मन्यमानो नितरां द्विजान् निन्दन्, तदैव प्रासादोद्धाराय दैवज्ञनिवेदिते सुलग्ने तत्र पञ्चकुलं प्रस्थाप्य प्रासादप्रारम्भमचीकरत्। अथ श्रीसोमेश्वरस्य प्रासादप्रारम्भे खरशिलानिवेशे संजायमाने सति पञ्चकुल-प्रहितवर्द्धापनिकाविज्ञप्तिकां नृपतिः श्रीहेमचन्द्रगुरोर्दर्शयन् 'अयं प्रासादप्रारम्भः कथं निःप्रत्यूहं प्रमाणभूमिमधि-रोढमेति?' इति पृथिवीपरिवृढेनानुयुक्तः श्रीमान् किंचिदुचितं विचिन्त्य गुरुरूचिवान्–'यदस्य धर्मकार्यस्यान्तरायं परिहाय ध्वजाधिरोपं यावद् ब्रह्मसेवानियमोऽथ मद्यमांसनियमः, द्वयोरेकतरं किमप्यङ्गीकुरु'–इति तद्वचनमाकर्ण्य नृपतिर्मद्यमांसनियममभिलपन् श्रीनीलकण्ठस्योपरि जलं विमुच्य तमभिग्रहं जग्राह। संवत्सरद्वयेन तस्मिन् प्रासादे कलशध्वजाधिरोपं यावद् गते सति तं नियमं मुमुक्षुर्गुरूननुज्ञापयन्, तैरूचे–'यद्यनेन निजकीर्तनेन सार्द्धमर्द्धचन्द्र-चूडं प्रेक्षितुमर्हति भवान् तदात्रापर्यन्ते नियममोचनावसरः।' इत्यभिधायोचिते श्रीहेमचन्द्रमुनीन्द्रे गते तद्गुणे-रुन्मीलन्नीलिरागरक्तहृदयस्तमेकमेव संसदि प्रशंसन् निर्निमित्तो वैरी परिजनस्तेजःपुञ्जमसहिष्णुः कश्चिन्मिथ्यादृष्टी राज्ञोऽग्रेऽजल्पत्।

१४६. उज्ज्वलगुणमभ्युदितं क्षुद्रो द्रष्टुं न कथमपि क्षमते।
दग्ध्वा तनुमपि शलभो दीप्तां दीपार्चिमपहरति॥ १॥

इति न्यायात् पृथ्वीमामादनदोषमस्फुरीकृत्य तदपवादमेवावादीत्–'यदयममन्दच्छन्दानुवृत्तिपरः सेवा-धर्मकुशलः केवलं प्रभोरभिमतमेव भाषते। यद्येवं न, तदा प्रातरेतः "श्रीसोमेश्वरयात्रायां भवता सहागच्छतु"

इति गदितः स परतीर्थपरिहारान्न तत्रागमिष्यति, इति अस्मन्मतमेव प्रमाणम्'—नृपस्तद्वाक्यमादृत्य प्रातरुपागतं श्रीहेमचन्द्रसूरीश्वरं श्रीसोमेश्वरयात्रार्थमभ्यर्थयन् 'बुभुक्षितस्य किं निमन्त्रणम्?, उत्कण्ठितस्य केकारवश्रवणम्—इति लोकरूढिः; तपस्विनामधिकृततीर्थयात्राधिकाराणां को नाम नृपतेऽत्र निर्बन्धः?' इत्थं गुरोरङ्गीकारे 'युष्मद्योग्यं सुखासनप्रभृतिवाहनादि किंचित् सज्जीक्रियतामि'ति ईरिते वयं पादचारेण सञ्चरन्तः पुण्यमुपलभामहे; परं वय-मिदानीं त्वामपृच्छ्य मितैः प्रयाणैः श्रीशत्रुञ्जयोज्ज्वयन्तादिमहातीर्थानि नमस्कृत्य भवतां श्रीदेवपत्तने प्रवेशो-त्सवे मिलिष्यामः'—इत्युदीर्य तत्तथैव कृतवन्तः। नृपतेः पुरः विप्राः प्रवदन्त्यदः—'राजन्! हेमसूरिर्निष्ठ्या गतः क्वापि, स न समेष्यति श्रीसोमपत्तने।' नृपः समग्रसामग्र्या कतिपयैः प्रयाणैः श्रीपत्तनं प्राप्य श्रीहेमसूरीननागतान् वीक्ष्य सर्वत्र योजनपञ्चमध्ये विलोकापिताः। परं न श्रुता न दृष्टाः। यावत् किंचिन्नृपश्चिन्तयति तावत् प्रभुरग्रे धर्माशिषं बभाण। चमत्कृतो राजा विस्मितश्च। प्रभुरूचे—'अद्याधुना वयं श्रीरैवताचलोपरि देवान्नमस्कृत्य भवतां प्रवेशमहोत्सवे मत्वा समायाताः'। तदा तच्छ्रुत्वा सर्वेऽपि द्विजा म्लानिं प्राप्ताः।

§४९. अथ महोत्सवेन पुरं प्रविश्य श्रीसोमेश्वरप्रासादसोपानकेष्वाक्रान्तेषु भूपीठलुठनानन्तरं चिरतरातुल्यायल्ल-कानुमानेन गाढमुपगूढे श्रीसोमेश्वरलिङ्गे, 'एते जिनादपरं दैवतं न नमस्कुर्वन्ती'ति मिथ्यादृग्वचसा भ्रान्तचित्तस्य श्रीहेमचन्द्रं प्रति एवंविधा गीराविरासीत्—'यदि युज्यते तदेतैरुपहारैर्मनोहारिभिः श्रीसोमेश्वरमर्चयन्तु भवन्तः।' तत्तथेति प्रतिपद्य सद्यः क्षितिपकोशादागतेन कमनीयोद्गमेनालंकृततनवो नृपतिनिर्देशात् पतीयाणाविप्रश्रीबृह-स्पतिना दत्तहस्तावलम्बाः प्रासाददेहलीमधिरुह्य किंचिद् विचिन्त्य प्रकाशं—'अस्मिन् प्रासादे कैलासवासी श्रीमन्महादेवः साक्षादस्तीति रोमाञ्चकञ्चुकितां तनुं बिभ्राणा द्विगुणीक्रियतामुपहारः'—इत्यादिश्य शिवपुराणोक्त-दीक्षाविधिना आह्वान-अवगुण्ठन-मुद्राकरण-मन्त्रान्यास-विसर्जनोपचारादिभिः पञ्चोपचारविधिभिः शिवमभ्यर्च्य तदन्ते—

१४७. यत्र तत्र समये यथा तथा योऽसि सोऽस्यभिधया यया तया।
वीतदोषकलुषः स चेद् भवान् एक एव भगवन्नमोऽस्तु ते ॥ १ ॥

१४८. प्रशान्तं दर्शनं यस्य सर्वभूताभयप्रदम्। माङ्गल्यं च प्रशस्तं च शिवस्तेन विभाव्यते ॥

१४९. महत्त्वादीश्वरत्वाच्च यो महेश्वरतां गतः। रागद्वेषविनिर्मुक्तं तमहं वन्दे महेश्वरम् ॥

१५०. महाक्रोधो महामानो महामाया महामदः। महालोभो हतो येन महादेवः स उच्यते ॥

१५१. महावीर्यं महाधैर्यं महाशीलं महागुणाः। महापूजार्हत्वाच्च महादेवः स उच्यते ॥

१५२. एकमूर्तिस्त्रयो भागा ब्रह्मा-विष्णु-महेश्वराः। तान्येव पुनरुक्तानि ज्ञान-चारित्र-दर्शनैः॥

१५३. कार्यं विष्णुः क्रिया ब्रह्मा कारणं तु महेश्वरः। कार्यकारणसंपन्नो महादेवः स उच्यते ॥

१५४. प्रजापतिसुतो ब्रह्मा माता पद्मावती स्मृता। अभीचिजन्मनक्षत्रमेकमूर्त्तिः कथं भवेत् ॥

१५५. वसुदेवसुतो विष्णुर्माता वै देवकी स्मृता। श्रवणं तु जन्मनक्षत्रमेकमूर्त्तिः कथं भवेत् ॥

१५६. पेढालस्य सुतो रुद्रो माता वै सत्यकी स्मृता। मूलं तु जन्मनक्षत्रमेकमूर्त्तिः कथं भवेत् ॥

१५७. रक्तवर्णो भवेद् ब्रह्मा श्वेतवर्णो महेश्वरः। कृष्णवर्णो भवेद् विष्णुरेकमूर्त्तिः कथं भवेत् ॥

१५८. चतुर्मुखो भवेद् ब्रह्मा त्रिनेत्रस्तु महेश्वरः। चतुर्भुजो भवेद् विष्णुरेकमूर्त्तिः कथं भवेत् ॥

१५९. ज्ञानं विष्णुः सदा प्रोक्तं चारित्रं ब्रह्म उच्यते।
सम्यक्त्वमीश्वरः प्रोक्तरर्हन्मूर्त्तिस्त्रयात्मिका ॥

१६०. क्षितिजलपवनहुताशनयजमानाकाशसोमसूर्याख्याः।
इत्येत एव चाष्टौ[हि]वीतरागे गुणाः स्मृताः ॥

१६१. क्षितिरित्युच्यते क्षान्तिर्जलं शान्तिप्रसन्नता ।
निस्सङ्गता भवेद् वायुर्हुताशो योग उच्यते ॥

१६२. यजमानो भवेदात्मा तपोज्ञानदयादिभिः । सोममूर्त्तिर्भवेचन्द्रो ज्ञानमादित्य उच्यते ॥

१६३. अकारेण भवेद् विष्णू रेफे ब्रह्मा व्यवस्थितः । हकारेण हरः प्रोक्तस्तस्यान्ते परमं पदम् ॥

१६४. पुण्यपापविनिर्मुक्तो मूर्तिरागविवर्जितः ।
अतोऽर्हद्भ्यो नमस्कारः कर्तव्यः शिवमिच्छता ॥

१६५. हंसवाहो भवेद् ब्रह्मा वृषवाहो महेश्वरः । गरुडवाहो भवेद् विष्णुरेकमूर्त्तिः कथं भवेत् ॥

१६६. कमलहस्तो भवेद् ब्रह्मा शूलपाणिर्महेश्वरः । शङ्खचक्रधरो विष्णुरेकमूर्तिः कथं भवेत् ॥

१६७. भवबीजांकुरजनना रागाद्याः क्षयमुपागता यस्य ।
ब्रह्मा वा विष्णुर्वा हरो जिनो वा नमस्तस्मै ॥

इत्यादिस्तुतिभिः सकलराजलोकान्विते राज्ञि सविस्मयमवलोक्यमाने दण्डप्रणामपूर्वं स्तुत्वा श्रीहेमचन्द्राचार्येषु निषण्णेषु सत्सु, भूपतिः श्रीबृहस्पतिना ज्ञापितः पूजायै समधिकवासनया शिवार्चनानन्तरं धर्मशिलायां शि व शि वे ति जल्पन् तुलापुरुषगजाश्वदानादीनि दानानि वितीर्य समग्रं राजवर्गमपसार्य, तद्गर्भगृहान्तः प्रवेश्य; न महादेवसमो देवो, न मम तुल्यो नृपतिः, न हेमसूरिसदृशो महर्षिरिति भाग्यवैभववशादयत्नसिद्धस्त्रिकसंयोगोऽभूत् ।

§ ४६. अथ कर्पूरारात्रिकावसरे कोऽपि मिथ्यादृगाह—'यदनेन सूरिणाऽर्द्धनारीनाथेश्वरराज्यप्रदाता नात्मीयदेवो नमस्कृतः; किन्तु वीतरागो मुक्तिदाता ।' राजा प्राह—'यदनेन मुक्तिर्न भवति, तदाऽस्माकं राज्यं पुराप्यस्ति, अधुना मुक्तिर्विलोक्यते । मुक्तिप्रदे आरात्रिकं करिष्यामः' । 'परमेष्ठिमूर्त्तिर्मुक्तिदाता, तत्रारात्रिकं कुरु' इत्युक्ते तत्र गत्वा परमेष्ठिमूर्त्तिमवलोक्य यावदारात्रिकं करोति, तावद् रामचन्द्रनामा चारणः पपाठ—

१६८. काहूं मनि विभंतडी अजीय मणिअडा सुणेइ ।
अखयनिरंजण परमपय अजय जय न लहेइ ॥ १ ॥

इति श्रुत्वाऽऽरात्रिकं मुक्त्वा स्थितः । 'बहुदर्शनप्रमाणप्रतिष्ठासन्दिग्धे देवतत्त्वे मुक्तिप्रदं दैवतमस्मिन् तीर्थे तथ्यया गिरा निवेदय'—राज्ञा इत्यभिहिते श्रीहेमचन्द्राचार्याः किंचित् धिया निध्याय नृपतिं प्राहुः—'अलं पुराणदर्शनोक्तिभिः, श्रीसोमेश्वरमेव तव प्रत्यक्षीकरोमि, यथा तन्मुखेन मुक्तिमार्गमवैषि'—इति तद्वाक्याद्भूपश्चिन्तयति—'किमेतदपि जाघटीति ?' । इति विस्मयापन्नमानसे नृपे 'निश्चितमत्र तिरोहितं दैवतमस्त्येवेति । आवां यदि गुरूक्तगिरा निश्चलावाराधकौ तदेत्थं द्वन्द्वसिद्धौ सत्यां सुकरं दैवतप्रादुःकरणम् । मया प्रणिधानं भवता कृष्णागुरूत्क्षेपश्च तदा परिहार्यो यदा त्र्यक्षः प्रत्यक्षीभूय निषेधति ।' अथोभाभ्यां तथा क्रियमाणे, धूपधूमान्धकारिते गर्भगृहे निर्वाणेषु नक्षत्रमालाप्रदीपकेषु, आकस्मिके प्रकाशे द्वादशात्ममहसीव प्रसरति, नृपो नयने संभ्रमादुन्मृज्य यावदालोकते तावज्जलाधारोपरि जात्यजाम्बूनदद्युतिं चर्मचक्षुषां दुरालोकमप्रतिमरूपमसंभाव्यस्वरूपं तपस्विनमेकमद्राक्षीत् । तं पादाङ्गुष्ठात् प्रभृति जटाजूटावधि करतलेन संस्पृश्य निश्चितदैवतावतारः पञ्चाङ्गचुम्बितावनितलं यथाभक्त्या नत्वा भूमानिति विज्ञपयामास—'जगदीश ! भवद्दर्शनात् कृतार्थे मयि, आदेशप्रसादात् कृतार्थय कर्णयुग्मम् ।' इति विज्ञप्य तूष्णीं स्थिते नृपे तन्मुखादिति गीरभूत्—'राजन् ! अयं महर्षिः सर्वदेवावतारः । अञ्जिष्ठपरमब्रह्मावलोककरतलकलितमुक्ताफलवद् विज्ञातकालत्रयस्वरूपः, एतदुपदिष्ट एवाऽसन्दिग्धो मुक्तिमार्गः'—इत्यादिश्य तिरोभूते भूतपतौ उन्मनीभावं भजन् भूपतिं प्रति, रचितप्राणायामपवनः श्लथीकृतासनबन्धः श्रीहेमाचार्यो यावदिति वाचमुवाच तावदिष्टदैवतसङ्केतात् त्यक्तराज्याभिमानोऽनीव—'पादोऽवधार्यतां, अधुनोत्थीयतां'—इति

व्याहृतिपरो विनयनम्रमौलिर्यत्कृत्यमादिशेति व्याजहार । अथ तत्रैव नृपतेर्यावज्जीवं पिशितमद्यादिनियमं दत्त्वा, ततः प्रत्यावृत्तौ क्षमापती श्रीअणहिल्लपत्तनं प्रापतुः ।

*

§ ४७. अथ प्रत्यहं राजसभायां विचारेषु जायमानेषु राजा श्रीजिनोक्तं धर्मं सत्यतया मन्यमानोऽपि परं निजकुलक्रमायातं धर्मं द्विजादीनां लज्जया मोक्तुं न समीहते, परापवादभीतः ।

१६९. यतः–कामराग-स्नेहरागावीषत्करनिवारणौ । दृष्टिरागस्तु पापीयान् दुरुच्छेदः सतामपि ॥

१७०. कुलक्रमेण कुर्वन्ति मूढा धर्मं कुबुद्धयः । विपश्चितो विनिश्चित्य स्वचित्ते तु परीक्षया ॥

१७१. आगमेन च युक्त्या च योऽर्थः समभिगम्यते ।
परीक्ष्य हेमवद् ग्राह्यः पक्षपातग्रहेण किम् ॥

१७२. श्रोतव्ये च कृतौ कर्णौ वाग् बुद्धिश्च विचारणे ।
यः श्रुतं न विचारेत स कार्यं विन्दते कथम् ॥

इति श्रीगुरुवचनमाकर्ण्य राजा परापवादभीरुः सर्वदर्शनसंवादेन धर्मं जिघृक्षुः सर्वान् दर्शनविशेषान् पण्डितंमन्यान् समाहूय सर्वसमक्षं सभायां धर्मस्वरूपं पप्रच्छ । तेऽपि च यथाज्ञातस्वस्वागमाचारविचारं निजं निजं धर्मस्वरूपं प्ररूपयामासुः ।

§ ४८. तत्र देवतत्त्वविचारणायां क्रियमाणायां सर्वदर्शनिभिर्नाट्याट्टहाससंगीतरागद्वेषप्रसादकोप-जगज्जननस्थेम-विनाशादर-चक्रस्त्रीपरिग्रहादिसकलसांसारिकजन्तुजातसाधारणे देवतस्वरूपे निरूप्यमाणे श्रीगुरवः प्राहुः–'न चैवमर्वाचीनजनैः प्रोच्यमानं पारमेश्वरं स्वरूपम् । यदुक्तम्–

१७३. प्रत्यक्षतो न भगवान् वृषभो न विष्णुरालोक्यते न हरो न हिरण्यगर्भः ।
तेषां स्वरूपगुणमागमसंप्रदायात् ज्ञात्वा विचारयथ कोऽत्र परापवादः ॥ १ ॥

१७४. भार्या नास्ति जटाकपालमुकुटः चन्द्रो न मूर्द्धावली,
खट्वाङ्गं न च वासुकिर्न च धनुः शूलं न चोग्रं मुखम् ।
कामो यस्य न कामिनी न च वृषो गीतं न नृत्यं पुनः,
सोऽयं पातु निरंजनो जिनपतिर्देवाधिदेवः परः ॥ २ ॥

राजन्नेवंविधेऽपि भगवति निर्दोषे श्रीजिनेन्द्रे यत् परमतवादिनो मत्सरिणः स्युः, तत् स्वशासनानुरागेण परशासनाभिमानस्य विजृंभितम्' । इति सर्वसमक्षं श्रीवीतरागस्य देवतत्त्वमवस्थाप्य सर्वेषां स्वरूपज्ञापनार्थं निजां प्रतिज्ञां प्रादुरकार्षुः–

१७५. इमां समक्षं प्रतिपक्षसाक्षिणामुदारघोषामवघोषणां ब्रुवे ।
न वीतरागात् परमस्ति दैवतं न चाप्यनेकान्तमृते नयस्थितिः ॥ ३ ॥

इति प्रतिज्ञां श्रुत्वा सर्वेषु दर्शनेषु मौनमालम्ब्य स्थितेषु, सर्वेऽपि सभासदो विस्मयस्मेरमानसा मनसि श्रीवीतरागं देवं प्रपद्य 'नमः श्रीजिनाय, नमः श्रीनिरञ्जनाय' इत्यूचुः । ज्ञातं च सर्वैरपि देवतत्त्वम् । यथा–

१७६. सर्वज्ञो जितरागादिदोषस्त्रैलोक्यपूजितः । यथास्थितार्थवादी च देवोऽर्हन् परमेश्वरः ॥

१७७. ध्यातव्योऽयमुपास्योऽयमयं शरणमिष्यताम् ।
अस्यैव प्रतिपत्तव्यं शासनं चेतनाऽस्ति चेत् ॥

१७८. ये स्त्रीशस्त्राक्षसूत्रादिरागाद्यङ्ककलङ्किताः । निग्रहानुग्रहपरास्ते देवाः स्युर्न मुक्तये ॥

१७९. नानाशस्त्रजुषः कथं गतरुषः स्त्रीसन्निधानाः कथं
नीरागा अशुभाशया अकरुणाः कारुण्यवन्तः कथम् ।
छत्राद्यष्टमहाविभूतिविरहा देवाधिदेवाः कथं
तस्मात् सर्वगुणर्द्धिमान् विजयते श्रीवीतरागप्रभुः ॥

१८०. न कोपो न लोभो न मानो न माया, न लास्यं न हास्यं न गीतं न कान्ता ।
न वा यस्य पत्निर्न मित्रं न शत्रुस्तमेकं प्रपद्ये जिनं देवदेवम् ॥

—इति देवतत्त्वम् ॥ अथ गुरुतत्त्वम्—

१८१. त्यक्तदाराः सदाचारा मुक्तभोगा जितेन्द्रियाः । जायन्ते गुरवो नित्यं सर्वभूताभयप्रदाः ॥

१८२. तपःशीलसमायुक्तं ब्रह्मचारिदृढव्रतम् । अलोलमशठं दान्तं गुरुं जानीहि तादृशम् ॥

१८३. स्नानोपभोगरहितः पूजालंकारवर्जितः । मद्यमांसनिवृत्तश्च गुणवान् गुरुरुच्यते ॥

१८४. अवद्यमुक्ते पथि यः प्रवर्त्तते, प्रवर्त्तयत्यन्यजनं च निःस्पृहः ।
स एव सेव्यः स्वहितैषिणा गुरुः, स्वयं तरंस्तारयितुं क्षमः परम् ॥

१८५. विदलयति कुबोधं बोधयत्यागमार्थं, सुगतिकुगतिमार्गौ पुण्यपापे व्यनक्ति ।
अवगमयति कृत्याकृत्यभेदं गुरुर्यो, भवजलनिधिपोतस्तं विना नास्ति कश्चित् ॥

इति राजन् ! गुरुलक्षणानि । गृणाति तत्त्वमिति गुरुः, नतु नाममात्रेण कुलक्रमायातः कस्यापि गुरुरस्ति । सर्वेषां प्राणिनामनादिकालमेकेन्द्रियादिचतुरशीतिलक्षजीवयोनिषु भ्रमतां यस्मिन् भवे यस्य कस्यापि प्राणिनोऽज्ञानान्धकारमग्नस्य यस्तत्त्वातत्त्वव्यक्तिं दर्शयति स एव गुरुगुणैर्गौरवार्हो गुरुरुच्यते । नापरे वञ्चकाः स्वार्थप्रिया गुरवः ।

यदुक्तम्—

१८६. प्रज्ञापलक्षवस्तुनिचया विज्ञानशून्याशया
विद्यन्ते प्रतिमन्दिरं निजनिजस्वार्थोद्यता देहिनः ।
आनन्दामृतसिन्धुसीकरचयैर्निर्वाप्य जन्मज्वरम्
ये मुक्तेर्वदनेन्दुवीक्षणपरास्ते सन्ति केचिद्बुधाः ॥

१८७. वाग्ग्रासाराः परमार्थशून्या, न दुर्लभाः क्षेत्रकथा मनुष्याः ।
दुर्लभा ये जगतो हिताय, धर्मे स्थिता धर्ममुदाहरन्ति ॥

ये तु स्वरुचिकल्पिताचाराः परस्परविरोधाघ्माता मत्सरिणः सदाचारनिन्दकाः कथं ते गुरवः ।

१८८. सर्वाभिलाषिणः सर्वभोजनसपरिग्रहाः । अब्रह्मचारिमिथ्योपदेशका गुरवो नतु ॥

श्रीमहाभारतेऽप्युक्तम्—

१८९. ये शान्तदान्ताः श्रुतिपूर्णकर्णा, जितेन्द्रियाः प्राणिवधान्निवृत्ताः ।
परिग्रहे संकुचिता गृहस्थास्ते ब्राह्मणास्तारयितुं समर्थाः ॥

ततः श्रीहेमसूरयः सभायां गुरुकुगुरुस्वरूपमभिधायावादिषुः—

१९०. प्रकाशयन्ति भूयांसि भुवनं भास्करादयः । हार्दं पुनस्तमो हन्ति गुरुरेव गुणैर्गुरुः ॥

अत्रान्तरे कश्चित् पपाठ—

१९१. जीवोऽयं विमलस्वभावसुभगः सूर्योपलस्पर्द्धया
धत्ते सङ्गवशादनेकविकृतीर्लुप्तात्मरूपस्थितिः ।
यत्प्राप्नोति रवेरिवेह सुगुरोः सत्पादसेवाश्रमं
तज्जातोर्जिततेजसैव कुरुते कर्मेन्धनं भस्मसात् ॥

इति श्रुत्वा सर्वेऽपि दानं ददुः । इति गुरुतत्त्वं ज्ञेयम् ।

अथ धर्मतत्त्वमपृच्छत् । श्रीसूरयः प्राहुः, तत्र प्रथमं धर्मलक्षणम्—

१९२. श्रूयते सर्वशास्त्रेषु सर्वेषु समयेषु च । अहिंसालक्षणो धर्मस्तद्विपक्षश्च पातकम् ॥

वेदादिप्रामाण्येन यत् हिंसा विधीयते तदेषां जाड्यलिङ्गम् । वेदस्यापौरुषेयत्वेनाप्रमाणत्वात् । न प्रमाणं वदमतम् । आप्ताधीना हि वाचां प्रमाणता । व्यासेनाप्युक्तम्—

१९३. दीयते मार्यमाणस्य कोटिं जीवितमेव वा । धनकोटिं न गृह्णाति सर्वो जीवितमिच्छति ॥

अतः—

१९४. यो दद्यात् काञ्चनं मेरुं कृत्स्नां चैव वसुन्धराम् । सागरं रत्नसंपूर्णं न च तुल्यमहिंसया ॥

१९५. अमेध्यमध्ये कीटस्य सुरेन्द्रस्य सुरालये । समाना जीविताकांक्षा तुल्यं मृत्युभयं द्वयोः ॥

१९६. यावन्ति पशुरोमाणि पशुगात्रेषु भारत ! । तावद्वर्षसहस्राणि पच्यन्ते पशुघातकाः ॥

१९७. पृथिव्यामप्यहं पार्थ ! वायावग्नौ जलेऽप्यहम् । वनस्पतिगतश्चाहं सर्वभूतगतोऽप्यहम् ॥

१९८. यो मां सर्वगतं ज्ञात्वा न च हिंस्येत् कदाचन । तस्याहं न प्रणश्यामि स च मां न प्रणश्यति ॥

इति विष्णुवाक्यम् ।

१९९. यत्र जीवः शिवस्तत्र इति यो वेत्ति भक्तितः ।
दया जीवेषु कुर्वाणः स शिवाराधकः स्मृतः ॥

२००. क मांसं क शिवे भक्तिः क मद्यं क शिवार्चनम् । मद्यमांसप्रसक्तानां दूरे तिष्ठति शङ्करः ॥

—इति भगवद्गीतायाम् (?) ।

२०१. यदा न कुरुते पापं सर्वभूतेषु दारुणम् । मनसा कर्मणा वाचा ब्रह्म संपद्यते तदा ॥

२०२. क्षमातुल्यं तपो नास्ति न सन्तोषात् परं सुखम् ।
न मैत्रीसदृशं दानं न धर्मोऽस्ति दयासमः ॥

—इति जीवदया सर्वेषां मता ।

अथ जीवहिंसाभेदानाह—

२०३. नवहिं जियवहकरणं, कारावणं, अणुमई य योगेहिं ।
कालतिएण गुणिओ पाणिवहो दुस्सयतेयालो ॥ १ ॥

तत्र पृथ्व्यप्तेजोवायुवनस्पतिद्वित्रिचतुःपञ्चेन्द्रिया इति नवभेदा मनोवाक्कायैः सह गुणिता जाताः सप्तविंशतिभेदाः । ते च करणकारणानुमतिभिर्गुणिता जाता एकाशीतिः । ते चातीतानागतवर्तमानकालत्रयेण गुणिता जातास्त्रिचत्वारिंशत् द्वेशते सर्वे प्राणिवधभेदाः २४३ । कालत्रयेऽपि हिंसासम्भवोऽस्तीति कालत्रयग्रहणम् । यदुक्तम्—

अइयं निंदामि पडिपन्नं संवरेमि अणागयं पच्चक्खामि —इति ।

अथ राजन् ! आकर्ण्यतां जीवदयास्वरूपं संयमस्वरूपं च । तथा हि—पृथ्व्यप्तेजोवायुवनस्पतिद्वित्रिचतुःपञ्चेन्द्रियाणां मनोवाक्कायकर्मभिः करणकारणानुमतिभिश्च संरम्भसमारम्भवर्जनमिति नवधा संयमः ९, पुस्तकवस्-

पात्रदण्डकादीनां यतनया धरणमजीवसंयमः १०, स्थण्डिलादिकं चक्षुषा प्रेक्ष्य शयनासनादिकुर्वीतेति प्रेक्षासंयमः ११, सावद्यप्रवृत्तगृहस्थव्यापारणेनोपेक्षासंयमः १२, स्थण्डिलादौ रजोहरणादिना प्रमृज्य शयनासनादीनि कुर्वतः प्रमार्जनासंयमः १३, भक्तपानादिकमनेषणीयमनुपकारि च निर्जन्तुस्थण्डिले परिष्ठापयतः परिष्ठापनासंयमः १४, मनसोऽशुभपरिणामनिवृत्तिः शुभप्रवृत्तिः मनःसंयमः १५, अशुभभाषात्यागः शुभभाषाभाषणं वाक्संयमः १६, अशुभक्रियानिवृत्तिः शुभप्रवृत्तिः कायसंयमः १७, इति प्राणिदयारूपः सप्तदशधा संयमो यतीनामन्यथा यतित्वाभावः ।

अथ राजा गृहस्थानां कथमयं संयम इत्यपृच्छत् । तदा श्रीसूरयः प्राहुः—'राजन्! देशतो विरतान गृहस्थानां देशतः संयमोऽस्तीति श्रूयताम् । यथा—

२०४. थूला सुहुमा जीवा संकप्पारंभओ अ ते दुविहा ।
सावराहनिरवराहा साविक्खा चेव निरविक्खा ॥

तत्र प्राणिवधो द्विविधो ज्ञेयः, स्थूलजीवानां सूक्ष्मजीवानां च । तत्र स्थूला द्वीन्द्रियादयः, सूक्ष्मास्त्वेकेन्द्रियादयः; नतु सूक्ष्मनामकर्मोदयवर्तिनस्तेषां व्यापादनाभावात् स्वयमायुष्कक्षयेण मरणात् । तत्र गृहस्थानां स्थूलप्राणिवधान्निवृत्तिः नतु सूक्ष्मप्राणिवधात्, पृथ्वीजलानलादिषु प्रवृत्तत्वादारम्भासेवाम् । स्थूलप्राणिवधोऽपि द्विविध संकल्पज आरम्भजश्च । संकल्पान्मारयाम्येनं कुलिङ्गिनमिति मनःसंकल्परूपाज्जातः । आरम्भजस्तु कृष्यादिषु प्रवृत्तस्य द्वीन्द्रियादिव्यापादनं न तस्मान्निवृत्तः, शरीरकुटुम्बादिभरणनिर्वाहाभावात् । संकल्पजोऽपि द्विविधः सापराधो निरपराधश्च । तत्र निरपराधान्निवृत्तिः, सापराधेऽपि जयणा विधेया । इति गृहस्थानामपि देशसंयमः ।

अथ द्वितीयलक्षणं सत्यं नाम । तत् सत्यं दशधा—

*

२०५. जणवयं संमये ठवणा नामे रूवे पडुच्चसच्चे य ।
ववहारे-भाव जोगे दसमे ज कम्मसच्चे य ॥ इति ॥

२०६. एकत्रासत्यजं पापं पापं निःशेषमेकतः । द्वयोस्तुलाविधृतयोराद्यमेवातिरिच्यते ॥

२०७. दीक्षा भिक्षा गुरोः शिक्षा ज्ञानं ध्यानं जपस्तपः ।
सर्वं मोक्षार्थिनामेतत् सत्येन सफली भवेत् ॥

अन्यैरप्युक्तम्—

२०८. यदा सत्यं वदेद् वाक्यं मृषाभाषाविवर्जितः ।
अनवद्यं च भाषेत ब्रह्म संपद्यते तदा ॥

*

अथ राजन्! तृतीयं धर्मलक्षणं अदत्तादानपरिहाररूपम्—

२०९. अयशःपटहं दत्वा भुक्त्वा विविधवेदनाः । इह लोके नरकं यान्ति परलोकेऽदत्तहारिणः ॥

२१०. परद्रव्यं यदा दृष्ट्वा संकुलेऽप्यथवा रहः । धर्मकामो न गृह्णाति ब्रह्म संपद्यते तदा ॥

२११. अदत्तदानेन भवेद्दरिद्री दारिद्र्यभावात्तु करोति पापम् ।
पापं हि कृत्वा नरकं प्रयाति पुनर्दरिद्री पुनरेव पापी ॥

*

अथ राजन्! चतुर्थं धर्मलक्षणं ब्रह्मचर्यरूपम् । यतः—

२१२. विदन्ति परमं ब्रह्म यत् समालम्ब्य योगिनः ।
तद् व्रतं ब्रह्मचर्यं स्यात् धारापौरेयगोचरम् ॥

२१३. यः स्वदारेषु सन्तुष्टः परदारापराङ्मुखः । स गृही ब्रह्मचारी च मुक्तिमाप्नोति पुण्यवान् ॥

अन्यैरप्युक्तम्—

२१४. एकरात्रोषितस्यापि या गतिर्ब्रह्मचारिणः। न सा क्रतुसहस्रेण प्राप्तुं शक्या युधिष्ठिर! ॥

२१५. भोगिदष्टस्य जायन्ते वेगाः सप्तैव देहिनः। स्मरभोगीन्द्रदष्टानां दश स्युस्ते महाभयाः ॥

२१६. प्रथमे जायते चिन्ता द्वितीये द्रष्टुमिच्छति। स्युस्तृतीयेऽपि निःश्वासाश्चतुर्थे भजते ज्वरः ॥

२१७. पञ्चमे दह्यते गात्रं षष्ठे भुक्तं न रोचते। सप्तमे स्यान्महामूर्च्छा उन्मत्तत्वमथाष्टमे ॥

२१८. नवमे प्राणसन्देहो दशमे मुच्यतेऽसुभिः।
एभिर्दोषैः समाक्रान्तं जीवो लोकं न पश्यति ॥

२१९. यस्तपस्वी व्रती मौनी संवृतात्मा जितेन्द्रियः।
कलङ्कयति निःशङ्कः स्त्रीसक्तः सोऽपि संयमम् ॥

*

अथ राजन्! पञ्चमं धर्मलक्षणं अकिञ्चनतासन्तोषरूपम्—

२२०. धनं धान्यं स्वर्णरूप्यकुप्यानि क्षेत्रवास्तुनी।
द्विपाच्चतुष्पाद् चेति स्युर्नवबाह्याः परिग्रहाः ॥

२२१. मिच्छत्तं वेयतिगं हासाई छक्कगं च नायव्वं। कोहाईण चउक्कं चउदस अब्भंतरा गंथा ॥

२२२. बाह्यानपि हि यः सङ्गान् मोक्तुं मानवः क्षमः।
सोऽन्तरङ्गान् कथं क्लीबस्त्यजेदिह परिग्रहान् ॥

२२३. यानपात्रमिवाम्भोधौ गुणवानपि मज्जति। परिग्रहगुरुत्वेन संयमी जन्मसागरे ॥

२२४. न यान्ति वायवो यत्र नाप्यर्केन्दुमरीचयः।
आशामहोर्मयः पुंसां तत्र यान्ति निरर्गलाः ॥

२२५. अधीती पण्डितः प्राज्ञः पापभीरुस्तपोधनः।
स एव येन हित्वाशां नैराश्यमुररीकृतम् ॥

२२६. वाक्येनैकेन तद्ब्रूमि यद्वाच्यं वाक्यकोटिभिः।
आशापिशाची शान्ता चेत् संप्राप्तं परमं पदम् ॥

एतानि पञ्च सर्वविरतत्वात् साधूनां महाव्रतान्युच्यन्ते। यदुक्तम्—

२२७. महत्त्वहेतोर्गुणिभिः श्रितानि महान्ति मत्वा त्रिदशैर्नुतानि।
महासुखज्ञाननिबन्धनानि महाव्रतानीति सतां मतानि ॥

*

अथ राजन्! षष्ठं धर्मलक्षणं तपः, बाह्याभ्यन्तरं द्वादशधा। बाह्यतपः—"अणसणमूणोयरिया० ॥ १ ॥ आभ्यन्तरतपः "पायच्छित्तं विणओ वेया० ॥ २ ॥" यदुक्तम्—

२२८. निर्जराकरणे बाह्यात् श्रेष्ठमाभ्यन्तरं तपः।
तत्राप्येकातपत्रत्वं ध्यानस्य मुनयो जगुः ॥

२२९. यस्माद्विघ्नपरम्परा विघटते दास्यं सुराः कुर्वते
कामः शाम्यति दाम्यतीन्द्रियगणः कल्याणमुत्सर्पति।
उन्मीलन्ति महर्द्धयः कलयति ध्वंसं च यः कर्मणां
स्वाधीनं त्रिदिवं शिवं च भवति श्लाघ्यं तपस्तन्न किम् ॥

२३०. सन्तोषः स्थूलमूलः शमपरिकरः स्कन्धबन्धप्रपञ्चः
पञ्चाक्षीरोधशाखः स्फुरदभयदलः शीलसंपत्प्रवालः ।
श्रद्धाम्भःपूरसेकाद्विपुलकुलबलैश्वर्यसौन्दर्यभोगः
स्वर्गादिप्राप्तिपुष्पः शिवपदफलदः स्यात्तपःपादपोऽयम् ॥

इति सकलदर्शनमान्यं तपोलक्षणम् ।

*

अथ सप्तमं धर्मलक्षणं क्षमा सा च क्रोधत्यागाद् भवति ।

*

अथ राजन्! अष्टमं धर्मलक्षणं मार्दवम् । तत्र मृदुत्वं मदनिग्रहाद् भवति । तथा—

२३१. जातिलाभकुलैश्वर्यबलरूपतपःश्रुतैः । कुर्वन् मदं पुनस्तानि हीनानि लभते जनः ॥

मानप्रतिपक्षो मार्दवम् । यदुक्तम्—

२३२. मानग्रन्थिर्मनस्युच्चैर्यावदस्ति दृढो नृणाम् । तावद्विवेकमाणिक्यं प्राप्तमप्यपसर्पति ॥

*

अथ नवमं धर्मलक्षणं ऋजुता मायारहितत्वमिति । यदुक्तम्—

२३३. कूटद्रव्यमिवासारं स्वप्नराज्यमिवाफलम् । अनुष्ठानं मनुष्याणां मन्ये मायाविलम्बिनाम् ॥

२३४. नृपाः कूटप्रयोगेण वणिजः कूटचेष्टितैः । विप्राः कूटक्रियाकाण्डैर्मुग्धं वञ्चयते जनम् ॥

२३५. दंपती पितरः पुत्राः सोदर्याः सुहृदो निजाः ।
ईशा भृत्यास्तथान्येऽपि मायया(ऽ)न्योऽन्यवञ्चकाः ॥

२३६. मायायां पटवः सर्वे जलस्थलखचारिणः । देवा मायापराः केऽपि नारकाश्च किमुच्यते ॥

२३७. अज्ञानामपि बालानामार्जवं प्रीतिहेतवे । किं पुनः सर्वशास्त्रार्थपरिनिष्ठितचेतसाम् ॥

२३८. अशेषमपि दुःकर्म ऋज्वालोचनया क्षिपेत् ।
कुटिलालोचनां कुर्वन् अल्पीयोऽपि विवर्द्धयेत् ॥

मायाप्रतिपक्षभूता ऋजुता ।

*

अथ राजन्! दशमं धर्मलक्षणं मुक्तिः, सा च बाह्याभ्यन्तरवस्तुषु तृष्णाविच्छेदरूपा लोभाभाव इत्यर्थः ।

२३९. यदुक्तम्—अहो लोभस्य साम्राज्यमेकच्छत्रं जगत्त्रये ।
तरवोऽपि निधिं प्राप्य पादैः प्रच्छादयन्ति यत् ॥

२४०. भुजंगगृहगोधाखुमुख्याः पञ्चेन्द्रिया अपि । धनलोभेन लीयन्ते निधानस्थानभूमिषु ॥

२४१. पिशाचमुद्गलप्रेतभूतयक्षादयो धनम् । स्वकीयं परकीयं चाप्यधितिष्ठन्ति लोभतः ॥

२४२. विमानोद्यानवाप्यादौ मूर्च्छितास्त्रिदशा अपि ।
च्युत्वा तत्रैव जायन्ते पृथ्वीकायादियोनिषु ॥

२४३. परमत्यायनासारैः किं वा शास्त्रसुभाषितैः ।
मिलिताक्षा विमृश्यन्तु सन्तोषास्वादजं सुखम् ॥

२४४. किमिन्द्रियाणां दमनैः किं कायपरिपीडनैः ।
ननु सन्तोषमात्रेण मुक्तिस्त्री संमुखी भवेत् ॥

इति समायां सर्वसमक्षं धर्मलक्षणं श्रीगुरूणां मुखादाकर्ण्य श्रीकुमारपालमुख्याः सर्वेऽपि सभ्याः प्रमुदिताः । सञ्जातश्रीजिनप्रणीतधर्मानुरागाः किमस्माभिरतः परं विधेयमिति प्रश्नमकार्षुः । ततः श्रीगुरवः प्राहुः—राजन्!

२४५. हीनं संहननं तपोऽतिविषमं कालश्च दुःखावहः
सिद्धान्तः कुवितर्ककैश्च विवृतो नानावता लिङ्गिनः ।
लोको भिन्नरुचिर्जडो जिनमतं तत्त्वज्ञवेद्यं सदा
मत्वैवं सुविवेकिभिः सुचरितैर्वार्या अनार्याः क्रियाः ॥

२४६. प्राणित्राणप्रकारैर्जगदुपकृतिभिर्भक्तिभिः श्रीजिनानां
सत्कारैर्धार्मिकाणां स्वजनमनःप्रीणनैर्दानयानैः ।
जीर्णोद्धारैर्यतिभ्यो वितरणविधिना शासनोद्योतनैश्च
प्रायः पुण्यैकभाजां भजति सफलतां श्रीरियं पुण्यलभ्या ॥

इति श्रीगुरूणामुपदेशं श्रुत्वा राजा प्राह—भगवन् !

२४७. निद्रा मोहमयी जगाम विलयं सद्दृष्टिरुन्मीलिता
नष्टा दुष्टकषायकौशिकगणा माया ययौ यामिनी ।
पूर्वाद्रिप्रतिमे विवेकहृदये सज्ज्ञानसूर्योदयात्
कल्याणाम्बुजकोटयो विकसिता जातं प्रभातं च मे ॥

अत्रान्तरे कश्चिद् विद्वान् पपाठ—

२४८. आधारो यस्त्रिलोक्या जलधिजलधरार्केन्दवो यन्नियोज्याः
प्राप्यं ते यत्प्रभावादसुरसुरनराधीश्वरैः संपदस्ताः ।
आदेशा यस्य चिन्तामणिसुरसुरभीकल्पवृक्षादयस्ते
श्रीमान् जैनेन्द्रधर्मः किसलयतु वः शाश्वतीं मोक्षलक्ष्मीम् ॥

लक्षदानमप्यापि । इति धर्मलक्षणम् । इति तत्त्वत्रयी ज्ञाता सर्वैरपि ।

*

श्रीकुमारपालभूपालोऽपि गृहस्थोचितं धर्ममपृच्छत् । श्रीगुरवः प्राहुः—

२४९. सम्यक्त्वमूलानि पञ्चाणुव्रतानि गुणास्त्रयः ।
शिक्षापदानि चत्वारि व्रतानि गृहमेधिनाम् ॥

अज्ञान-संशय विपर्यासपरिहारेण यत् सम्यक् परमार्थरूपं तस्य भावः सम्यक्त्वम् । द्वादशव्रतानि गृहस्थानां धर्मः सम्यक्त्वमूलानि । एकविंशतिगुणयुक्तो धर्मयोग्यो भवति ।

२५०. अक्षुद्रो रूपसौम्यौ विनय-नययुतः क्रूरता-दास्यमुक्तो
मध्यस्थो दीर्घदर्शी परहितनिरतो लब्धलक्षैः कृतज्ञः ।
सद्दाक्षिण्यो विशेषी सदयगुणरुचिः सत्कथः पक्षयुक्तो
वृद्धार्हो लज्जितो यः शुभजनसुभगो धर्मरत्नस्य योग्यः ॥

२५१. या देवे देवताबुद्धिर्गुरौ च गुरुतामतिः । धर्मे च धर्मधीः शुद्धा सम्यक्त्वमिदमुच्यते ॥

२५२. सर्वज्ञो जितरागादिदोषस्त्रैलोक्यपूजितः । यथास्थितार्थवादी च देवोऽर्हन् परमेश्वरः ॥

सम्यक्त्वभूषणानि—

२५३. स्थैर्यं प्रभावना भक्तिः कौशलं जिनशासने । तीर्थसेवा च पञ्चास्य भूषणानि प्रचक्षते ॥

स्थैर्यं श्रीजिनधर्मे । प्रभावनाष्टधा—

२५४. पावयणी धम्मकही वाई निमित्तिओ तवस्सी य।
विज्जासिद्धो य कवी अट्ठेव पभावगा भणिया॥

भक्तिः—विनयवैयावृत्त्यरूपा। कौशलेनानार्यदेशवर्त्यार्द्रकुमारोऽभयकुमारेण प्रतिबोधितः। तीर्थसेवा च—द्रव्यतीर्थं भावतीर्थं च। चैत्यादि द्रव्यतीर्थं, भावतीर्थं ध्यानादि। सम्यक्त्वलक्षणानि—

२५५. शमसंवेगनिर्वेदानुकंपास्तिक्यलक्षणैः। लक्षणैः पञ्चभिः सम्यक् सम्यक्त्वमुपलक्ष्यते॥ ५

शमः क्षमा १, संवेगो मोक्षाभिलाषः २, निर्वेदो भववैराग्यम् ३, अनुकंपा चित्तसार्द्रता ४, आस्तिक्यं जिनमते दृढनिश्चयः ५। अथ दूषणानि—

२५६. शंका कांक्षा विचिकित्सा मिथ्यादृष्टिप्रशंसनम्।
तत्संस्तवश्च पञ्चापि सम्यक्त्वं दूषयन्त्यमी॥

अथ सम्यक्त्वाद् विपरीतं मिथ्यात्वम्। तत्स्वरूपमाहुः। तत् पञ्चधा— १०

२५७. आभिग्गहियं अणभिग्गहियं आभिनिवेसीयं चेव।
संसइयमणाभोगं मिच्छत्तं पंचहा होइ॥

२५८. आभिग्गहियं किल दिक्खियाण अणभिग्गहिअं च राइणं।
गुट्ठामाहिलमाईण तं अभिनिवेसियं जाण॥

२५९. संसइयं मिच्छत्तं जा संका जिणवरस्स तत्तेसु। एगिंदियमाईणं तमणाभोगं तु निद्दिट्ठं॥ १५

इति मिथ्यात्वम्। तत्र प्रथमं पापण्डिनां स्वस्वशास्त्रनिरतानाम् १, द्वितीयं सर्वे देवाः सर्वे गुरवः सर्वे धर्माश्च २, तृतीयस्तत्त्वातत्त्वजानतोऽप्यभिनिवेशात् प्ररूपणा ३, चतुर्थं संशयो जीवादितत्त्वेषु ४, अनाभोगिकं विवेकविचारशून्यस्यैकेन्द्रियादेर्वा विशेषज्ञानविकलस्य ५।

२६०. जन्मन्येकत्र दुःखाय रोगाध्वान्तं रिपुर्विषम्।
अपि जन्मसहस्रेषु मिथ्यात्वमचिकित्सितम्॥ २०

२६१. तथा—अंतोमुहुत्तमित्तं पि फासियं होज्ज जेहिं सम्मत्तं।
तेसिं अवड्ढपुग्गलपरीयट्टो चेव संसारो॥

इति सम्यक्त्व-मिथ्यात्वयोः स्वरूपं श्रुत्वा राजा श्रीगुरुमुखेन सम्यक्त्वं जग्राह।

*

अथ राजाऽणुव्रतस्वरूपमपृच्छत्। श्रीसूरयः प्राहुः—

२६२. विरतिः स्थूलहिंसादेर्द्विविधत्रिविधादिना। अहिंसादीनि पञ्चाणुव्रतानि जगदुर्जिनाः॥ २५

२६३. पङ्गुकुष्ठिकुणित्वादि दृष्ट्वा हिंसाफलं सुधीः। निरागस्त्रसजन्तूनां हिंसामन्यस्य नाचरेत्॥

२६४. मार्यमाणस्य हेमाद्रिं राज्यं वाथ प्रयच्छतु। तदनिष्टं परित्यज्य जीवो जीवितुमिच्छति॥

२६५. स्थूलेषु सर्वसत्त्वेषु यः करोति दयां त्रिधा।
सूक्ष्मेषु यतनां कुर्वन् गृहस्थोऽपि स मुक्तिभाग्॥

अथ द्वितीयाणुव्रतम्— ३०

२६६. मन्मनत्वं काहलत्वं मूकत्वं मुखरोगताम्। वीक्ष्यासत्यफलं कन्यालीकाद्यसत्यमुत्सृजेत्॥

२६७. कन्यागोभूम्यलीकानि न्यासापहरणं तथा।
कूटसाक्ष्यं च पञ्चेति स्थूलासत्यान्यकीर्तयन्॥

२६८. असत्यं त्रिषु लोकेषु निन्दितं पापकारणम्।
दुःखितास्तेन जायन्ते देवदानवमानवाः॥ ३५

२६९. इह लोके गृहस्थोऽपि यशः प्राप्नोति निर्मलम्। सत्येन परलोकेषु सुलभाः स्वर्गसंपदः॥

अथ तृतीयाणुव्रतम्—

२७०. दौर्भाग्यं प्रेष्यतां दास्यमङ्गच्छेदं दरिद्रताम्। अदत्तात्तफलं ज्ञात्वा स्थूलस्तेयं विवर्जयेत्॥

२७१. दानशीलतपोभावैः कृतं धर्मं चतुर्विधम्।
निष्फलं प्राणिनां सर्वं परद्रव्याभिलाषिणाम्॥

२७२. गृहिणोऽपि हि धन्यास्ते माननीया महात्मनाम्।
कुर्वन्ति स्वकरे मुक्तिं ये परस्वपराङ्मुखाः॥

अथ चतुर्थव्रतम्—

२७३. षण्ढत्वमिन्द्रियच्छेदं वीक्ष्याब्रह्मफलं सुधीः।
भवेत् स्वदारसन्तुष्टो योऽन्यदारान् विवर्जयेत्॥

२७४. रम्यमापातमात्रं यत् परिणमति दारुणम्। किंपाकफलसंकाशं तत् कः सेवेत मैथुनम्॥

२७५. ब्रह्मचर्यं भयेषेषां स्वाधीनं गृहिणामपि। धन्या जगत्सु तेऽयत्नं लभन्ते परमं पदम्॥

अथ पञ्चमाणुव्रत यथा—

२७६. असन्तोषमविश्वासमारम्भं दुःखकारणम्।
मत्वा मूर्च्छाफलं कुर्यात् परिग्रहनियन्त्रणम्॥

२७७. असन्तोषवतां सौख्यं न शक्रस्य न चक्रिणः।
जन्तोः सन्तोषभाजो यदभयस्येव जायते॥

२७८. न विश्वसिति कस्यापि परिग्रहविमूढधीः। यद्वत् जीवनिकायेषु करोत्यारम्भमन्वहम्॥

२७९. अनन्तदुःखं संसारे ततः प्राप्नोति मूढधीः। परिग्रहमहत्त्वेन परलोकपराङ्मुखः॥

२८०. संनिधौ निधयस्तस्य कामगव्यनुगामिनी। अमराः किंकरायन्ते सन्तोषो यस्य भूषणम्॥

इति श्रुत्वा श्रीकुमारपालः श्रीगुरुमुखेन यथाविधि पञ्चाणुव्रतीं जग्राह।

*

अथ गुणव्रतान्याहु—

२८१. दशास्वपि कृता दिक्षु यत्र सीमा न लङ्घ्यते। ख्यातं दिग्विरतिरिति प्रथमं तद्गुणव्रतम्॥

२८२. चराचराणां जीवानां विमर्दननिवर्तनात्। तप्तायोगोलकल्पस्य सद्वृत्तं गृहिणोऽप्यदः॥

२८३. यत —तत्तायगोलकप्पोऽपमत्तजीवो णिवारियप्पसरो।
सव्वत्थ किं न कुणइ पावं तक्कारणाणुगओ॥

२८४. जगदाक्रममाणस्य प्रसरल्लोभवारिधेः। स्खलनं विदधे तेन येन दिग्विरतिः कृता॥

अथ द्वितीयगुणव्रतम्—

२८५. भोगोपभोगयोः संख्या शक्त्या यत्र विधीयते।
भोगोपभोगमानं तु द्वितीयीकं गुणव्रतम्॥

२८६. सकृदेव भुज्यते यः स भोगोऽन्नस्रगादिकः। पुनःपुनर्भोग्योपभोगोऽङ्गनादिकः॥

२८७. मद्यमांसं नवनीतं मधूदुम्बरपञ्चकम्। अनन्तकायमज्ञातफलं रात्रौ च भोजनम्॥

तत्र मद्य द्विधा काष्ठ पिष्टनिष्पन्नम्, मांस त्रिधा जल-स्थल-खेचरभेदात्। नवनीत गोमहिष्यजेडकाभेदा-च्चतुर्धा। मधु त्रिधा माक्षिक भ्रामर कौत्तिक चेति।

तत्र मद्यदोषाः—

२८८. रसोद्भवाश्च भूयांसो भवन्ति किल जन्तवः। तस्मान्मद्यं न पातव्यं हिंसापातकभीरुणा ॥
२८९. असत्यं वचनं ब्रूते मद्यमोहितमानसः। अदत्तं धनमादत्ते बलाद् भुङ्क्ते परस्त्रियम् ॥
२९०. विवेकः संयमो ज्ञानं सत्यं शौचं दया क्षमा। मद्यात् प्रलीयते सर्वं तृणां वह्निकणादिव ॥

*

२९१. अथ—चिखादयति यो मांसं प्राणिप्राणापहारतः।
उन्मूलयत्यसौ मूलं दयाख्यं धर्मशाखिनः ॥
२९२. सद्यः संमूर्च्छितानन्तजन्तुसन्तानदूषितम्।
नरकाध्वनिपाथेयं कोऽश्नीयात् पिशितं सुधीः ॥
२९३. अहो मूढजना धर्मं शौचमूलं वदन्ति च। सप्तधातुकदेहोत्थं मांसमश्नन्ति चाधमाः ॥
२९४. यदुक्तम्—शुक्रशोणितसम्भूतं मांसमश्नन्ति ये नराः।
जलेन शौचं कुर्वन्ति हसन्ते तत्र देवताः ॥
२९५. शाकिनी मांसभक्षी च समानमनसाविमौ। पुष्टाङ्गं पश्यतो यं यं तं तं हन्तु मतिस्तयोः ॥
२९६. मद्ये मांसे मधुनि च नवनीते तक्रतो बहिर्नीते।
उत्पद्यन्ते विपद्यन्तेऽनन्तास्तद्वर्णजन्तवः ॥

यदुक्तमागमेऽपि—

२९७. उच्चारे पासवणे खेले सिंघाणवंतपित्ते य।
सुक्के सोणियगयजीवकडेवरे नगरनिद्धमणे ॥
२९८. महु-मज्ज-मंस-मक्खण-थीसंगे सव्व-असुइठाणेसु।
उपज्जंति चयंति य समुच्छिमा मणूयपंचिंदी ॥

*

परसमये याज्ञवल्क्यस्मृतौ, उदुम्बरेषु जन्तुसद्भावं लौकिका अपि पठन्ति।

२९९. कोऽपि क्वापि कुतोऽपि कस्यचिदहो चेतस्यकस्माज्जनः,
केनापि प्रविशत्युदुम्बरफलप्राणिक्रमेण क्षणात्।
येनास्मिन्नपि पाटिते विघटिते विस्फोटिते त्रोटिते,
निष्पिष्टे परिगालिते विदलिते निर्यात्यसौ वा न वा ॥

अनन्तकायिकानां तु लक्षणमिदम्—

३००. साहारण-पत्तेया वणसइजीवा दुहा सुए भणिया।
जेसिमणंताण तणू एगा साहरणा ते उ ॥
३०१. सव्वा य कंदजाई सूरणकंदो य वज्जकंदो य।
अल्लहलिद्दा य तहा अद्दं तह अल्लकचूरो ॥
३०२. सत्तावरी विराली कुंआरि तह थोहरी गलोईअं।
लसुणं वंसकरिल्ला गज्जर तह लूणो अ लोढा ॥
३०३. गिरिकन्नकिसलपत्ता खिरिंसुआ थेग अल्लमुत्था य।
तह लूण रुक्ख छल्ली खिल्लुहडो अमयवल्ली अ ॥

३०४. मूला तह भूमिरुहा विरुढाइं तह ढक्क वत्थूलो पढमो ।
सूअरवल्ली अ तहा पल्लंको कोमलंबिलियाइ ॥
३०५. आलू तह पिंडालू हवंति एए अणंतनामेणं ।
बत्तीसं च पसिद्धा बज्जेयव्वा पयत्तेणं ॥
३०६. गूढसिरसंधिपव्वं समभंगमहीरुहं च छिन्नरुहं ।
साहारणं सरीरं तव्विवरीयं च पत्तेयं ॥ —इत्यनन्तकायविचारः ।

*

रात्रिभोजनं सर्वशास्त्रनिषिद्धम्—
३०७. नोदकमपि पातव्यं रात्रावत्र युधिष्ठिर ! ।
तपस्विना विशेषेण गृहिणा तु विवेकिना ॥
३०८. त्रैलोक्यशेषभावानां यो ज्ञाता ज्ञानचक्षुषा ।
न भुङ्क्ते सोऽपि सर्वज्ञो रात्रौ किमपरे जनाः ॥
३०९. सर्वदेवैः परित्यक्तमृषिभिः पितृभिस्तथा ।
तद्रात्रौ भोजनं निन्द्यं विधेयमितरैः कथम् ॥

*

अथामगोरससंपृक्तं द्विदलम् । द्विदललक्षणमिदम्—
३१०. जंमि उ पीलिज्जंते नेहो नहु होइ बिंति तं विदलं ।
विदले वि हु उप्पन्नं नेहजुयं होइ नो विदलं ॥
अथ वर्जनीयवस्तून्याहुः—
३११. पंचुंबरि चउविगई अन्नायफलं हिम-विस-करगे य ।
मट्टी राईभोयण-बहुबीय-अणंतसंधाणं ॥
३१२. घोलवडां वाइंगण अमुणियनामाणि फुल्ल-फलयाणि ।
तुच्छफलं चलियरसं च तह अभक्खयाणि बावीसं ॥
३१३. यदुक्तम्—भक्ष्याभक्ष्याणि वस्तूनि यो न जानाति मूढधीः ।
स जानाति कथं धर्मं सर्वजीवदयामयम् ॥

तत्र पञ्चोदुम्बरी वटपिप्पलप्लक्षकाकोदुम्बरीफलरूपा सा मसकाकारसूक्ष्मबहुजीवभृतत्वाद् वर्जनीया ॥ ५ ॥ चतस्रो विकृतयः—मद्य-मांस-मधु-नवनीतरूपा, सद्य एव तन्नानेकजीवसम्मूर्च्छनात् ॥ ९ ॥ हिम शुद्धासंख्याप्कायरूपत्वात् ॥ १० ॥ विष जीवघातादिसंभवात् ॥ ११ ॥ करका अप्कायासत्यत्वात् ॥ १२ ॥ मृत्तिका सर्वापि दर्दुरादिपञ्चेन्द्रियप्राणिउत्पत्तिनिमित्तात्, सर्वग्रहणं खटिकादीनाम् ॥१३॥ रजनीभोजनं बहुविधजीवहिंसाप्रदम् ॥ १४ ॥ बहुबीजं पपोटकादि प्रतिबीजं जीवोपमर्दकम् ॥१५॥ [अनन्त] अनन्तजीववधहेतुत्वात् ॥१६॥ सन्धानं बिल्वकादीनां जीवसंसक्तिहेतुत्वात् ॥ १७ ॥ घोलवटकानि आमगोरससम्पृक्तद्विदलादिमध्ये सूक्ष्मजीवोत्पत्तिः केवलिदृष्टत्वात् ॥ १८ ॥ वृन्ताकानि निद्राबाहुल्यकामोद्दीपनादिदोषदुष्टत्वात् ॥ १९ ॥ अज्ञातफलपुष्पाणि नियमभङ्गसम्भवात्, विषफले पुष्पे मृत्युरपि ॥ २० ॥ तुच्छफलमर्द्धनिष्पन्नं कोमलाम्बिलियादि ॥ २१ ॥ चलितरसं कुथितान्नं पुष्पितौदनादि, दिनद्वितयातीतं च दधि वर्जनीयं प्राणाविघातादिदोषसम्भवात् । एतान्यभक्ष्याणि ।

अथ कर्मतो भोगोपभोगः । अङ्गारकर्म-वनकर्म-शकट-भाटक-स्फोटक-दन्तवाणिज्य-लाक्षा-रस-केश-विष-यन्त्र-पीडा-निर्लाञ्छन-असतीपोष-दवदान-सरःशोषः-इति कर्मादानानि वर्जयेत् । तदा राजा श्रीकुमारपालः श्रीगुरुमुखेन परिग्रहप्रमाणं भोगोपभोगव्रतस्याकरोत् ।

३१४. अथानर्थदण्डव्रतमाहुः—आर्तरौद्रमपध्यानं पापकर्मोपदेशता ।
हिंसोपकारि दानं च प्रमादाचरणं तथा ॥

तत्र ध्यानं चतुर्द्धा—

३१५. आर्ते तिर्यग्ग(?)तिस्तथा गतिरधो ध्याने तु रौद्रे सदा,
धर्मे देवगतिः शुभं वत्त फलं शुक्ले तु जन्मक्षयः ।
तस्माद् व्याधिरुजान्तिके हितकरे संसारनिस्तारके,
ध्याने शुक्लवरे रजःप्रमथने कुर्यात् प्रयत्नं बुधः ॥

३१६. वृषभान् दमय क्षेत्रं कृषिपण्डविवाजिनाम् ।
दाक्षिण्याविषये पापोपदेशोऽयं न कल्पते ॥

३१७. यन्त्रलाङ्गलशस्त्राग्निमुशलोदूखलादिकम् ।
दाक्षिण्याविषये हिंस्रं नार्पयेत् करुणापरः ॥

३१८. जलक्रीडान्दोलनादिविनोदो जन्तुयोधनम् ।
रिपोः सुतादिना वैरं भक्तस्त्रीदेशराट्कथाः ॥

अथ सामायिकव्रतम्—

३१९. त्यक्तार्तरौद्रध्यानस्य त्यक्तसावद्यकर्मणः। मुहूर्तं समता या तां विदुः सामायिकव्रतम् ॥

३२०. सावज्जजोगपरिवज्जणट्ठा सामाइयं केवलियं पसत्थं ।
गिहत्थधम्मा परमं ति नच्चा कुज्जा बुहो आयहियं परत्था ॥
सामाईयव० ॥ ३ ॥ सामाईयंमि कए समणोइव० ॥ ४ ॥

३२१. अथ—दिग्व्रते परिमाणं यत् तस्य संक्षेपणं पुनः ।
दिने रात्रौ च देशावकाशिकव्रतमुच्यते ॥

इति राजन्! देशावकाशिकव्रतम्, तत्र तत्रारम्भपरिहाररूपम् ।

३२२. अथ पौषधम्—चतुःपर्व्यां च तुर्यादिकुव्यापारनिषेधनम् ।
ब्रह्मचर्यक्रियास्नानादित्यागः पौषधः व्रतम् ॥

३२३. आवश्यकचूर्णौ—आहारपोसहो खलु सरीरसक्कारपोसहे चेव ।
बंभव्वावारेसु य तइयसिक्खावयं नाम ॥

३२४. देसे सव्वे य तहा इक्किक्को इत्थ होइ नायव्वो ।
सामाइए विभासा देसे इयरंमि नियमेण ॥ —इति श्रावकप्रज्ञप्ती ।

अथातिथिसंविभागव्रतम्, राजन्!

३२५. दानं चतुर्विधाहारपात्राच्छदनसद्मनाम् ।
अतिथिभ्योऽतिथिसंविभागव्रतमुदीरितम् ॥

३२६. घरसट्ठीसयणासणभत्तपाणभेसज्जवत्थपत्ताई ।
जइवि न पज्जत्तधणो थोवावि हु थोवयं देइ ॥

अत्राष्टौ कथानकानि वाच्यानि ।

३२७. यदुक्तम्—एलापूगफलाई साहूणं अकप्पिया अचित्तावि ।
कामंगं जेण भवे न तेसि दाणं नया गहणं ॥

अथ वा—

३२८. अविहियसचपलंबा जिणगणहरमाईएहिं नायव्वा ।
लोउत्तरिया धम्मा अणुगुरुणो तेण बब्भाओ ॥

व्याख्या—सर्वाणि सचित्ताचित्तादिभेदभिन्नानि कन्दमूलादिभेदाद् दशविधानि । तथा हि—

३२९. मूले कंदे खंधे तया य साले पवालपत्ते य । पुप्फफले य बीए पलंबसुत्तंमि दसभेआ ॥

३३०. पलंबान्यनाचीर्णानि—सगडद्दहसमभोमे अवि य विसेसेण विरहियतरागं ।
तहवि खलु अणाइन्नं एसऽणुधम्मो पवयणस्स ॥

यदा श्रीवीरो राजगृहादुदयननरेन्द्रप्रव्राजनार्थं सिन्धु-सौवीरदेशे वीतभयं पुरं प्रस्थितस्तदा किलापान्तराले बहवः साधवः क्षुधार्त्ताः तृषार्त्ताः सञ्ज्ञासम्बाधिताश्च बभूवुः । यत्र च भगवानावासितस्तत्र तिलभृतानि शकटानि, पानीयपूर्णह्रदः, समभौमं च गर्त्तादिविवर्जितं स्थण्डिलमभवत् । अपि च विशेषेण तत्तिलोदकस्थण्डिलं जातम् । विरहिततरमतिशयेनागन्तुकैस्तदुत्थैश्च जीवैर्वर्जितम् । तथापि भगवताऽनाचीर्णं नानुज्ञातम् । एषोऽनुधर्मः प्रवचनस्य सर्वैरपि अनुगन्तव्यः । एवमन्यदपि कल्पाकल्पं प्रासुकमपि न देयं दात्रा लेयं च साधुना ।

३३१. न स्वर्णादीनि दानानि देयानीत्यर्हतां मतम् ।
अन्नादीन्यपि पात्रेभ्यो दातव्यानि विपश्चिता ॥

अन्यैरप्युक्तम्—

३३२. क्षेत्रं यन्त्रं प्रहरणमधूलोहलं गो तुरंगो, धेनुर्गन्त्री द्रविणतरयो हर्म्यमन्यच्च चित्रम् ।
यच्चारम्भं जनयति मनोरत्नमालिन्यमुच्चैस्ताहग दानं सुगतितृपितैर्नैव लेयं न देयम् ॥

३३३. पात्रदाने फलं मुख्यं मोक्षसौख्यं कृषेरिव । पलालमिव भोगास्तु फलं स्यादानुषङ्गिकम् ॥

इति श्रुत्वा राजा श्रीगुरुमुखेन सम्यक्त्वमूलानि व्रतानि जग्राह ।

३३४. एवं व्रतस्थितो भक्त्या सप्तक्षेत्र्यां धनं वपन् । दयया चातिदीनेषु महाश्रावक उच्यते ॥

*

§ ४९. सप्तक्षेत्रीस्वरूपमाहुः—नवीनप्रासादनिर्मापणं जीर्णोद्धारं तत्र महामहिम्ना पूजाकरणं गीतनृत्यवादित्रादिकलशपताकातोरणच्छत्रचामरभृङ्गारस्थालिभल्लिकाचन्द्रोद्योतविचित्रचित्रशोभादिकरणम्, तत् प्रथमक्षेत्रं १. बिम्बं स्वर्णरूप्यमणिविद्रुमैरश्ममयम्, तद् द्वितीयक्षेत्रं २. पुस्तकेषु श्रीजिनागमलेखापनम्, तत्तृतीयम्, तृ० ३. चतुर्विधसङ्घभक्तिश्चेति सप्तक्षेत्री ।

३३५. यः सप्तस्वपि नित्यं च क्षेत्रेषु न धनं वपेत् । कथं वराकश्चारित्रं दुश्चरं स समाचरेत् ॥

एतदाकर्ण्य नवीनप्रासाद-जीर्णोद्धार-जिनबिम्ब-पुस्तक-साधु-साध्वी-श्रावक-श्राविकादिषु तेषु साधर्मिकवात्सल्यादिभक्तिषु पुण्यकृत्येषु सादरोऽभूत् ।

§५०. अथ राजा श्रीजिनोक्तनवतत्त्वान्यपृच्छत् । श्रीसूरयः प्राहुः—तत्रेदं जीवस्वरूपम्—

३३६. जीवो अणाइनिहाणो अविणासी अक्खओ धुवो निच्चो ।
दवट्ठयाइ निच्चो परियायगुणेहि अ अणिच्चो ॥

३३७. कालो जहा अणाई अविणासी होइ तिसु वि समएसु ।
तह जीवो वि अणाई अविणासी तिसुवि कालेसु ॥

३३८. अक्खयमणंतमउलं जह गयणं होइ तिसु वि कालेसु ।
तह जीवो अविणासी अवट्ठिओ तिसु वि कालेसु ॥

३३९. गयणं जहा अरूवी अवगाहगुणेहिं घिप्पए तं तु ।
जीवो तहा अरूवी नाणाइगुणेहिं घित्तवो ॥

३४०. अविणासी खलु जीवो विगारउवलंभओ जहागासं ।
उवलब्भंति वियारा कुंभाइविणासिदवाणं ॥

३४१. देहिंदियाइरित्तो आया खलु गब्भगाहपओगे य ।
संडासा अयपिंडा अइगाराइ व विन्नेओ ॥

३४२. देहिंदियाइरित्ते आया खलु तदुवलद्धअत्थाणं ।
तव्विगमे विसरणओ गेहगवक्खेहिं पुरिसु व ॥

३४३. ननु इंदियाइ उवलद्धिमंतिविगएसु विसयसंभरणा ।
जह गेहगवक्खेहिं जो अणुसरिया स उवलद्धा ॥

३४४. अणिंदियगुणं जीवं दुन्नेयं मंसचक्खुणा ।
सिद्धा पासंति सवन्नू नाणसिद्धा ण साहूणो ॥

३४५. जो चिंतेइ सरीरे नत्थि अहं स एव होइ जीवु त्ति ।
नहु जीवंमि असंते संसयमुप्पायओ अन्नो ॥

३४६. जीयस्स एस धम्मो जा ईहा अत्थि नत्थि वा जीवो ।
थाणुमणुस्साणुगया जह ईहा देवदत्तस्स ॥

३४७. सिद्धं जीवस्स अत्थित्तं सद्दादेवाणुमीयए ।
नासओ भुवि भावस्स सद्दो हवइ केवलो ॥

३४८. अत्थि त्ति निव्वियप्पो जीवो नियमाओ सद्दओ सिद्धी ।
कम्हा सुद्धा पयत्ता घडखरसिंगाणुमाणाओ ॥

३४९. मिच्छा भवेउ सवत्था जे केई पारलोइया ।
कत्ता चेवोवभुत्ता य जइ जीवो न विज्जई ॥

३५०. पाणिदया तव नियमा बंभं दिक्खा य इंदियनिरोहो ।
सवं निरत्थयं एयं जइ जीवो न विज्जई ॥

३५१. छउमत्थअणुवलंभा तहेव सवन्नुवयणओ चेव ।
लोगाइपसिद्धीओ मुत्तो जीवु त्ति नायवो ॥

३५२. मुत्तो अणिंदियत्तो खणिओ नवि होइ जाइसंभरणा ।
थणअहिलासा य तहा अभओ भउ मिम्मउ व घडो ॥

३५३. अमओ अ होइ जीवो कारणविरहा जहेवमागासं ।
समयं च होइ अणिच्चं मिम्मयघडतंतुमाईयं ॥

३५४. संकोअ-विकोएहि य जह कम्मं देहलोअमित्तु य ।
हत्थिस्स व कुंथुस्स व पएससंखा समा चेव ॥

॥ ३५५. आयाणे परिभोगे जोगुवओगे कसायलेसा य ।
आणापाणू इंदियबंधोदयनिज्जरा चेव ॥

३५६. चित्तं चेयण सन्ना विन्नाणं धारणा य बुद्धी य ।
ईहा मई वियक्का जीवस्स उ लक्खणा एए ॥

३५७. चित्तं तिकालविसयं चेअण पच्चक्ख सन्न अणुसरणं ।
॥ विन्नाणऽणेगभेयं कालमसंखेयरं धरणा ॥

३५८. अत्थस्स ऊहबुद्धी ईहा चिट्ठत्थअवगमो उ मई ।
संभावणत्थ तक्का गुणपच्चक्खा घडु व त्थि ॥

३५९. जम्हा चित्ताईया जीवस्स गुणा हवंति पच्चक्खा ।
गुणपच्चक्खत्तणओ घड्ड व जीवा अओ अत्थि ॥

॥ ३६०. लोइआ वेइआ चेव तहा सामाइआ विऊ ।
निच्चो जीवो पिहो देहा इति सव्वे ववट्ठिआ ॥

३६१. लोए अच्छिज्ज अभिज्जो वेए स पुरीसदड्ढ य सियालो ।
समए अहमासिगओ तिविहो दिव्वाइसंसारो ॥

३६२. लोए वेए समए निच्चो जीवो विभासया अम्हं ।
॥ इहरा संसाराई सव्वंपि न जुज्जए तस्स ॥

३६३. जह आहारो भुत्तो जिआण परिणमइ सत्तभेएहिं ।
रससोणिअमंसट्ठियमज्जा तह मेयसुक्के य ॥

३६४. एवं अट्ठविहं पि य जीवेण अणाइसहयं कम्मं ।
जह कणगं पाहाणे अणाइसंजोगनिप्पन्नं ॥

॥ ३६५. जीवस्स य कम्मस्स य अणाइमं चेव होइ संजोगो ।
सो वि उवाएण पुढो कीरइ उवलाओ जह कणयं ॥

३६६. किं पुव्वयरं कम्मं जीवो वा इत्थ कोइ पुच्छिज्जा ।
सो वत्तवो कुक्कुडि-अंडाणं मणसु को पढमो ॥

३६७. जह अंडसंभया कुक्कुडि त्ति अंडं पि कुक्कुडीइ भवं ।
॥ न य पुव्वावरभावो जहेह तह कम्म-जीवाणं ॥

३६८. जह कणगस्स उ कीरंति पज्जवा मउडकुंडलाईआ ।
दव्वं कणगं तं चिय नामविसेसो अ सो अन्नो ॥

३६९. एवं चउग्गईए परिब्भमंतस्स जीवकणगस्स ।
नामाइं बहुविहाइं जीवं दव्वं तयं चेव ॥

३७०. पचक्खं गहगहिओ दीसइ पुरिसो न दीसइ पिसाओ ।
आगारेहिं मुणिज्जइ एवं जीवो वि देहट्ठिओ ॥

३७१. अणुमाणुहेउसिद्धं छउमत्थाणं जिणाण पचक्खं ।
गिण्हसु नरवर जीवं अणाईअं अक्खयसरूवं ॥

*

॥ इति जीवव्यवस्थापनाषट्त्रिंशतिका समाप्ता ॥

*

§ ५१. इति जीवस्वरूपं व्यवस्थाप्य जीवभेदानाहुः—तत्र जीवा द्विधा—मुक्ताः संसारिणश्च । मुक्तानां स्वरूपमिदम्—

३७२. अनादिभवसंस्कारविकाराकारवर्जिताः । स्वस्वरूपमयाः सिद्धा केवलज्ञानगोचराः ॥

संसारिणस्तु चतुर्दशधा । तद्यथा—पृथ्व्यप्तेजोवायुवनस्पतिरूपा एकेन्द्रियाः, सूक्ष्मनामकर्मोदयाज्जाताः सूक्ष्माः; बादरनामकर्मोदयजाता बादराश्चेति द्विभेदाः । २ । द्वीन्द्रियाः । ३ । त्रीन्द्रियाः । ४ । चतुरिन्द्रियाः । ५ । असञ्ज्ञिनः सञ्ज्ञिनश्चेति द्विभेदाः पञ्चेन्द्रियाः । एवं भेदाः सप्त । ७ ।

तत्र सञ्ज्ञास्वरूपमिदम्—आहारसञ्ज्ञा वनस्पतीनामपि जलादेराहारः । १ । भयसञ्ज्ञा छिद्यमाना लज्जालु सङ्कुचति । २ । मैथुनसञ्ज्ञाऽशोकादीनां स्त्रीपादप्रहारादिभिः फलोद्गमः । ३ । परिग्रहसञ्ज्ञा वल्ली वाल्कैः कण्टकान् वेष्टयति । ४ । क्रोधसञ्ज्ञा कोऽपि कन्दो (कोकनदो?) हुंकारान् मुञ्चति । ५ । मानसञ्ज्ञा रुदती वल्ली छिद्यमाना बिन्दून् श्रवति । ६ । मायासञ्ज्ञा वल्ल्यः फलानि पत्रैश्छादयन्ति । ७ । लोभसञ्ज्ञाऽधस्थे निधाने वृक्षस्य प्ररोहसम्भवात् । ८ । लोकसञ्ज्ञा कमल-शम्यादीनां रात्रौ सङ्कोचः । ९ । ओघसञ्ज्ञा वल्ल्यो मार्गं त्यक्त्वा वृक्षानाश्रयन्ति । १० । इयं दशधाऽप्येकेन्द्रियाणाम् । यया तु इष्टानिष्टेषु छायातपादिवस्तुषु स्वदेहपालनाहेतोः प्रवृत्तिनिवृत्ती विधत्ते सा हेतुवादोपदेशिकी । इयं तु द्वि त्रि-चतुरिन्द्रियाणाम् । एषा सामान्यसञ्ज्ञा स्वरूपत्वात् स्तोका, तथाभूताऽपि मोहोदयजन्यत्वादशोभनाऽतो नानयाऽधिकारः । किन्तु महत्या शोभनया विशिष्टज्ञानावरणकर्मक्षयोपशमजनया मनोज्ञानसञ्ज्ञयैवेति । यया दीर्घमपि कालमतीतमर्थं स्मरति, भविष्यञ्च वस्तु चिन्तयति, कथं तु नाम कर्त्तव्यम(मि)ति दीर्घकालव्युपदेशिकी । इयं च सुर-नारक-गर्भजमनुष्य-तिरश्चां मनःपर्याप्त्या पर्याप्तानां स्यात् । यया तु हिताहितप्राप्ति-परिहारौ सम्यग्दृष्टिसाध्यौ क्रियेते सा दृष्टिवादोपदेशिकी । इयं सम्यग्दृष्टेरेव भवति । यदुक्तम्—

३७३. पंचण्हं मोहसन्ना हेऊसन्ना विइंदियाईणं ।
सुरनारयगब्भुभवजीवाणं कालिकी सन्ना ॥

३७४. छउमत्थाणं सन्ना सम्मद्दिट्ठीण दिट्ठियाईया ।
मइयावारविमुक्का सन्ना ईआओ केवलिणो ॥

सञ्ज्ञाऽस्यास्तीति सञ्ज्ञी । पञ्चेन्द्रियो मनःपर्याप्त्या पर्याप्तः । इतरे पृथ्व्यादय एकेन्द्रियाः, विकलेन्द्रियाः, सम्मूर्च्छिमपञ्चेन्द्रियाश्चासञ्ज्ञिनः । एवमेकेन्द्रियाः सूक्ष्मबादराः । २ । द्वि-त्रि-चतुरिन्द्रियाः । ३ । असञ्ज्ञिसञ्ज्ञिपञ्चेन्द्रियाश्च । २ । सर्वे सप्तापि भेदाः पर्याप्तापर्याप्तभेदाच्चतुर्दशधा संसारिजीवाः । पर्याप्तयस्त्विमाः—

३७५. आहारसरिरिंदीयपज्जत्ती आणपाणभासमणे ।
चउपंचपंचछप्पिय इगविगला सन्निसन्नीणं ॥

३७६. पत्तेयतरुं मुत्तुं पंचवि पुढवाइणो सयललोए ।
सुहुमा वसंति नियमा अंतमुहुत्ताउ अद्दिस्सा ॥

३७७. एगिंदिय पंचिंदिय उड्ढे य अहे य तिरियलोए य ।
　　विगलिंदियजीवा पुण तिरियलोए मुणेयव्वा ॥

३७८. पुढवी आउ वणस्सइ बारसकप्पेसु सत्तपुढवीसु ।
　　पुढवी जा सिद्धिसिला तेऊ नरखित्ति तिरिलोए ॥

३७९. जइया होही पुच्छा जिणाण मग्गंमि उत्तरं तइया ।
　　एगस्स निगोयस्स य अणंतभागो अ सिद्धिगओ ॥

३८०. गोलाइ असंखिज्जा असंखनिगोअओ हवइ गोलो ।
　　इक्किक्कंमि निगोए अणंतजीवा मुणेयव्वा ॥

३८१. अत्थि अणंता जीवा जेहिं न पत्तो तसाइ परिणामो ।
　　उप्पज्जंति चयंति य पुणोवि तत्थेव तत्थेव ॥

३८२. सामग्गिअभावाओ ववहारियरासिअप्पवेसाओ ।
　　भव्वावि ते अणंता जे सिद्धिसुहं न पावंति ॥

३८३. सिज्झंति जत्तिआ खलु इहयं ववहाररासिमज्झाओ ।
　　एंति अणाइवणस्सइमज्झाओ तित्तिया चेव ॥

३८४. अक्खीणजीयरासी हुंति निगोआ उ जिणसमक्खाया ।
　　तेण न दोसो संसाररित्तियासंभवो होइ ॥

३८५. लोए असंखजोयणमाणे पइ जोअणंगुलासंखा ।
　　पइ तं असंखयं सा पइ य सअसंखया गोला ॥

३८६. गोलो असंखनिगोओ सोऽणंतजिओ जियं पइ पएसा ।
　　असंख पइ पएसं कम्माणं वग्गणाणंता ॥

३८७. पइ वग्गणं अणंता अणू अ पइ अणु अणंतपज्जाया ।
　　एवं लोगसरूवं भाविज्ज तह त्ति जिणवुत्तं ॥

३८८. पत्थेण व कुडएण व जह कोइ मिणिज्ज सव्वधन्नाइं ।
　　एवं मविज्जमाणा हवंति लोगा अणंताओ ॥

३८९. लोगागासपएसे निगोअजीवं ठिवेइ इक्किक्कं ।
　　एवं मविज्जमाणा हवंति लोगा अणंताओ ॥

*

§५२. एवं जीवतत्त्वे व्याख्याते सति कश्चित्तीर्थान्तरीयः प्राह–'हे महात्मन् ! एवं च युष्मदुक्तयुक्त्या सूक्ष्मैर्बादरैश्च त्रसैः स्थावरैश्च जीवैः सर्वत्र व्याप्ते लोके कथमहिंसकत्वं नाम, कथं च सर्वप्राणातिपातनिरतिनतम् ? ।' तदा श्रीसूरयः प्राहुः–'भो वादिन् ! तत्त्वातत्त्वपरिज्ञानानभिज्ञत्वेनैव भवदुक्तिः । यतः, हिंसापरिणामपरिणत एवात्मा हिंसक इत्युच्यते, न त्वपरिणतः, तस्याहिंसकत्वात् । यदुक्तमहिंसापरमवेदिभिः श्रीसर्वज्ञैः–

३९०. अज्झत्थविसोहीए जीवनिकाएहिं संथडे लोए ।
　　देसिअमहिंसकत्तं जिणेहिं तिलुक्कदंसीहिं ॥

३९१. नाणी कम्मस्स खयट्ठमुट्ठिओ नो ठिओ उ हिंसाए ।
　　जयइ असढं अहिंसत्थमुट्ठिओ अवहओ सोउ ॥

३९२. अणुमित्तो वि न कस्स य बंधो परवत्थुपच्चया भणिओ ।
तह वि अ जयंति जइणो परिणामविसोहिमिच्छंता ॥

३९३. जो पुण हिंसाययणेसु वट्टई तस्स नूण परिणामो ।
दुट्ठो न य तं लिंगं होइ विसुद्धस्स जोगस्स ॥

३९४. तम्हा य सा विसुद्धं परिणामं इच्छया सुविहिएणं ।
हिंसाययणा सव्वे वज्जेयव्वा पयत्तेणं ॥

३९५. वज्जेमि त्ति परिणओ संपत्तीए विमुच्चए वेरा ।
अवहंतो वि न मुच्चइ किलिट्ठभावोऽइवायस्स ॥

३९६. न य हिंसामित्तेणं सावज्जेणावि हिंसओ होइ ।
सुद्धस्स उ संपत्ती अफला भणिया जिणवरेहिं ॥

३९७. जा जयमाणस्स भवे विराहणा सुत्तविहिसमग्गस्स ।
सा होइ निज्जरफला अज्झत्थविसोहिजुत्तस्स ॥

अन्यैरप्युक्तम्–

३९८. अधीत्य सर्वशास्त्राणि जीवहिंसां करोति यः ।
मनोवाक्कायसंक्लिष्टः स पापी सर्वतोऽधमः ॥

३९९. अकुर्वाणोऽपि पापानि क्लिष्टभावो हि बध्यते ।
विमुच्यतेऽक्लिष्टमनाः कुर्वन्नपि कथंचन ॥

४००. वचोभिरुच्यते सर्वैर्दया जीवेषु दर्शनैः ।
क्रियते वाग्मनःकायैरार्हतैः किंतु सर्वदा ॥ इति जीवतत्त्वम् ।

§५३. अथ अजीवतत्त्वमाहुः–अजीवा दुविहा पन्नत्ता; तं जहा–पुग्गला य नोपुग्गला य । पुग्गला छव्विहा पन्नत्ता; तं जहा–सुहुमसुहुमा १, सुहुमा २, सुहुमबायरा ३, बायरसुहुमा ४, बायरा ५, बायरबायरा ६ । तत्थ सुहुमसुहुमा परमाणुपुग्गला । सुहुमा दुप्पएसियाओ आढत्तो जाव सुहुमपरिणओ अणंतपएसिओ खंधो । सुहुमबायरा गंधपुग्गला । बायरसुहुमा वाउकायसरीरा । [बायरा] उस्साईणं । बायरबायरा तेउ-वणस्सइ-पुढविसरीराणि । अहवा चउव्विहा पुग्गला; तं जहा–खंधा १, खंधदेसा २, खंधपएसा ३, परमाणुपुग्गला ४ । एस पुग्गलत्थिकायओगहणलक्खणो । स्पर्श-रस-गन्ध-वर्णशब्दास्तत्र स्वभावजाः, संघातभेदनिष्पन्नाश्च । नोपुग्गलत्थिकाओ तिविहो पन्नत्तो; तं जहा–धम्मत्थिकाओ २, अधम्मत्थिकाओ २, आगासत्थिकाओ ३ । एते त्रयोऽपि तत्तदवच्छेदकवशात् स्कन्ध १ स्कन्धदेश २ स्कन्धप्रदेश ३ रूपैर्भेदैः प्रत्येकं त्रिभेदाः । एवं भेदाः ९ । तत्र गतिपरिणतजीवपुद्गलानां प्रत्युपष्टम्भकारणं धर्मास्तिकायः; यथा चक्षुष्मतो ज्ञानस्य प्रदीपः, मत्स्यानां जलम् । तथा गतिपरिणतजीवपुद्गलानां स्थित्युपष्टम्भकारणमधर्मास्तिकायः; यथा तिष्ठासोः पुरुषस्य भूः, मत्स्यानां स्थलम् । तथा जीवानां पुद्गलानां धर्माधर्मास्तिकाययोश्चावगाहकानामवकाशदमाकाशम्; यथा बदराणां घटाकाशः । कालस्तु समयावलिकामुहूर्त्तदिवसपक्षमासादिः । तत्र समयः परमतमसूक्ष्मः, स च कालस्य निर्विभागो भागः । तैरसंख्यातैरेका आवलिका, ताभिः २५६ मिताभिः क्षुल्लकभवग्रहणानि निगोदजीवाः पूरयन्ति । ३७७३ उच्छ्वासप्रमाणो मुहूर्त्तः । त्रिंशता तैरहोरात्रः । तैः पञ्चदशभिः पक्षः । ताभ्यां मासः–इत्यादिकालः सर्वत्र नवपुराणत्वादिपर्यायोत्पत्तिहेतुलक्षणो ज्ञेयः । एवं षोडशभेदं चतुर्दशभेदं वाऽजीवतत्त्वम् । एतत्परिज्ञानमन्तरेणाजीवसंयमो न भवति ॥ २ ॥

अथ पुण्यतत्त्वम्—४२ [भेदम्] येन जीवः सुखमनुभवति तत्सुखवेदनीयं पुण्यप्रकृतिः । १ । उच्चैर्गोत्र-पुण्यप्रकृत्या धन-बुद्धि-रूपादिरहितो लोके पूजां लभते । २ । यया पुण्यप्रकृत्या मनुष्यत्वं लभते सा मनुष्यगतिः । ३ । यया वृषभनासिकारज्जुकल्पया द्विसमयादिवक्रेण गच्छन् जीवो मनुष्यगतावानीयते सा मनुष्यानुपूर्वी । ४ । एवं देवगति—५ देवानुपूर्वी । ६ । पञ्चेन्द्रियजातिः ७, औदारिकं शरीरं ८, तिर्यग्-मनुष्याणां वैक्रियमौपपातिकं लब्धिप्रत्ययं च ९, आहारकं चतुर्दशपूर्वविदः कार्ये स्यात् १०, तैजसं भुक्तान्नपरिणतितेजोलेश्याहेतुः ११—इत्यादि पुण्यतत्त्वं ज्ञेयम् ।

पापतत्त्वम् ८२ [भेदम्], आश्रवतत्त्वम् ४२ [भेदम्], संवरतत्त्वम् ५७ [भेदात्मकम्].

*

§५४. अथ राजन्! निर्जरातत्त्वम्—निर्जरयति रसहान्या कर्मपुद्गलान् जीर्णान् करोति या सा निर्जरा । सा च द्विभेदा—सकामनिर्जरा १ अकामनिर्जरा २ च । तत्र अकामनिर्जरा सहनपरिणाममन्तरेण सकलचातुर्गतिकजीवानां स्वयं परिपाकसमायातकर्मफलवेदनम्; सकामनिर्जरा तु परिज्ञातकर्मविपाकनिर्जरणोपायानां कर्मक्षयार्थं सहनपरिणामवतां सर्वविरत-देशविरतादीनाम् । सा द्वादशधा तपोरूपा—

४०१. अणसणमूणोयरिया वित्तीसंखेवणं रसच्चाओ ।
कायकिलेसो संलीणया य बज्झो तवो होइ ॥

तत्रानशनं द्विधा—इत्वरम् १, यावत्कथिकं च २ । तत्रेत्वरं चतुर्थषष्ठाष्टमादियावत्संवत्सरं तपः । यावत्कथिकं तु भक्तपरिज्ञा १—इंगिनी २—पादपोपगम ३ रूपं त्रिधा । ऊनोदरता द्विधा द्रव्यतो भावतश्च ।

४०२. तत्र द्रव्यतः—कवलाण य परिमाणं कुक्कुडिअंडगपमाणमित्ताणं ।
जं ऊणत्तं कीरइ ऊणोयरिया उ सा दव्वे ॥

४०३. भावतः—कोहाईणमणुदिणं चाओ जिणवयणभावणाओ उ ।
भावेणोणोयरिया पन्नत्ता वीयरागेहिं ॥

वृत्तिसंक्षेपो गोचराभिग्रहादिश्चतुर्द्धा । द्रव्यतः १, क्षेत्रतः २, कालतः ३, भावतश्च ४ । तत्र द्रव्यतो निर्लेपादि ग्राह्यम् ।

४०४. उक्तं च—लेवडमलेवडं वा अमुगं दव्वं च अज्ज घिच्छामि ।
अमुगेण य दव्वेणं इय दव्वाभिग्गहो नाम ॥

४०५. अट्ठ उ गोअरभूमी एलगविक्खंभमित्तगहणं च ।
सग्गामपरग्गामे एवइय घरा य खित्तंमि ॥

४०६. काले अभिग्गहो पुण आई मज्झे तहेव अवसाणे ।
अप्पत्ते सइ काले आई ठिइ मज्झ तइयंते ॥

४०७. उक्खित्तमाइचरगा भावजुया खलु अभिग्गहा हुंति ।
गायंतो य रुयंतो जं देइ निसण्णमाई वा ॥

रसः क्षीरदधिघृतादिस्त्यागस्तप । उक्तं च—

४०८. विगई विगईभीओ विगइगयं जो अ भुंजए साहू ।
विगई विगइसहावा विगई विगई बला नेइ ॥

कायक्लेशो वीरासनादिभेदाद्विधः । कायोत्सर्गादिसंलीनता चतुर्धा—

४०९. इंदियकसायजोए पडुच्च संलीणया मुणेयव्वा । तह य विवित्ता चरिया पन्नत्ता वीयरागेहिं ॥

४१०. भद्देसु अभद्दयपावएसु भोअविसयमुवगएसु ।
रुट्ठेण व तुट्ठेण व समणेण सया न होअव्वं ॥

एवं शेषेन्द्रियेषु निरोधकरणे सलीनता । उक्तश्च बाह्यतपः । अथाभ्यन्तरं तपः—

४११. पायच्छित्तं विणओ वेयावच्चं तहेव सज्झाओ ।
झाणमुस्सग्गो विय अब्भिंतरओ तवो होइ ॥

४१२. पावं छिंदइ जम्हा पायच्छित्तं ति भन्नए तम्हा ।
पाएण वा वि चित्तं विसोहई तेण पच्छित्तं ॥

४१३. तद्दशधा—आलोयण-पडिकमणे मीसविवेगे तहा विउस्सग्गे ।
तव-छेय-मूल-अणवट्ठया य पारंचिए चेव ॥

प्रमाददोषव्युदासभावप्रसादनैःशल्यानवस्थाव्यावृत्तिमर्यादात्यागसंयमदार्ढ्याराधनादिप्रायश्चित्तफलम् । विनीयतेऽष्टप्रकारं कर्म येन स विनयः । स च त्रिधा काय-वाङ्-मनोभिः । यथा—

४१४. अब्भुट्ठाणं अंजलि आसणदाणं अभिग्गहाकिई अ ।
सुस्सूसण-अणुगच्छण-संसाहणं काय अट्ठविहो ॥

४१५. हिअ-मिअ-अफरुसवाई अणुवीई भासि वाईओ विणओ ।
अकुसलमणोनिरोहो कुसलस्स उदीरणं चेव ॥

४१६. वैयावृत्त्यं दशधा—आयरियउवज्झाए थेरतवस्सीगिलाणसेहाणं ।
साहम्मियकुलगणसंघसंगयं तमिह कायव्वं ॥

वाचना-प्रच्छना-परावर्त्तना अनुप्रेक्षा-धर्मकथारूपः पञ्चधा स्वाध्यायः । ध्यानं धर्म-शुक्लरूपम् । व्युत्सर्गो द्विधा—द्रव्यतो भावतश्च । यदुक्तम्—

४१७. दव्वे भावे य तहा दुहा विसग्गो चउव्विहो दव्वे ।
गणदेहोवहिभत्ते भावे कोहाइ चाओ त्ति ॥

४१८. काले गणदेहाणं अतिरित्ता सुद्धभत्तपाणाणं ।
कोहाइयाण सययं कायव्वो होइ चाओ त्ति ॥

—इति द्वादशधा तपो निर्जरातत्त्वम् ।

४१९. यथा कर्माणि शीर्यन्ते बीजभूतानि जन्मतः ।
प्रणीता ज्ञानिभिः सेयं निर्जरा शीर्णबन्धनैः ॥

*

§९५. अथ राजन् ! बन्धतत्त्वम्—अञ्जनचूर्णपूर्णसमुद्गकवन्निरन्तरं पुद्गलनिचिते लोके हेतुभिर्मिथ्यात्वाविरतिकषाययोगादिभिः सामान्यैः प्रत्यनीकत्व-निह्नवत्वादिविशेषरूपैश्च कर्मयोग्यवर्गणापुद्गलैः संगृहीतैरात्मनो वह्न्ययःपिण्डवदन्योन्यानुगमात्मकः सम्बन्धो बन्ध. । स च चतुर्विधो यथा—प्रकृतिबन्धः १, स्थितिबन्धः २, रसबन्धः ३, प्रदेशबन्धः ४ ।

४२०. प्रकृतिः परिणामः स्यात् स्थितिः कालावधारणम् ।
अनुभागो रसो ज्ञेयः प्रदेशो दलसञ्चयः ॥

प्रकृति-स्थित्यादीनाश्रित्य मोदकदृष्टान्तो यथा—कश्चिन्मोदको वातनाशिद्रव्यनिष्पन्नः प्रकृत्या वातमपहरति, पित्तापहारिद्रव्यनिष्पन्नः पित्तम्, श्लेष्मापनायिद्रव्यकृतः श्लेष्माणम् । स्थित्या तु स एव कश्चिद्दिनमेकमवतिष्ठते,

अपरस्तु दिनद्वयम्, यावन्मासादिकमपि कश्चित्। अनुभागेनापि स्निग्धमधुरत्वं लक्षणेन स एव कश्चिदेकगुणानुभागोऽपरस्तु द्विगुणानुभागः—इत्यादि। प्रदेशाश्च कणिकादिरूपाः। तैः स एव कश्चिदेकप्रसृतिमानोऽपरस्तु द्व्यादिप्रसृतिमानः। एवं कर्मापि किञ्चित् प्रकृत्या ज्ञानाच्छादकम्, किञ्चिद् दर्शनाच्छादकमित्यादि। स्थितिस्त्रिंशत्सागरोपमकोटाकोट्यादिका। तस्य रस एकस्थानादिः। प्रदेशा अनन्ताणुरूपाः। एवं कर्मग्रन्थानुसारेण सविस्तरं बन्धतत्त्वं ज्ञेयम्।

§ ९६. अथ मोक्षतत्त्वम्—तत्रात्मनः स्वरूपावरणीयानां कर्मणां क्षयात् यः स्वरूपलाभः स मोक्षः। स च तादात्म्येन सम्बन्धयोर्जीवकर्मणोः पृथक्करणं कर्मक्षयः; नतु सर्वथा क्षयः, कर्म-पुद्गलानां नित्यत्वात्। यदुक्तम्—

४२१. जीवस्स अत्तजणिएहिं चेव कम्मेहिं पुव्वबद्धस्स।
सव्वविओगो जो तेण तस्स अह ईतिओ मुक्खो॥

तस्य च सत्पदप्ररूपणायाम्—सत् विद्यमानं मोक्ष इति पदम्, शुद्धशब्दवाच्यत्वात्। नत्वसत् अविद्यमानं वन्ध्यास्तनन्धयगगनकुशेशय-खरविषाणादिवदशुद्धशब्दवाच्यम्। यदुक्तम्—

४२२. चइऊणं संकप्पं सारपयमिणं दढेण चित्तव्वं।
अत्थि जओ परमपयं जयणा जा रागदोसेहिं॥

गत्यादिषु मार्गणास्थानेषु चिन्त्यमानं नरगतौ १, एवं पञ्चेन्द्रियत्वे २, त्रसत्वे ३, भव्यत्वे ४, सञ्ज्ञित्वे ५, यथाख्यातचारित्रे ६, क्षायिकसम्यक्त्वे ७, अनाहारकत्वे ८, केवलज्ञानदर्शने ९ च। मोक्षपदं न शेषेषु। द्रव्यप्रमाणचिन्तायां सिद्धानामनन्तानि जीवद्रव्याणि गृहान्तःप्रदीपितदीपशतसहस्रप्रभावदन्योऽन्यं समवगाढानि सन्ति। यदुक्तम्—

४२३. त(ज)त्थ य एगो सिद्धो तत्थ अणंता भवक्खयविमुक्का।
अन्नुन्नसमोगाढा पुट्ठा सव्वेवि लोगंते॥

४२४. फुसइ अणंते सिद्धे सव्वपएसेहिं नियमसो सिद्धो।
तेवि असंखिज्जगुणा देसपएसेहिं जे पुट्ठा॥

क्षेत्रं चतुर्दशरज्ज्वात्मकलोकाग्रं पञ्चचत्वारिंशद्योजनलक्षप्रमाणसिद्धिशिलारूपम्। यदुक्तम्—

४२५. पणयाललक्खजोयणविक्खंभा सिद्धसिल फलिहविमला।
तदुवरिगजोअणंते लोगंतो तत्थ सिद्धठिई॥

अथवा चरमभवशरीरप्रमाणात्तृतीयभागोनावगाहनारूपं क्षेत्रम्। यदुक्तम्—

४२६. दीहं वा हस्सं वा जं चरमभवे हविज्ज संठाणं।
तत्तो तिभागहीणा सिद्धाणोगाहणा भणिया॥

क्षेत्रात् स्पर्शनाधिका षट्सु दिक्षु स्पर्शनाधिक्यात्। एकसिद्धमाश्रित्य कालः सादिरनन्तश्च, पश्चात् प्रतिपाताभावात्। सिद्धानां नान्तरं सर्वसंसारिकजीवानामनन्ततमे भागे सिद्धाः। सिद्धानां दर्शन-ज्ञाने क्षायिके भावे, जीवितं तु पारिणामिके भावे। सर्वस्तोका नपुंसकसिद्धाः, ततोऽसंख्यातगुणाः स्त्रीसिद्धाः; ततोऽपि पुरुषसिद्धाः संख्यातगुणाः।

४२७. असरीरा जीवगणा उवउत्ता दंसणे य नाणे य।
सागारमणागारं लक्खणमेयं तु सिद्धाणं॥

४२८. निच्छिन्नसव्वदुक्खा जाइजरामरणबंधणविमुक्का।
अव्वाबाहं सुक्खं अणुहुंति सासयं सिद्धा॥

४२९. नवि अत्थि माणुसाणं तं सुक्खं न विय सव्वदेवाणं ।
जं सिद्धाणं सुक्खं अव्वाबाहं उवगयाणं ॥

४३०. सुरगणसुहं समग्गं सव्वद्धा पिंडियं अणंतगुणं ।
नवि पावइ मुत्तिसुहं अणंताहिं वग्गवग्गूहिं ॥

अन्यैरप्युक्तम्—

४३१. स्थितिमासाद्य सिद्धात्मा तत्र लोकाग्रमन्दिरे ।
आस्ते स्वभावजानन्तगुणैश्वर्योपलक्षितः ॥

४३२. यद्देवमनुजाः सर्वे सौख्यमक्षार्थसम्भवम् । निर्विशन्ति निराबाधं सर्वाक्षप्रीणनक्षमम् ॥
४३३. सर्वेणातीतकालेन यच्च भुक्तं महर्द्धिकैः । भाविनो यच्च भोक्ष्यन्ति स्वादिष्टं स्वान्तरञ्जकम् ॥
४३४. अनन्तगुणितं तस्मादत्यक्षं स्वस्वभावजम् । एकस्मिन् समये भुङ्क्ते तत्सौख्यं परमेश्वरः ॥
४३५. अनन्तदर्शनज्ञानसौख्यशक्तिमयः प्रभुः । त्रैलोक्यतिलकीभूतस्तत्रैवास्ते निरञ्जनः ॥

—राजन् ! एवं नवतत्त्वानि—

४३६. जीवाई नवपयत्थे जो जाणइ तस्स होइ सम्मत्तं ।
भावेण सद्दहंतो अयाणमाणेवि सम्मत्तं ॥

४३७. सव्वाइं जिणेसरभासियाइं वयणाइं नन्नहा हुंति ।
इय बुद्धी जस्स मणे सम्मत्तं निचलं तस्स ॥

४३८. अंतोमुहुत्तमित्तं पि फासियं हुज्ज जेहिं सम्मत्तं ।
तेसिं अवड्ढपुग्गलपरिअट्टो च्चेव संसारो ॥

अन्तर्मुहूर्तमष्टसमयोर्ध्वं घटीद्वयमध्यं यावदित्यर्थः । तचान्तर्मुहूर्तप्रमाणं सम्यक्त्वौपशमिकमुच्यते । यथोपरं दग्धं वा वनदेशं प्राप्य वनदवः स्वयमुपशममेति, तथा जीवोऽपि ग्रन्थिभेदानन्तरमन्तर्मुहूर्तमतिक्रम्य मिथ्यात्वस्यानुदयमधिगम्यान्तर्मौहूर्तिकमेतत् सम्यक्त्वं लभते । अपकृष्टः किञ्चिन्न्यूनः पुद्गलपरावर्त्तः । तस्येदं स्वरूपम्—

४३९. ओसप्पिणी अणंता पुग्गलपरियट्टओ मुणेयव्वो । तेणंतातीयद्धा अणागयद्धा अणंतगुणा ॥

इति तत्त्वानि । अन्येऽपि च श्रीजिनोक्तभावास्तत्त्वज्ञैर्ज्ञेयाः । यदुक्तम्—

४४०. तत्त्वानि व्रतधर्मसंयमगतिज्ञानानि सद्भावनाः,
प्रत्याख्यानपरीषहेन्द्रियदमध्यानानि रत्नत्रयम् ।
लेश्यावश्यककाययोगसमितिप्राणप्रमादस्तपः-
सञ्ज्ञाकर्मकषायगुप्त्यतिशया ज्ञेयाः सुधीभिः सदा ॥

इत्येतानि नवतत्त्वानि श्रीगुरुमुखेन श्रुत्वा श्रीकुमारपालभूपालोऽधिगतजीवाजीवादितत्त्वः परिज्ञातषड्द्रव्यस्वरूपः परमार्हतः परमश्रावकः समजनि ।

*

§ ५७. अथान्यदाऽनेकभूपालचक्रवालपरिवृतः श्रीकुमारपालभूपालः पञ्चाङ्गप्रणामेन श्रीपरमगुरूणां क्रमपद्मं प्रणम्य गृहस्थानामुचितामहोरात्रिकीं क्रियामपृच्छत् । ततः श्रीगुरवः प्राहुः—राजन् ! संसारविरक्तानां यतिधर्मानुरक्तानां श्रीजिनभक्तानां परमश्रावकाणामहोरात्रिकीं क्रियां श्रूयताम् । तथा हि—

४४१. निसाविरामंमि विबुद्धएणं, सुसावएणं गुणसायराणं ।
देवाहिदेवाण जिणुत्तमाणं, किच्चो पणामो विहिणायरेणं ॥

४४२. सज्झाठाणं पमुत्तूणं चिट्ठिज्ञा धरणीयले । भाववंधं जगन्नाहं नमुक्कारं तओ पढे ॥

४४३. मंताण मंतो परमो इमु त्ति, धेयाण धेयं परमं इमं ति ।
तत्ताण तत्तं परमं पवित्तं, संसारसत्ताण दुहाहयाणं ॥

४४४. कोऽहं पुणो कंमि कुलंमि जाओ, किं सम्मदिट्ठी वयनियमधारी ।
उआहु हं दंसणमित्तजुत्तो, एयं तु अन्नं पि विचिंतइज्जा ॥

'ब्राह्मे मुहूर्ते उत्तिष्ठेत्०' आरभ्य इत्याहोरात्रिकी चर्या यावत् श्रीयोगशास्त्रतृतीयप्रकाशमध्यात् वाच्यं दिनचर्यास्वरूपं चेति ।

*

§५८. अन्यदा श्रीहेमचन्द्रगुरोर्लोकोत्तरैर्गुणैरपहृतहृदयो नृपतिरुदयनमन्त्रिणं सभायां पप्रच्छ—'यत् ईदृशं पुरुषरत्नं [कस्मिन्] समस्तवंशावतंसे वंशे देशे समस्तपुण्यप्रदेशे निःशेषगुणाकरे नगरे च समुत्पन्नमिति ।' नृपादेशादनु स मन्त्री जन्मप्रभृति तच्चरित्रं पवित्रमाह—अर्द्धाष्टमनामनि देशे धुन्धुकाभिधाने नगरे श्रीमन्मोढवंशे चाचिगनामा व्यवहारी सती जनमतल्लिका जिनशासने देवीव तस्य सधर्मचारिणी पाहिणी नाम्नीति । तयोः पुत्रश्चामुण्डागोत्रजायाः आद्याक्षराङ्केन चांगदेवनामा समजनि, प्रवरभाग्यसौभाग्यपवित्रः—गर्भे पुष्पितसहकारो गृहाङ्गणात् पौषधशालायां फलित'—इति स्वप्नसूचितः । स चाष्टवर्षदेशीयः श्रीदेवचन्द्राचार्येषु श्रीपत्तनात् तीर्थयात्रायै प्रस्थितेषु धुंधुक्के श्रीमोढवसहिकायां देवनमस्करणार्थं प्राप्तेषु सिंहासनस्थिततदीयनिषद्यायां सहसा निषण्णसवयोभिः शिशुभिः समं धर्मदेशनादिकां क्रीडां कुर्वाणस्तैर्व्याहुत्यमानैर्दृष्टः । तदङ्गप्रत्यङ्गानां जगद्विलक्षणानि लक्षणानि निरीक्ष्य चिन्तितम्—यद्ययं क्षत्रियकुले जातस्तदा सार्वभौमो नरेन्द्रः, यदि वणिग् विप्रकुले तदा महामात्यः। चेद् दीक्षां गृह्णाति तदा युगप्रधान इव तुर्ये युगे कृतयुगमवतारयतीति । ततस्तत्पित्रोस्तस्य च नामादिकं शिशुभ्योऽधिगम्य तन्नगरनिवासिश्रीसङ्घं प्रेरयित्वा तत्स्वरूपं निरूप्य, तस्य गृहे गताः श्रीसूरयः । चाचिगे ग्रामान्तरगते माता भाग्ययोगेन गृहागतः श्रीसङ्घः स्वागतकरणादिना तोषितः । मम पुत्रार्थमायातः श्रीसङ्घः—इति हर्षाश्रूणि मुञ्चन्ती स्वं रत्नगर्भां मन्यमानापि विषण्णा । यतस्तत्पिता सुतरां मिथ्यादृष्टिः; परं तादृशोऽपि ग्रामे नास्ति । तर्हि मया किं कर्तव्यमिति क्षणं मूढचित्ताऽभूत् । ततः प्रत्युत्पन्नमतिर्माता श्रीसङ्घेन समं श्रीगुरून् कल्पतरूनिव गृहायातान् ज्ञात्वाऽवसरज्ञा स्वजनानामनुमतिं लात्वा निजं पुत्रं श्रीगुरुभ्यो ददौ । ततः श्रीगुरुभिः श्रीसङ्घसमक्षं—'हे वत्स ! श्रीतीर्थंकर-चक्रवर्ति-गणधरैरासेवितां सुरासुरनरनिकरनायकमहतीं मुक्तिकान्तासङ्गमदूतीं दीक्षां त्वं लास्यसि?'—इति प्रोक्ते स च बालकुमारकः प्राग्भवचारित्रावरणीयकर्मक्षयोपशमेन संयमश्रवणमात्रसंजातपरमवैराग्यः सहसा ओमित्युवाच । ततो मात्रा स्वजनैश्चानुमतं पुत्रं संयमानुरागपवित्रं लात्वा श्रीतीर्थयात्रां विधाय कर्णावतीं जग्मुः श्रीगुरवः । ततः उदयनमन्त्रिगृहे तत्सुतैः समं बालकधारकैः पाल्यमानः सकलसङ्घलोकमान्यः संयमपरिणामधन्यः वैनयिकादिगुणविशिष्टो यावदास्ते तावता ग्रामान्तरादागतश्चाचिगः पत्नीनिवेदितश्रीगुरुसङ्घागमनपुत्रार्पणादिवृत्तान्तः, पुत्रादर्शनावधिसन्त्यक्तसमस्ताहारः कर्णावत्यां गतः । तत्र वन्दिता गुरवः, श्रुता धर्मदेशना । सुतानुसारेणोपलक्ष्य विचक्षणतयाऽभाणि श्रीगुरुभिः—

४४५. कुलं पवित्रं जननी कृतार्था, वसुन्धरा भाग्यवती च तेन ।
अवाह्यमार्गे श्रुतसिन्धुमग्नं, लग्नं परब्रह्मणि यस्य चेतः ॥

४४६. कलङ्कं कुरुते कश्चित् कुलेऽपि विमले सुतः ।
धननाशकरः कश्चिद् व्यसनैः पुण्यनाशनैः ॥

४४७. पित्रोः सन्तापकः कश्चिद् यौवने प्रेयसीमुखः।
बाल्येऽपि म्रियते कोऽपि स्यात् कोऽपि विकलेन्द्रियः॥

४४८. सर्वाङ्गसुन्दरः किन्तु ज्ञानवान् गुणनीरधिः।
श्रीजिनेन्द्रपथाध्वन्यः प्राप्यते पुण्यतः सुतः॥

इति श्रीगुरुमुखादाकर्ण्य सञ्जातप्रमोदः प्रसन्नचित्तश्चाचिगः। तत्र श्रीगुरुपादारविन्दनमस्यायै समायातेनो- दयनमन्त्रिणा धर्मबान्धवधिया निजगृहे नीत्वा गुरुगौरवेण भोजयांचक्रे। तदनु चांगदेवं तदुत्सङ्गे निवेश्य पञ्चाङ्गप्रसादपूर्वकं दुकूलत्रयं द्रव्यलक्षत्रयं चोपनीय समक्तिकमावर्जितश्चाचिगः सानन्दं मन्त्रिणमवादीत्—'मन्त्रिन्! क्षत्रियमूल्येऽशीत्यधिकसहस्रम् १०८०, अश्वमूल्ये पञ्चाशदधिकानि सप्तदशशतानि १७५०, सामान्यस्यापि वणिजो मूल्ये नवनवति ९९ गजेन्द्रा एतावता नवनवतिलक्षा भवन्ति। त्वं तु लक्षत्रयमर्पयन् स्थूललक्षायसे। अतो मत्सुतोऽनर्घ्यस्त्वदीया भक्तिस्त्वनर्घ्यतमा। तदस्य मूल्ये सा भक्तिरस्तु, न तु मे द्रव्येण प्रयोजनमिति शिवनिर्माल्य- वद्स्पृश्यो मे। दत्तो मया पुत्रो भवताम्'—इति चाचिगवचः श्रुत्वा प्रमुदितमना मन्त्री तं परिरभ्य, साधु साधु! युक्तमेतदिति वदन् पुनस्तं प्रत्युवाच—'त्वयाऽयं पुत्रो ममार्पितो योगिमर्कट इव सर्वेषामपि जनानां नमस्कारं कुर्वन् केवलमपमानपात्रं भविता, परं श्रीगुरूणां समर्पितः श्रीगुरुपदं प्राप्य बालेन्दुरिव महतां महनीयो भवतीति विचार्यतां यथोचितम्'। ततः स 'भवद्विचार एव प्रमाणमि'ति वदन् सकलश्रीसङ्घसमक्षं रत्नकरण्डमिव रक्षणीयं उदुम्बरपुष्पमिव दुर्लभं तं पुत्रं क्षमाश्रमणपूर्वकं श्रीगुरूणां समर्पयामास। श्रीगुरुभिरभाणि—

४४९. धनधान्यस्य दातारः सन्ति कचन केचन।
पुत्रभिक्षाप्रदः कोऽपि दुर्लभः पुण्यवान् पुमान्॥

४५०. धनधान्यादिसंपत्सु लोके सारा हि सन्ततिः। तत्रापि पुत्ररत्नं तु तस्य दानं महत्तमम्॥

४५१. स्वर्गस्थाः पितरो वीक्ष्य दीक्षितं जिनदीक्षया।
मोक्षाभिलाषिणं पुत्रं तृप्याः स्युः स्वर्गसंसदि॥

श्रीमहाभारतेऽप्युक्तम्—

४५२. तावद् भ्रमन्ति संसारे पितरः पिण्डकांक्षिणः।
यावत् कुले विशुद्धात्मा यती पुत्रो न जायते॥

इति श्रुत्वा प्रमुदितेन चाचिगेन प्रव्रज्योत्सवः श्रीस्तम्भतीर्थे आलिगवसहिकायां कारयितः। सोमदेवमुनिर्नाम दत्तम्।

*

§५९. यथान्यदा नागपुरे धनदेवनाम्नः श्रेष्ठिगृहे प्रथमालिकार्थं गतः। तद्गृहे रूक्षभोजनं स्वर्णराशिं च दृष्ट्वाऽग्रगं वृद्धसाधुं प्राह यथा—'कस्मादस्य गृहेऽसमञ्जसमीदृशम्?। एकतः स्वर्णराशिः, भोजने तु रूक्षा!' स साधुरिति श्रुत्वोवाच—'अभाग्यवशेनायं निर्धनो जातः। निधानगतमपि स्वर्णमङ्गारीभूतं राशीकृतमस्ति'। सोमदेवमुनिना प्रोक्तम्—'मया तु स्वर्णराशिरिदंदृशे'। गवाक्षस्थेन श्रेष्ठिना तन्निशम्य क्षुल्लकमाहूय, अङ्गारकराशौ करौ दापितः। तत्सर्वं स्वर्णं जातम्। तत्प्रच्छादकः कश्चिद् व्यन्तरः परमब्रह्मतेजोऽसहिष्णुर्नष्टः। ततः सञ्जातचमत्कारेण श्रेष्ठिना श्रीसङ्घेन च हेमचन्द्रनाम दापितम्। ततः शनैः शनैर्ज्ञानेन तपसा विनयादिगुणैर्वयसा च वर्द्धमानो निजौदार्य- गाम्भीर्यादिगुणैरावर्जितश्रीगुरुगच्छश्रीसङ्घलोकः, कदाचित् श्रीगुरूनापृच्छ्य युगादौ लोकोपकाराय परमब्रह्मयपरम- पुरुषप्रणीतमातृकाऽष्टादशलिपिविन्यासप्रकटनप्रवीणाया ब्राह्म्या आदिमूर्तिं त्रिलोकनाय काश्मीरदेशं प्रति प्रस्थितः

श्रीहेमचन्द्रः। ततः कियति मार्गेऽतिक्रान्ते सति मिथ्यात्वतमःकराले(ऽ)स्मिन् कलिकालेऽस्य श्रीजिनशासनप्रभावकस्य महापुरुषस्य बह्वपायसङ्कुले पथि मा भूद् भ्रमणप्रयासः–इति सा भगवती स्वयं दिव्यरूपधारिणी संमुखीना समाजगाम निशीथे। अजिह्मपरमब्रह्मवर्चसं पद्मासनासीनमर्द्धनिमीलितलोचनं समाधियोगस्वाधीनस्वान्तं ध्यानाधिरूढं श्रीहेमचन्द्रं दृष्ट्वा प्रोवाच–

४९३. रुद्धे प्राणप्रचारे वपुषि नियमिते संवृतेऽक्षप्रपञ्चे,
नेत्रस्पन्दे निरस्ते प्रलयमुपगते सर्वसंकल्पजाले।
भिन्ने मोहान्धकारे प्रसरति महसि कापि विश्वप्रदीपे,
धन्यो ध्यानावलम्बी कलयति परमानन्दसिन्धौ प्रवेशं॥

४९४. सङ्कल्पमात्रादपि सिद्धकार्या, वाञ्छन्ति ते नैव तथापि किञ्चित्।
इच्छाविनाशेन यदस्ति सौख्यं, त एव जानन्ति गुरुप्रसादात्॥

तथाप्ययं परमपुरुषः सकलपुरुषार्थप्रणेताऽस्मिन्निरतिशये काले श्रीशासनस्य प्रभावको भावीति कृत्वा कतिपयविद्याप्रधान् श्रीविद्याप्रवादसंवादसुन्दरान् साम्नायान् प्रदाय प्रमुदिता भगवती भारती कृतस्तुतिस्तिरोऽभूत्। पुनः पश्चादागताः।

*

§ ६०. एकदा श्रीगुरुस्ताम्रच्छ(?)धान्यगच्छीयदेवेन्द्रसूरि-मलयगिरिभ्यां सह कलाकलापकौशलाद्यर्थं गौडदेशं प्रति प्रस्थिताः। खिल्लूरग्रामे गताः। तत्र ग्लानो मुनिर्वैयावृत्त्यादिना प्रतिचरितः। श्रीरैवतकतीर्थे देवनमस्करणकृतार्चियात्रग्रामाध्यक्षश्राद्धेभ्यः सुखासनं तद्वाहकांश्च प्रगुणीकृत्य रात्रौ सुप्तास्तावत् प्रत्यूषे प्रबुद्धाः स्वं रैवतके पश्यन्ति। शासनदेवता प्रत्यक्षीभूय कृतगुणस्तुतिर्भाग्यवतां भवतामत्र स्थितानां सर्वं भावीति, गौडदेशागमनं निषिध्य महौषधीरनेकान् मन्त्रान् नामप्रभावाख्यानपूर्वकमाख्याय स्वं स्थानं जगाम।

*

§ ६१. एकदा श्रीगुरुभिः सुमुहूर्ते दीपोत्सवचतुर्दशीरात्रौ श्रीसिद्धचक्रमन्त्रः साम्नायः समुपदिष्टः। स च पद्मिनीस्त्रीकृतोत्तरसाधकत्वेन साध्यते। ततः सिध्यति, याचितं वरं दत्ते, नान्यथा। ततोऽन्यदा कुमारग्रामे धौतां शोषणार्थं विस्तारितां शाटिकां समालोक्य पृष्टो रजकस्तैः–'कस्या इयं शाटिकेति?' सोऽवदद्–'ग्रामाध्यक्षपत्न्या इयम्'। ततो गतास्तस्मिन् ग्रामे। ग्रामाध्यक्षप्रदत्तोपाश्रये स्थिताः। स च प्रत्यहं समेति, धर्मदेशनां शृणोति। तेषां ज्ञानक्रियावैराग्यप्रमत्तत्वादिगुणान् दृष्ट्वा, तथाविधभव्यत्वपरिपाकाद् गुणानुरागरञ्जितस्वान्तः प्रमुदितः प्राह–'यूयमनिच्छपरमेश्वराः, कमपि कार्यं मत्साध्यं समादिशन्तु।' ततस्ते त स्वान्तनिवेदिनं गुणानुरागगम्भीरवेदिनं ज्ञात्वा प्राहुः–'अस्माकं श्रीसिद्धचक्रमन्त्रः साधयितुमिष्टोऽस्ति। स च पद्मिनीस्त्रीकृतोत्तरसाधकत्वेन सिध्यति नान्यथा। तेन तव या पद्मिनी स्त्री वर्त्तते, तां लात्वा कृष्णचतुर्दशीरात्रौ रैवतकाचले समागच्छ, अस्माकमुत्तरसाधकत्वं कुरु; विकारदर्शने शिरश्छेदस्त्वयैव विधेयः'– इत्याकर्ण्य ग्रामाध्यक्षो विस्मयस्मेरमना मनाग्विमृश्यं चिन्तयां चकार–'एते तावन्महर्षयः समतृणमणिलोष्टकाञ्चनाः परब्रह्मसाधिसाधकाः, तदेतेषामिदं कार्यं वयं समर्थाः(?) दमनया स्त्रिया चेद् भवति तदा तथाऽस्तु, किं बहुविचारेण'–इति विचिन्त्य तैरुक्ते दिने तैः समं सस्त्रीकः सुतरां निर्भीकः श्रीरैवताचलमौलिमलञ्चकार। ते च त्रयः कृतपूर्वकृत्याः श्रीअम्बिकाकृतसान्निध्याः शुभध्यानधीरधियः श्रीरैवतादेवतदृष्टौ नियामिन्यामाह्वानावगुण्ठनमुद्राकरणमन्त्रन्यासविसर्जनादिभिरुपचारैर्गुरूक्तविधिना समीपस्थपद्मिनीस्त्रीकृतोत्तरसाधकक्रियाः श्रीसिद्धचक्रमसाधयत्। तत इन्द्रसामानिकदेवोऽस्याधिष्ठाता प्रत्यक्षीभूय पुष्पवृष्टिं विधाय स्वेप्सितवरं वृणुतेत्युवाच। ततः श्रीहेमसूरिणा राजप्रतिबोधः; देवेन्द्रसूरिणा निजावदातकरणाय

कान्तीनगर्याः प्रसाद एकरात्रौ ध्यानबलेन **सेरीसकग्रामे** समानीतः'—इति जनप्रसिद्धिः, **मलयगिरिसूरिणा** सिद्धान्तवृत्तिकरणवरः—इति त्रयाणां वरं दत्त्वा देवः स्वस्थानमगात्। प्रमुदितो ग्रामाधीशः। प्रत्यूषे बहुवित्तव्ययेन प्रभावनां विधाय त्रयाणां ध्यानध्येयं प्रसादार्द्ध्य देवकृतप्रशंसां वरप्रदानं च जनेषु प्रकटीकृत्य निजजायां गृहीत्वा स्वग्रामं जगाम।

*

§ ६२. अथ **श्रीपत्तने** गुरुभिः सह **सिद्धराजसभायां** गतो **हेमचन्द्रमुनिः**। स्वविद्वत्तयाऽप्रतिमः प्रीणितान्त-ॽ र्वाणिगणः प्रमुदितेन **सिद्धभूपतिना** कारिताचार्यपदमहोत्सवः प्रत्यहं कलाकौशलेन कालं गमयति।

*

§ ६३. अन्यदा नृपेण 'किं वाच्यतेऽद्यकल्ये ?' इति पृष्टे, अजिह्मपरमब्रह्मैककारणव्रतविचारे 'स्थूलभद्रमुनीन्द्रचरितम्' इत्युक्ते राजा समग्रमामूलतस्तच्चरित्रं पप्रच्छ। ततः सविस्तरं कथिते चरित्रे राजा प्रमुदितः। अत्रावसरे मिथ्या-**दृगालिगो** (पाठान्तरेण—'**मिथ्यादृग्गिलिगो**') मन्त्री प्राह—'अहो संप्रति काले क मनुष्याणामेवंविध इन्द्रिय-जयः। यतः—'**विश्वामित्रपराशरप्रभृतयो०**' [इत्यादि पद्यम्] ततः श्रीसूरिभिः प्रत्युत्तरमदायि—'**सिंहो** ॥ **बली द्विरद०**' इति श्रुत्वा राजा चमत्कृतः। नवीनं व्याकरणं कृतम्। एते ते **हेमसूरयः**।' इति श्रुत्वा राज्ञा **श्रीकुमारपालेन श्रीमोढज्ञातीयानां** लोकानां चामराः दत्ताः।—**इति दीक्षाप्रबन्धः**।

*

§ ६४. अन्यदा श्रीगुरवः सभायां व्यसनानि निराकर्तुं प्राहुः—

४५५. **द्यूतं च मांसं च सुरा च वेश्या, पापर्द्धिचौरी परदारसेवा।**
**एतानि सप्तव्यसनानि राजन्!, घोरातिघोरं नरकं नयन्ति॥** ॥

४५६. **द्यूतात् राज्यविनाशनं नलनृपः प्राप्तोऽथवा पाण्डवाः,**
**मद्यात् कृष्णनृपश्च राघवपिता पापर्द्धितो दूषितः।**
**मांसात् श्रेणिकभूपतिश्च नरके चौर्याद्धतो मण्डिको,**
**वेश्यातः कृतपुण्यको गतधनोऽन्यस्त्रीमृतो रावणः॥**

ततः सभायामेतानि सप्तकथानकानि व्यसनदोषप्रकाशकानि श्रीगुरुमुखेन श्रुत्वा राजा लोकानां ज्ञापनाय॥ सप्तव्यसनानि मृण्मयानि कारयित्वा रासभेष्वारोप्य राजमार्गे भ्रामयित्वा लकुटादिभिर्हन्यमानानि **श्रीपत्तनात्** निजदेशाच्च निरचीकशत्।

*

§ ६५. अथान्यदा श्रीजिनधर्माभिमुखं नृपं ज्ञात्वा **श्रीपर्वताद् भैरवानन्दो** नाम योगी पञ्चशतयोगिपरिवृतः श्रीपत्तनमागतः। संमुखगमने राज्ञा पृष्टाः श्रीसूरयः प्राहुः—'शोभनमिदम्, परं परीक्षा क्रियते, ततो गम्यते।' समस्यापदं राजपुरुषकेण प्रेषितम्। यथा—'च्यारि घाय जोगवई स जोई'—इति एतत्समस्यापदं विचार्य॥ कीदृशाश्चत्वारो घाता भविष्यन्तीति घातभीतस्त्रियामिन्यां नष्टः। प्रत्यूषे घातस्वरूपं राज्ञा पृष्ट गुरवः प्राहुः—

४५७. **एय अउव(वी ?)जोई मुहामणमेहुणअणवाईनिद्दाए।**
**परमत्थु न बुज्झइ कोई च्यारि घाय जोगवई सो जोई॥**

*

§ ६६. अथ **गङ्गातटे** दीपकाख्यद्विजात् त्रैपुरं मन्त्रं प्राप्य **नर्मदातटे** देवयोषिद्विजोऽसाधयत्। तुष्टा त्रिपुरा तस्य, 'एकवाक्येन याचस्व वरम्' इत्युवाच प्रत्यक्षा। सोऽपि बुद्धिमान् 'भुक्ति-मुक्ति-सरस्वती'रिति ययाचे। ततः॥ प्रभृति महेन्द्रजालादिविद्यावान्, चूडामण्यादिशास्त्रैरतीतादिज्ञाता, कदलीदण्डपत्रमयपञ्चमसूत्रतन्तुपद्दं सुखासनमधिरो-

इति । चतुरशीत्यासनकरणप्रवीणः, कायगतपट्चक्रविज्ञानचक्रवर्ती, षोडशाधारधीरधीः, लक्षनयदक्षः, व्योमपञ्चक-पण्डितः, पूरककुम्भकरेचकादिप्राणायामक्रियाकुशलः, इडा पिङ्गला-सुषुम्णा-गान्धारी हस्तिनी-प्रमुखदशमहानाडी-वातसञ्चारचतुरः, आद्विजमातङ्गप्रार्थकगृहेषु यथार्ह रूपकरणाद् भुक्ति, श्रीजिनधर्मानुरक्तं नृपं ज्ञात्वा स श्रीपत्तने समायातः । सर्वद्विजैः सत्कारितः, चमत्कारदर्शनाल्लोकैश्च । राजगुरुरिति मत्वा राजापि संमुखमागतः । कदलीपत्र-सुखासनस्थः शिशुकारितवाहककर्म्मा राजादिपरिवारपरिवृतः शालाग्रे समायातः । कौतुकाकुलितसकलपरिवारप्रेरितो मध्ये प्रविष्टः । सूरयस्तु पुरापि पूरितासनमुद्राः प्राणायामलघुभूतशरीराः शिष्याकर्षितसिंहासना निरालम्बा स्थिताः सन्ति । तान् तदवस्थान् दृष्ट्वा विस्मितो देवबोधिः । सर्वेऽपि लोका विस्मयस्मेरमानसाः प्रोचुः–अहो ! सूरीणां निराधारमाकाशेऽवस्थानमिति । तेन कवित्वशक्तिपरीक्षार्थं समस्यापदमर्पितम् । यथा–

४५८.　　व्यापिद्धा रुदती मुखं च नयने स्वे गर्हते कन्यका ।

तदाकर्ण्य–'भगवन् ! किमुच्यते युष्मच्छिष्याणां विदुषां सरस्वतीसर्वस्वमुखानाम् ? प्रथममहमेव श्रीभगवदाज्ञया पूरयामी'ति प्रमाणं कृत्वा कपर्दी श्रावकः सर्वान् निवार्य पूरयामास–

४५९.　　नैतस्याः प्रकृतिद्वयेन सरले शक्ये पिधातुं दृशौ,
　　रुद्राक्षी च विलोकते शशिमुखी ज्योत्स्नावितानैरियम् ।
　　इत्थं मध्यगता सखीभिरसकृत् दृग्मीलनाकेलिषु,
　　व्यापिद्धा रुदती मुखं च नयने स्वे गर्हते कन्यका ॥

श्रीहेमसूरिसेवापरस्य श्रावकस्यापि शीघ्रकवितां दृष्ट्वा विस्मयस्मेरः 'शोभनोऽयम्, वयं समुत्सुकाः स्मः' इत्युक्त्वा गतः । राज्ञाऽन्त्यजात् (पाठभेदे–अन्त्यजगृहेषु) निमन्त्रापितः । तेन मानितं निमन्त्रणम् । द्विजादीनां विमर्शः कथमन्त्यजगृहे भोजनं करिष्यतीति । सहस्रलिङ्गसरोवरटोडकयोर्मोचितं भोज्यम् । राजा [illegible] राजपाटिकामिषेण सरोवरसमीपे समायातः । देवबोधिः स्नानार्थं जलान्तः प्रविष्टः । कृष्णश्वा भूत्वा निर्गतो भुक्तं तद्भोजनम् । पुनर्जलान्तः प्रविश्य देवबोधिर्भूत्वाऽगात् । राज्ञः सर्वेषां लोकानां च विस्मयोऽभूत् । राज्ञा निजावासे निमन्त्रितः । विविधा भक्तिः कृता । अन्यदिने देवार्चावसरे सप्तपूर्वजानां मस्तकानि कीटैरावृतानि प्रोचु–'हे वत्सास्माभिस्तुभ्य राज्य दत्तम्, त्वं महतीं प्रौढिं नीतः । अस्मन्मार्गं मुक्त्वा जैनोऽभूत्, तेन राज्यं पश्चाद् ग्रहीष्यामः । सप्तमे नरके पातिता वयम् । त्वया किं कृतम् ? । त्यक्तः स्वकुलाचारः । त्यजाधुनाऽपि कुमार्गप्रवृत्तिम्' । एतदाकर्ण्य राजाऽविज्ञातपरमार्थः किंकर्त्तव्यताजडोऽभूत् । सविषादमिदमचिन्तयत्–'अहो ! सकलशास्त्रसंवादसुन्दरोऽयं जीवदयाधर्मः सर्वप्राणिप्रियः कथं कुमार्गः कथ्यते, किमत्र तत्त्वम् ?' । तस्मिन् दिने लोकमध्ये महाप्रभावोऽभूत् मिथ्यादृक्शासने । द्वितीयदिने व्याख्यानावसरे प्रथमं परिमलसुगन्धः, पश्चाद्विमानम् । विमानादुत्तीर्य मूलराज-प्रभृतयः पूर्वजाः श्रीगुरून्नमस्कृत्य श्रीकुमारपालं प्रति प्राहुः–'वत्स ! त्वया नरकान्तं राज्यं प्राप्य कलिकालेऽपि महतां महनीयस्त्रिभुवनोत्तमः श्रीजिनधर्मः प्रतिपन्नः । स्वर्गस्था वयं प्रमुदिता देवसदसि ।' एतन्निशम्य राजा सचमत्कारमना प्राह–'भगवंस्तत्र तादृशमत्रेदृशं किमत्र तत्त्वम् ?' श्रीगुरवः प्राहुः–'नरेश्वर ! तत्रापि, अत्रापि च नरकस्वर्गादिदर्शने सर्वं कलाकौशलमिदम् । तव पूर्वजाः यत्र स्वकर्मणा गताः, तत्र सन्ति । जिनवाक्यमेतत् । पूर्वोक्त-दशलक्षणो धर्म' । ततो रञ्जितो राजा । क्षामिता गुरवः । राजपूर्वजानामागमनं दृष्ट्वा नष्टः पश्चिमरात्रौ गतः ।

*

§ ६७. एकदा कोऽपि ब्राह्मणः परीक्षार्थं हरीतकीं मुष्टौ बद्ध्वा सप्रमुदित उवाच–

४६०.　　हेमसूरि मुं करि किसिउं, हरडइ, काइं रहेइ ।
　　जिणि कारणि हुं घालियउं सवह वंजण छेहिं ॥

इति श्रुत्वा प्रमुदितः प्राह–'अतः परं न रटिष्यति। युष्माभिः स्वनामाग्रे स्थापितोऽस्ति।' इत्यादिवाक्यैः ब्राह्मणैर्विद्वद्भिः सह प्रीतिरुत्पन्ना। यतः–

४६१. असारसंसारमहीरुहस्य, सुधोपमं स्वादुफलं तदेकम्।
परस्परं मत्सरवर्जितानां, यद्वर्द्धते प्रीतिरियं नराणाम्॥

*

§ ६८. एकदा व्याख्यानमध्ये श्रीगुरुभिर्हाहेति प्रोचे, चन्द्रयशगणिना तु हस्तौ घृष्टौ। मुक्ते व्याख्याने तु राज्ञा पृष्टम्–'भगवन्! युवाभ्यां किं कृतम्?' श्रीगुरुभिरूचे–'राजन्! देवपत्तने श्रीचन्द्रप्रभप्रासादे दीपेन चन्द्रोदयो लग्नोऽस्माभिर्दृष्टः। स तु हस्तौ घृष्ट्वा अनेन विध्यापितः। राजा चमत्कृतः, स्वपुरुषैर्निर्णयं व्यधात्। अहो! निरतिशये कालेऽपि श्रीभवतामपूर्वं ज्ञानम्।

§ ६९. ततः पूर्वभवमपि मे ज्ञास्यन्तीति तदपृच्छत्–'भगवन्निदमपि ज्ञायते, यदहं पूर्वभवे कीदृशोऽभूवन्।' श्रीगुरुभिरुक्तम्–'राजन्निरतिशयकालोऽयम्। यतः श्रीवीरनिर्वाणाद् वर्षाणां चतुःषष्ट्या चरमकेवली श्रीजम्बूः सिद्धिं गतः। तेन सह द्वादश वस्तूनि त्रुटितानि।

४६२. मणपरमोहिपुलाए आहारग-खवगउवसमे कप्पे।
संयमतियकेवलसिज्झणा य जंबुम्मि विच्छिन्ना॥

सहस्रवर्षेण सर्वं पूर्वगतं श्रुतं व्यवच्छिन्नम्। संप्रति स्वल्पं श्रुतम्। तथापि देवतादेशेन विज्ञाय किमपि कथयिष्यते। ततो रात्रौ शुभध्याने स्थिताः। समायातः पूर्वाराधितश्रीसिद्धचक्रसुरः। पृष्टो राज्ञः पूर्वभवम्। तेन निवेदितं सर्वं भवस्वरूपम्। ततः प्रभाते राज्ञः समस्तसमासमक्षं कथितम्, यथा–'राजन्! पूर्वभवे मेदपाटपरिसरे जयपुरे जयकेशी राजाऽभूत्, तत्पुत्रो जयताकः सप्तव्यसनवान् पित्रा निष्कासितो मेदपाटपरिसरे पर्वतश्रेण्यां पल्लीपतिर्जातः। अन्यदा नरवीरस्य सार्थवाहस्य सार्थः सर्वोऽपि लुण्टितस्तेन। सार्थवाहस्तु मालवदेशं गत्वा तत्र राजानं विज्ञप्य सैन्यमानीय पल्लीमवेष्टयत्। तन्महद्बलं मत्वा जयताको नष्टः। नरवीरेण वणिजाकारेण कीटमारिः कृता। तत्पत्नी सगर्भा हता। भूपतितो बालः शिलायामास्फालितः। ततो मालवकदेशे राज्ञोऽग्रे स्वरूपे निरूपिते, राज्ञा हत्याद्वयं स्त्री-बालरूपं लग्नम्, अतोऽयमद्रष्टव्यमुखोऽस्तीति निष्कासितः स्वदेशात्। स च सार्थवाहो नरवीरः पदे पदे लोकैर्निन्द्यमानः पश्चात्तापपरो वैराग्यात्तापसो भूत्वा तीव्रं तपस्तप्त्वा मृत्वा जयसिंह-देवो जातः। स च हत्याद्वयादपुत्रः। जयताकोऽपि देशान्तरं गच्छन् रूपसौभाग्यवानाकर्णाकृष्टकोदण्डो मृग-यापरः मार्गे श्रीयशोभद्रसूरिभिर्दृष्टः। प्रोक्तश्च–

४६३. क्षत्रियोऽसि नराधीश! प्रतिसंहर सायकम्। आर्त्तत्राणाय वः शस्त्रं न प्रहर्तुमनागसि॥

भो क्षत्रिय! एवंविधं पवित्रं क्षात्रगोत्रमवाप्य मा जीवहिंसां कुरु। एतदाकर्ण्य लज्जितः प्राह–'भगवन्!

४६४. बुभुक्षितः किं न करोति पापं, क्षीणा नराः पापपरा भवन्ति।
आख्याहि भद्रे! प्रियदर्शनस्य, न गङ्गदत्तः पुनरेति कूपे॥

ततः श्रीगुरुवचसा व्यसनानि मुक्तानि। श्राद्धैः शम्बलादिकं दत्तम्। शनैः शनैः प्राप्तप्रतिबोधो नवलक्ष-तिलंगे देशे उलं(रं)गलपुरे ओढरवणिग्गृहे भोजनादिवृत्त्याऽस्थात्। एकदा पर्युषणापर्वणि स श्रीमान् ओढरः श्रावकः पुत्रपौत्रमित्रादिपरिकरः सप्रधानपूजोपकरणः श्रीजिनगृहमगात्। तत्र विधिना जिनस्य स्नात्रं विधाय पूजा-वसरे जयताकं प्राह–'गृहाणेदं पुष्पादिकम्, कुरु जिनेन्द्रपूजाम्, गृहाण स्वजन्मजीवितफलम्।' ततः स तदा-कर्ण्याचिन्तयत्–'अदृष्टपूर्वोऽयं देवः परमेश्वरः प्रसन्नवदनः नासाग्रन्यस्तदृक् परमयोगमुद्रासीनः निरञ्जनस्वरूपः। तत्कथं परकीयैः पुष्पैः पूज्यते। ततः स्वकीयपञ्चवराटकक्रीतपुष्पैरानन्दाश्रुप्लावितदृक् प्रसन्नमनोवाक्कायः पारमेश्वरीं

पूजामकरोत् । ततोऽहो ! यद्येते भोगभाजोऽपि व्यवहारिणोऽद्य तपः कुर्वन्ति, ततः पुण्यमद्यतनं दिनमित्यहमपि विशेषतस्तपः करोमीति गुरूणां मुखेनोपवासमकरोत् । प्रभाते विशुद्धश्रद्धया साधूनां दानमदात् । ततः स्वं कृतार्थं मन्यमानः कृतपुण्यः सन् मृत्वा त्वं **त्रिभुवनपालपुत्रो** जातः । **ओढरश्रावकस्तु उदयनमन्त्री, यशोभद्र-सूरयस्तु** वयम् । त्वं पुनरितो निजायुःप्रान्ते महर्द्धिकव्यन्तरदेवत्वमधिगम्य ततश्च्युत्वा चात्रैव **भरतक्षेत्रे भद्दिलपुरे शतानन्दनृप-धारिण्योः** पुत्रः पैत्रिकराज्यमवाप्य भाविश्रीपद्मनाभजिनेन्द्रधर्मदेशनां श्रुत्वा प्रतिबुद्धः परिहृत्य राज्यलक्ष्मीं प्रव्रज्यैकादशगणधरो भूत्वा केवलज्ञानमासाद्य मोक्षं यास्यसि ।' एतन्निशम्य राजा विस्मितः प्राह—'*भगवन् ! कोऽत्र प्रत्ययः ?* ।' *श्रीगुरुभिरूचे—'राजन् ! अद्यापि,* **ओढरवंशीयाः** सन्ति उलं(रं)-*गलपुरे तेषां गृहे जीर्णदासी पूर्ववृत्तान्तान् जानाति । सा गत्वा पृष्टा सती सर्वं कथयिष्यति ।'* ततो राज्ञा निज-पुरुषैस्तत्सर्वं स्वरूपं ज्ञातं दास्या मुखेन जयताभवत्सत्कम्; ज्ञातं च जयसिंहदेवेन सह वैरकारणम् । चिन्तितं च निजमनसि 'अहो ! वैरकारणम्, दारुणः संसार आत्मन् !' ततो राजा संवेग-निर्वेदाभ्यामालिङ्गितः । सञ्जातश्री-जिनधर्मस्थैर्यः श्रीहेमसूरीणां 'कलिकालसर्वज्ञ'पदमदात् ।

*

§ ७०. कस्मिन्नप्यवसरेऽणहिल्लपुरे **श्रीकुमारपालनामा** नरेश्वरो वाह्यकेल्यां भ्रमन् सौन्दर्यवर्यनिर्जितसुरसुन्दरी-मपालेन्दुवदनां कामप्यधःलां बालिकामालोक्य तद्रूपापहृतहृदयः संनिहितप्रसादचित्तकं प्रति केयमित्यादिशंस्तेनेति विज्ञपयां चक्रे—'अपारश्रुतकूपारदृश्वतया सञ्जात 'कलिकालसर्वज्ञ' प्रसिद्धेर्द्वादशभिन्नतपःसमाराधनवशवन्दीकृताष्टमहा-सिद्धेर्निःशेषभूपालमौलिचुम्बितपादपीठस्य आयुष्मतः श्रीहेमचन्द्रमहर्षेराश्रमनिवासिनी अहिंसानाम्नी कनीयमिति निशम्य सद्यः कदाचित्तान् महर्षीन् हर्षभाक् सभक्तिकं सौधमाकार्य तद्वृत्तान्तं पृच्छंस्तैरूचे—'त्रिजगदेकसार्वभौमस्य श्रीमदर्हद्धर्मस्य अनुकम्पानाम पत्नी'; 'कथं धर्मस्य राज्यत्वम् ?' यतः—

४६५. **जिनमतनगरेऽस्मिन् मोहमल्लारिजेता, जयति जनितधामा धर्मनामा नरेन्द्रः ।**
**नियममपरिभूयं यस्य राज्यं प्रभूतं विलसति नयपूतं तत्त्वसत्साक्षमेतत् ॥**

अर्द्धासनोपविष्टाऽनुकम्पानाम महादेवी । तस्याः कुक्षिसरसिराजहंसी निःसीमसौन्दर्याऽहिंसाभिधा । यस्मिन् लग्ने सुताऽजनि, तल्लग्नं ग्रहबलं तत्पित्रा सर्वविदा एवमादिष्टम्—यदियमतीव पुण्यवती दुहिता । पुत्रजन्मोत्सवा-दप्यस्या जन्म श्लाघ्यम् । अतः क्रमेण वर्द्धमाना कन्या साऽनुरूपवराप्राप्त्या वृद्धकुमारी भूत्वाऽनुरूपेण केनापि मही-महीन्द्रेण सोपरोधमूढा, तं च स्वं च जनकं च परामुष्मतः कोटिं नेष्यति—इति तद्वाक्यपर्यन्ते तदर्थिनाऽनुकूल्य तस्याः सविधे सद्बुद्धिनाम्नी दूतीं नृपः प्राहिणोत् । सा तां सप्रश्रयं प्रणिपत्य 'स्वामिनी राजकन्ये ! धन्यतमासि, यत्त्वामष्टादशदेशसम्राड् समस्तसामन्तसीमन्तकर्मणि मयूखमालालङ्कृतचरणकमलयुगलश्रीचौलुक्यचक्रवर्ती त्वामु-द्वोढुमभिलषती'ति तद्वचसा मुखमोटनया विनयं नाटयन्ती सोपहासं सैवं प्राह—

४६६. **निष्किञ्चनेन दयितेन विवाहितेन, यद्योषितां सुखपदं न तदीश्वरेण ।**
**भागीरथीं वहति यां शिरसा गिरीशो, लक्ष्मीपतिः स्पृशति नैव पुनः कदापि ॥**

*अलं नरकान्तराज्यसाम्राज्यप्राप्तिप्रलोभनवार्तया ।*

४६७. **सत्यवाक्, परलक्ष्मीमुक्, सर्वभूताभयप्रदः । सदा स्वदारतुष्टश्च सन्तुष्टो मे पतिर्भवेत् ॥**

इति तस्या दुःश्रवं प्रतिश्रवमाकर्ण्य सा विफलवैदग्ध्यमानिनी स्वं पदमुपगता स्वामिनं सर्वथा निराशम-करोत् । तदनु तं नृपं तद्वियोगाग्निमग्नमाकलय्य श्रीहेमसूरिस्त्वमिति प्रतिबोधितवान्—'यः कन्याया इतरलोके दुष्करः सङ्करः स तवाप्युभयलोकहितस्तदनुकूलताहेतुश्च । अतस्त्वमपि निर्मोपय स्वनिस्सीमोन्नतये ।

४६८. सुकलत्रस्य सम्प्राप्तिः पुंसां भाग्यनिबन्धनम् ।
यः प्रीतिजननी जन्या सा सौभाग्योपरि मञ्जरी ॥

४६९. स्थाने निवासः सुकुलं कलत्रं, पुत्रं पवित्रं स्वजनानुरागम् ।
न्यायाच्च वित्तं सुहितं च चित्तं, निश्छद्म धर्मस्य सुखानि सप्त ॥

सा सर्वथा परिणेतुमुचितैव । यतः–

४७०. धन्यां सतीमुत्तमवंशजातां, लब्ध्वाधिकां याति न कः प्रतिष्ठाम् ।
क्षीरोदकन्यां गिरिराजपुत्रीं, गोपस्तथोग्रश्च यथाधिगम्य ॥

इति तेन महर्षिणा प्रतिबोध्य तानशेषानभिग्रहान् ग्राहयित्वा तस्याः प्रदानं चक्रे ।

*

§७१. अथ संवत् द्वादशाधिकषोडश १२१६ वर्षे मार्गशुदि द्वितीयायां लग्ने बलवति संवेगमतङ्गजारूढो रत्नत्रय-वस्त्रालङ्कृतो दक्षिणपाणिचन्द्रोरुदानकङ्कणः सम्यक्त्वानुचरेण समं श्रद्धासहोदरया क्रियमाणलवणावतारणो गुरुभक्ति-देशविरतिजानिणीभ्यां गीयमानधवलमङ्गलः पौषधवेश्मद्वारि अनुकम्पाकन्याजनन्या कृतप्रोंखणः श्रीमन्महादेवार्हतः साक्षि स नृपतिरहिंसायाः पाणिं जग्राह । तदा तारामेलनपर्व । अथ पट्त्रिंशत् सहस्रप्रमाणं त्रिपष्टिचरितं नवाङ्ग-वेदीमहोत्सवादानीय वेदिपदुद्या(?)स्थाने कपर्दप्रत्येकं विंशति वीतरागस्तवाः । तस्यैकस्यां वेदिकायां वंशान् तथैकै-कशमीकाष्ठे तत्पदे श्रीयोगशास्त्रप्रकाशाः १२ । तथा शमीकाष्ठपदे लक्षण-साहित्यतर्केतिहासप्रमुखशास्त्ररचनाभिर्मूलो-त्तरगुणाभ्यां च दृढीकृत्य वेदिकायां ज्ञानानलमुदीप्य तत्परितो मण्डलचतुष्टयदापनं 'चत्तारि मंगल'मित्यादि । द्वासप्ततिकालक्षप्रमाणरुदतीद्रव्यकरमोचनं तस्याः कन्यासुखमण्डने दत्तम् । तत्कालमेव तस्याः पट्टबन्धं कारयित्वा तत्पितु-र्योग्यानावसान् विहारान् १४४४ कारयामास । ततः सा हिंसा, स्वसपत्न्या अहिंसायाः परमोन्नतिं तद्विधामालोक्य भर्तुः पराभवनिवेदनाय पितुर्धातुः समीपे समुपागता । चिरदर्शनाद् अभिनववैरूप्याच्च अनुपलक्षिता तेनेत्यभिदधे–

४७१. का त्वं सुन्दरि ! मारिरस्मि तनया ते तात धातः प्रिया,
किं दीनेव पराभवेन स कुतः किं कथ्यतां कथ्यताम् ।
हेमाचार्यगिरा परार्द्धगुणभाक् हृद्वक्त्रहस्तोदरात्,
मामुत्तार्य कुमारपालनृपतिः क्षोणीतलादाकृषत् ॥

इति तद्भणितेरनन्तरं श्रीकुमारपालदेवस्य सत्यप्रतिज्ञस्यापि तस्य लिङ्गिनो गिरा त्वयि विरक्तचित्ततां विमृश्यातःपरं भवत्याः स कोऽपि वरः प्रवरः करिष्यते, यस्त्वय्येवैकातपत्रं कुरुते, धीरा भव । तां सम्बोध्य स्वसमीपे स्थापयांचक्रे ।

§७२. हिंसापिता पापनामा नरेन्द्रवरं विलोकयन् वाणारस्यां जयचन्द्रनृपं सप्तशतयोजनभूमिनाथं दृष्टवान् । अन्यराजकं दासमिव मन्यमानश्चत्वारिंशतानि गजेन्द्राः पष्टिर्लक्षाश्च वाजिनः द्वादशशतानि पित्तलमयानि निस्वानानि, गंगा-यमुनायष्टी विना क्वापि गन्तुं न शक्नोति तेन 'पंगुराजे' ति विरुदं वहति । तस्य गोमती दासी ६०००० अश्वेषु प्रक्षरान् निवेश्याभिषेणयन्ती, परचक्रं त्रासयति, राज्ञः श्रम एव कः । तत्र वाणारस्यां नृपाय ददौ । सा वार्त्ता श्रीकुमारपालेन श्रुता । मदीयपत्न्या गृहान्तरमकारि, ततो दूनमना निजप्रधानपुरुषा हेमकोटिद्वयं हयसहस्रद्वयं चित्रपट्टमेकं च समर्प्य प्रेषिताः । तैस्तत्र गतैर्बहुद्रव्यव्ययेन कैवर्तकाखेटकादिपट्टकान् कृत्वा तत्कर्म निवारितम् । कालेन राज्ञा जयचन्द्रेण ज्ञातम् । तत्पृष्ठ ग्राममहत्तराः । तैः प्रधानपुरुषाः कथिताः । ततो राज्ञाऽऽहूताः प्रधानपुरुषा जयचन्द्रसभायां गताः । श्रीकुमारपालप्रेषितं हेमकोटिद्वय-हयसहस्रद्वय-चित्र-

पटादिकं प्राभृतं समर्पितम् । राजा जयचन्द्रो यावत् पट्टमुद्घाट्य पश्यति, तावत्तत्र स्वमूर्तिं श्रीकुमारपालमूर्तिं जीवहिंसादिकपापफलं नारकिकच्छेदनभेदनादियातनाकुम्भीपाकवैतरणीतरणकूटशाल्मलिवृक्षोल्लम्बनासिपत्रवनप्रवेशनादिकं दृष्ट्वा चित्रस्थं सञ्जातमहापापभयः प्रकम्पमानशरीरः, पुनः पुरः, सम्यग्जीवरक्षादिपुण्यफलं स्वर्गविमानदिव्यदेहदेवाङ्गनादिव्याभरणगीतनृत्यवाद्यविविधक्रीडारूपसौभाग्यशृङ्गारभोगादिकं चित्रस्थं दृष्ट्वा विस्मयस्मेरमनाः प्रधानपुरुषाणां प्रसादमकरोत् । जीवरक्षार्थं श्रीकुमारपालेन प्रेषिता वयमिति स्वरूपे प्रोक्ते जयचन्द्रनृपः स्वदेशे सर्वत्र जीवरक्षामकारयत् । १८ रक्षनालप्रज्वालनं कृतम्, द्विगुणं च प्राभृतं श्रीकुमारपालाय प्राहिणोत् । पुनरपि मारिः पितापार्श्वमगात् । ततो म्लेच्छकुले गर्जनपुरे दत्ता ।

*

§ ७३ अथ वर्षासु कटकारम्भे नियमिते तद्वृत्तान्तं ज्ञात्वा प्राप्तपराभवसञ्जातामर्षो गर्जनपुरेशस्त्वमभिषेणयितुमागच्छतीति चरैः प्रोक्ते दूनो नृपः । श्रीपत्तनेऽपि साध्वसमभूत् । विज्ञप्तं तद् गुरूणां तैश्च स्तम्भितः स तत्रस्थः । षण्मासजीवदयार्पणे कृते मुक्तः । मारिः कुत्रापि स्थितिं न लेभे । श्रीगुरूणामुपदेशेनाज्ञाकारिषु नृपेष्वष्टादशदेशेषु चतुर्दशवत्सराणि सर्वप्राणिप्रियाममारिमकारयत् । स्मारैरपि मारिर्न कश्चित् कथयति ।

४७२ सौनिक-व्याध-कैवर्त्त-कल्यपालादिपट्टकान् ।
अपाटयत् कश्चिच्छक्त्या भक्त्या चार्यव्ययात् क्वचित् ॥

*

§ ७४ अथैकदाऽश्वपर्याणस्थसूक्ष्मजीवप्रमार्जनपरं राजानं दृष्ट्वा नृपाः परस्परं भ्रूसञ्ज्ञया स्मितमकार्षुः । तद्विज्ञाय विज्ञजनशिरोमणिर्लोहकटाहनयं पाणिना प्रस्फोट्य कुन्ताग्रेण लोहभृतगोणिमुत्पाट्य स्वभुजबलमदर्शयत् । तर्जिताश्च ते—'रे ! किमेभिर्वराकैः सूक्ष्मजन्तुभिरल्पसत्त्वैर्हतैरिति' । ततः कुमारगिरौ राजाज्ञयाऽष्टौ लक्षास्तुरङ्गमा गालितं जलं पिबन्ति । अमारिपटहः सर्वत्र पुरग्रामादिषु भ्राम्यति । राजपुरुषाश्चामारिं कारयन्ति ।

*

§ ७५ अथामारिं प्रवर्त्तयति राजनि आश्विनशुक्लपक्षोऽगात् । तत्र कण्टेश्वर्यादिदेवतानामर्चकैर्विज्ञप्तम्—'देव ! सप्तम्यां सप्तशतानि पशवः सप्तमहिषाश्च देवतानां पुरो दीयन्ते राज्ञा । एवमष्टम्यामष्टौ शतानि, नवम्यां नवशतानीति' । राजा तदाकर्ण्य श्रीगुरून् समायातान् विज्ञप्त तत्स्वरूपम् । गुरुवचनमादाय भाषितास्ते—'देव दास्यामो वहिका क्रमेण । रात्रौ देवीनां सद्मसु निक्षिप्ताः पशुमहिषाः । दत्तानि तालकानि । मुक्तास्तत्र रक्षकाः । प्रातः समायातो राजा । उद्घाटितानि तालकानि । मध्ये दृष्टाः पशवो रोमन्थायमानाः । राजा सर्वसमक्षमिदं जगाद—'भो अघोटिका इमे पशवो मयाऽमूभ्यो दत्ताः, परं न ग्रस्ताः । तस्मादमूभ्य एव मांसं रुचितम्, नामूभ्यः । तत्कथं जीवान् हन्मि' । ततस्ते सर्वेऽपि विलक्षा मौनमालम्ब्य स्थिताः । छागादिमूल्येन नैवेद्यानि कारितानि देवीनाम् । महाहिंसादिने मध्ये राजा नवम्यां कृतोपवासो निशि चन्द्रशालायां दयारसमयः शुभध्याने स्थितः, बहिरारक्षका मुक्ताः । निशीथसमये दिव्यनेपथ्यधारिणी स्त्री प्रत्यक्षा जगाद—'राजन्नहं तव कुलदेवी कण्टेश्वरी । ऐषमोवर्षे किमिति त्वयाऽस्मभ्यो देयं न दत्तम् ?' । राजोवाच 'दत्तं मया सर्वम्, परं भवतीभिर्न गृहीतम् । तदहं करुणामयः कथमशरणान् प्राणिनो निहन्मि' । ततः सा क्रुद्धा—'अहो वचसा मामयं विप्रतारयति' इति त्रिशूलेन राजानं शिरसि हत्वा गता । क्षणान्तरं राजा स्वशरीरे कुष्ठव्रणानि दृष्ट्वा विषण्णोऽभूत् । तदा सद्य उदयनमन्त्रिणमाहूय प्रोवाच—'मन्त्रिन् ! अद्य देवी प्रत्यक्षा पशून् याचते किं दीयते न वा ?' मन्त्री प्राह—'राजन् ! अहं किं वच्मि ? परमिति जाने येन केनोपायेन स्वामिरक्षा क्रियते' । यतः—

४७३ जेण कुलं आयत्तं तं पुरिसं आयरेण रक्खिज्जा । नहु तुम्बम्मि विणट्ठे अरया साहारया हुंति ॥

एतदाकर्ण्य राजा—'निःसत्त्वो वणिगसि, भक्तिवचांसि एतानि भाषसे । शृणु, आजलधिमेखला खला स्वाज्ञा

मया ग्राहिताः, सकलार्थिसार्थप्रार्थना सफलीकृता, प्रीणिता सप्तक्षेत्री पवित्रस्ववित्तेन, आराधितः श्रीधर्मः, तत्किं मम जीवितेन कार्यम्; केवलं रहः काष्ठानि देहि, येन प्रातर्मामीदृशं दृष्ट्वा लोको श्रीधर्मस्य निन्दां करिष्यति'। मन्त्री 'अहो! महत्कष्टम्। पारवश्यमूलं नियोगं धिगि'ति क्षणं विमृश्योवाच–'देव! पूर्वं श्रीगुरूणां स्वरूपं विज्ञाप्यते।' राज्ञोक्तमेवमस्तु। तदैव मन्त्री गतः श्रीगुरूणां पदान्ते। निवेदितं तत्स्वरूपम्। क्षणं स्मरणकरणीयं कृत्वा गुरुभिर्जलमभिमन्त्र्यार्पितम्। तदाच्छोटनमात्रेण राजा सविशेषशरीरशोभाभाग्भूत्। अत्यन्तश्रीगुरुभक्तिभावितश्च प्रातर्महामहोत्सवेन श्रीगुरुपादारविन्दं वन्दितुं यावद्याति, तावद्धर्मशालाप्रथमप्रवेशे स्त्रीकरुणस्वरं शुश्राव। ततस्तामेव कण्टेश्वरीं मन्त्रयन्त्रितां च पश्यति। तावता सोवाच–'राजन्! मोचापय मां सूरिप्रयुक्तमन्त्रबन्धनात्। तवाज्ञावधिदेशेषु जीवरक्षातलारकत्वं करिष्यामीति'। श्रीगुरुवचसा मोचिता। कवयः सर्वे स्वमतिभिः प्रोचुः–

४७४. श्रीवीरे परमेश्वरे भगवत्याख्याति धर्मं स्वयं,
प्रज्ञावत्यभयेऽपि मन्त्रिणि न यां कर्तुं क्षमः श्रेणिकः।
अक्लेशेन कुमारपालनृपतिस्तां जीवरक्षां व्यधात्,
यस्यासाद्य वचःसुधां स परमः श्रीहेमचन्द्रो गुरुः॥

४७५. पातु वो हेमगोपालः कम्बलं दण्डमुद्वहन्। षड्दर्शनपशुग्रामं चारयन् जैनगोचरे॥
४७६. नाभवद्भविता नैव हेमसूरिसमो गुरुः। श्रीमान् कुमारपालश्च जिनभक्तो महीपतिः॥
४७७. राजा लुठति पादाग्रे जिह्वाग्रे च सरस्वती। शश्वत् स श्रेयसे श्रीमान् हेमसूरिर्नवः शिवः॥

४७८. सप्तर्षयोऽपि गगने सततं चरन्तो मोक्तुं क्षमा नहि मृगीं मृगयोः सकाशात्।
जीयात् पुनश्चिरतरं प्रभुहेमसूरिरेकेन येन भुवि जीववधो निषिद्धः॥

४७९. प्राणित्राणे व्यसनिनां शान्ति-सुव्रत-नेमिनाम्।
हेमाचार्योऽत्र चातुर्ये तुर्यः किं नु स दुर्युगे॥

*

सर्वेषां कवीनां लक्षं लक्षं ददौ।

§ ७६. अथान्यदा भोजनं कुर्वतो राज्ञा घेवरभुक्तौ किंचिद्विचिन्त्य कृतसकलाहारपरिहारः पवित्रीभूयेति प्रभुं पप्रच्छ–'भगवन्! घेवराः किं भक्ष्या वाऽभक्ष्याः?' श्रीगुरुभिरुक्तम्–'राजन्! भक्ष्या अभक्ष्याश्चेति'। भणितं पुनः–'भगवन्! भक्ष्याश्चेदभक्ष्याः कथम्, अभक्ष्याश्चेद्भक्ष्याः कथम्?'। श्रीगुरुभिरभाणि–'राजन्! ये क्षत्रियादयः पूर्वं ज्ञातमांसास्वादास्तेषामभक्ष्याः, ये तु वणिग्ब्राह्मणादयोऽज्ञातमांसास्वादास्तेषां भक्ष्याः।' इत्याकर्ण्य प्रमुदितः। 'अहो! प्रभूणां मुक्त्वा 'कलिकालसर्वज्ञता' मानसिकपरिणामोऽपि येषां प्रत्यक्षः'। ततो राजा दन्तपातनसोद्यतः श्रीगुरुभिर्निषिद्धः। कृतघेवरभक्षणनियमः प्रायश्चित्तपदे द्वात्रिंशत् प्रासादानेकस्मिन् पीठबन्धेऽकारयत्। द्वात्रिंशत् प्रकाशान् प्रत्यहं गुणयति प्रत्यूषे।

*

§ ७७. अन्यदा, एकस्मिन् दिने कस्मिन् ग्रामे तैलिकेन रात्रौ यूका हता। कण्टेश्वर्या राज्ञो ज्ञापितः स दण्डितः। तद्द्रव्येण 'यूकावसतिः' कारिता। पुरा गृहीतेनाखुद्रव्येण 'उन्दिरवसति'श्च। यस्याः करेण पुरा करम्बो भुक्तस्तस्या देवश्रिया नाम्ना 'करम्बावसतिः'। अथ श्रीस्तंभतीर्थे सामान्ये आलिगवसहिकाप्रासादे यत्र दीक्षाक्षणः प्रभूणां बभूव, तत्र रत्नबिम्बालङ्कृतो निरुपमो जीर्णोद्धारः कारितः।

*

§ ७८. अन्यदा ब्रह्मकविः कृतकृत्रिमदेवरूपः केनाप्यनुपलक्ष्यमाणः करगृहीतलेखपत्रः सभायां समायातः। कृतप्रणामः पृष्टो राज्ञा–'भो! कुतः, कस्त्वं समायातः?' तेनोक्तम्–'देव! देवेन्द्रेण प्रेषितोऽस्मि, युष्मदन्तिके लेखसमर्पणाय' इत्युक्त्वा लेखं समर्पितवान्। सभायां लेखः प्रस्फोट्य वाचितः। यथा–

४८०. स्वस्ति श्रीमति पत्तने नृपगुरुं श्रीहेमचन्द्रं मुदा,
स्वःशक्रः प्रणिपत्य विज्ञपयति स्वामिंस्त्वया सत्कृतम् ।
चन्द्रस्याङ्कमृगे यमस्य महिषे यादस्तु यादःपते-
र्विष्णोर्मत्स्यवराहकच्छपकुले जीवाभयं तन्वता ॥
तस्य राजा लक्षं पारितोषिकमदात् ।

*

§ ७९. अन्यदा गुरुभिस्तृतीयव्रताधिकारे—

४८१. दुर्भिक्षोदयमन्नसङ्ग्रहपरः पत्युर्वधं बन्धकी,
ध्यायत्यर्थपतेर्भिषग् गदगणोत्पातं कलिं नारदः ।
दोषग्राहिजनस्तु पश्यति परच्छिद्रं छलं शाकिनी,
निष्पुत्रं म्रियमाणमाढ्यमवनीपाता हहा वाञ्छति ॥

एतन्निशम्य श्रीगुरुगिरा द्वासप्ततिलक्षमृतकद्रव्यपत्रं पाटितवान् । केनापि कविना प्रोक्तम्—

४८२. अपुत्राणां धनं गृह्णन् पुत्रो भवति पार्थिवः । त्वं तु सन्तोषतो मुञ्चन् सत्यं राजपितामहः ॥

अपरेण तु—

४८३. न यन्मुक्तं पूर्वैरघुनहुषनाभाकभरत-
प्रभृत्युर्वीनाथैः कृतयुगोत्पत्तिभिरपि ।
विमुञ्चन् कारुण्यात्तदपि रुदतीवित्तमधुना,
कुमारक्ष्मापाल ! त्वमसि महतां मस्तकमणिः ॥

—लक्ष्मनापि । अथ चतुर्थव्रते—

४८४. एका भार्या सदा यस्य त्रिधा शीलं घनागमे ।
दिनं प्रत्येकशो यस्य द्वात्रिंशत् स्तवस्तुतितः ॥

अथ परिग्रहप्रमाणम्—

४८५. जन्तून् हन्मि न वच्मि नानृतमहं स्तेयं न कुर्वे पर-
स्त्रीर्नो यामि तथा त्यजामि मदिरां मांसं मधोर्भक्षणम् ।
नर्के नाम्नि परिग्रहे मम पुनः स्वर्णस्य षट्कोटय-
स्तारस्याष्टतुलासतानि च महार्घाणां मणीनां दश ॥

४८६. कुम्भखारीसहस्रे द्वे प्रत्येकं स्नेहधान्ययोः । पञ्चलक्षाश्च वाहानां सहस्राण्युष्ट्रहस्तिनाम् ॥
४८७. अयुतानि गवामष्टौ पञ्चपञ्चाशतानि च । गृहापणसभाधानपात्राणामनसामपि ॥
४८८. एकादशशतानीभा रथाः पञ्चायुतप्रमाः । हयैकादशलक्षाश्च पत्तयोऽष्टादशप्रमाः ॥

सैन्यमेलापकप्रमाणम् । साधार्मिकवात्सल्ये शुटितधार्मिकस्य दीनारसहस्रदाने श्रेष्ठी आभडो नियुक्तः । वर्षे लेखके कृते एका कोटिर्मा । यावत्तां दापयति तावताऽऽभडेनोक्तम्—'देव ! द्विधा कोशः स्थावरो जङ्गमश्च । वयं जङ्गमकोशस्थानीयाः' इति जल्पन्निषिद्धः, सर्वं दत्तम् ।

*

§ ८०. एकदा कर्णमेरुप्रासादाग्रे श्रीगुरवो गताः । तदा वामराशिभरडकेनोक्तम्—

४८९. यूकालक्षशतावलीवलवलल्लोलोल्लसत्कम्बलो,
दन्तानां मलमण्डलीपरिचयाद् दुर्गन्धरुद्धाननः ।
नासावंशनिरोधनाद्‌गिणिगिणी पाठप्रतिष्ठास्थितिः,
सोऽयं हेमडसेवडः पिलपिलत्खल्लिः समागच्छति ॥

श्रीगुरुभिरुक्तम्—'अहो ! गालिरपि न शुद्धा । 'ददतु ददतु गालीर्गालिमन्तो भवन्तः० ।' तच्चरैः राज्ञा श्रुतम् । तस्य वृत्तिच्छेदः कृतः । प्रत्यहं शालायां समायाति । श्रीयोगशास्त्रं पठति । अन्यदा राजा तच्छ्रुत्वा प्राह—

४९०. आतङ्ककारणमकारणदारुणानाम्, वक्त्रेषु गालिगरलं निरगालि येषाम् ।
तेषां जटाधरफटाधरमण्डलानाम्, श्रीयोगशास्त्रवचनामृतमुज्जिहीते ॥

पुनः श्रीगुरुवचनात् प्रसादः ।

*

§८१. अन्यदा सुखसुप्तस्य भूपतेः कापि देवता । निशीथेऽजनि प्रत्यक्षा श्यामसर्वाङ्गमण्डना ॥ १
भूपपृष्टाऽवदत् सापि लूताधिष्ठातृदेवता । त्वदङ्गे प्रविविक्ष्यामि पूर्वशापात्तवान्वये ॥ २
गतायामथ तस्यां स चिन्तार्तोऽभूद्‌नृपः प्रगे । सूरिपृष्टोऽवदत् सर्वं तमूचे सूरिरप्यथ ॥ ३
भाविभावो भवत्येव नान्यथा सोऽमरैरपि । पूर्वं कामलदेव्या यत् शापितो मूलभूपतिः ॥ ४

परं पुण्यं कुरु । यतः—

४९१. दीपो हन्ति तमःस्तोमं रसो रोगभरं यथा । सुधाबिन्दुर्विषावेगं धर्मः पापहरस्तथा ॥

रात्रौ महाव्यथाऽभूत् । पृष्ठे राजिकाकणोपमः पिटः प्रादुरभूत् । प्रतीकारैरनुपशमने श्रीगुरवः समायाताः । राजानं दुःखार्तं दृष्ट्वा प्राहुः—

४९२. सृजति तावदशेषगुणाकरं पुरुषरत्नमलंकरणं भुवः ।
तदनु तत्क्षणभङ्गु करोति चेदहह ! कष्टमपण्डितता विधेः ॥

राज्ञः श्रीगुरुदर्शने क्षणं सुखमभूत् । सूरिः सचिवं प्रत्याह—मन्त्रिन् !
'अपायानामुपायाः स्युर्बहुरत्ना वसुन्धरा ।'

मन्त्री प्राह—भगवन् ! अनुसुवर्णं धातवः, अनुचन्दनं काष्ठानि, तथानुपूज्यात् कलाकोविदाः ।
यथा तमान्तको भानुः सुधा सर्वविषापहा । जगत्सञ्जीवनो मेघस्तथा राज्ञो गुरुर्भवान् ॥ ५

श्रीगुरुरभ्यधात्—'नात्र मन्त्रतन्त्रभैषज्यप्रभावप्रसरः । किन्तु बुद्धिप्रकारोऽस्ति । यदि राज्यमन्यस्य कस्यापि दीयते, तदा राज्ञः कुशलं स्यात्, परं नायं धर्मः श्रीजिनतत्त्वविदाम् । यतः—

४९३. सव्वो न हिंसियव्वो जह महिपालो तहा उदयपालो ।
न य अभयदाणवइणा जणोवमाणेण होयव्वं ॥

ततोऽस्माकमेव राज्यमस्तु । राजा तु कर्णौ पिधायाभ्यधात्—

४९४. को नाम कीलिकाहेतोः प्रासादोच्छेदमिच्छति ।
भस्मने भस्मसात् कुर्यात् को हि चन्दनकाननम् ॥

महाराज ! युक्तमेतत् । यदि मम शक्तिर्न भवति । परं—

४९५. शक्तौ हनूमान् यदवन्ययत् स्वं विष्णुर्दधौ यच्च शिवास्वरूपम् ।
सैरन्ध्रिकाकारधरश्च भीमस्तथाहमप्यत्र कृतौ समर्थः ॥

कष्टमपीदं न मम मनसि ।

४९६. या लोभाद् या परद्रोहाद् यः पापाद् यः परार्थतः ।
मैत्री लक्ष्मी व्ययः क्लेशः सा किं सा किं स किं स किम् ॥

राजा शनैः शनैर्व्यथया शून्यचित्ततामगात् । राजानं विलोक्य सर्वः कोऽपि विधुरोऽभूत् । श्रीगुरुः सर्वसम्मतेन स्वयमुपविष्टो राज्ये । तत्क्षणं राज्ञो व्यथा सूरिशरीरे संक्रान्ता । श्रीगुरुव्यथां ज्ञात्वा राजा मनसि दूनश्चिन्तयति—

४९७. स्वाङ्गदाहेऽपि कुर्वन्ति प्रकाशं दीपिकादशाः । लवणं दह्यते वह्नौ परलोकोपशान्तये ॥

श्रीगुरुरुवाच—'राजन् ! मा चिन्तां कुरु, न मे शक्तिमतोऽसुखम् । मूलाच्चेन्नोन्मूलयाम्येनां तदा मम वैश्यानां स्यात् । ततः—

पक्वं कूष्माण्डमानाय्य प्रविश्यान्तः स्वयं गुरुः । तत्र न्यवीविशच्छूतां तदेवाभूत् तदन्यथा ॥ ६
उत्पाट्यान्धप्रधौ क्षिप्तं कश्चिन्नोल्लङ्घते यथा । एवं स्वस्थमभूत् सर्वं सूरेः शक्तिरहो स्फुटा ॥ ७

*

§८२. अथान्यदा श्रीमहावीरचरित्रे वाच्यमाने श्रीगुरुमुखेन देवाधिदेवप्रतिमासम्बन्धं श्रुत्वा राज्ञा वीतभयं पत्तनं गत्वा महतोपक्रमेण देवतासान्निध्येन सा प्रतिमा पूजिता महोत्सवेनानीता । साऽधुना रामसैन्ये ऽस्तीति लोकोक्तिः ।

*

§८३. कदाचित् पृथिवीमानृणाय नृपतिना सुवर्णसिद्धये श्रीहेमाचार्याणामुपदेशात् तद्गुरवः श्रीदेवचन्द्राचार्याः श्रीसङ्घ-नृपतिविज्ञप्तिकाभ्यामाकारिताः । तीव्रव्रतपरायणा महत्सङ्घकार्यं विमृश्य विधिविहारेण पथि केनापि अनुपलक्ष्यमाना निजामेव पौषधशालामागताः । राजा तु प्रत्युद्गमनादिसामग्रीं कुर्वन् प्रभुज्ञापितस्तत्राययौ । अथ गुरोः पुरो नृपतिप्रमुखसमस्तश्रावकयुतैः प्रभुभिर्द्वादशावर्त्तवन्दनकं दत्त्वा तदुपदेशादनन्तरं गुरुभिः पृष्टे सङ्घकार्ये सभां विसर्ज्य जवनिकान्तरितौ श्रीहेमचन्द्र-नृपती तत्पादयोर्निपत्य सुवर्णसिद्धियाचनां चक्राते । 'मम बाल्ये विद्यमानस्य सतः ताम्रखण्डं काष्ठभारवाहकात् याचितवल्लीरसेनाभ्यक्तं युष्मदादेशाद् वह्निसंयोगात् सुवर्णीबभूव । तस्या वल्ल्या नामसङ्केतादि आदिश्यताम्'—इति श्रीहेमाचार्ये वदति कोपाटोपात् श्रीहेमचन्द्रं दूरतः प्रक्षिप्य—'न योग्योऽसीति, अग्रे मुद्गरसप्रायप्रदत्तविद्यया त्वमजीर्णभाक्, कथमिमां मोदकप्रायां तव मन्दाग्नेर्ददामि' इति तं निषेध्य, नृपं प्रति—'एतद्भाग्यं भवतां नास्ति, येन जगदानन्दकारिणी स्वर्णनिष्पत्तिविद्या सिध्यति । अपि च मारिनिवारण-जिनमण्डितमहीकरणादिपुण्यैः सिद्धे लोकद्वये किमधिकमभिलषसि ?' इत्यादिश्य तदैव विहारक्रमं कृतवन्तः ।

*

§८४. अथ श्रीकुमारपालदेवस्य भगिनी शाकंभरीशेन चाहुमानवंशेन राज्ञाऽऽनाकेन परिणीताऽस्ति । तयोर्मिथः सारिक्रीडां कुर्वतोरन्यदा राज्ञा सारिं गृहे मुञ्चतोक्तम्—'मारय मुण्डिकान्, पुनर्मारय मुण्डिकान् ।' एवं द्विजैः राजगुरुः श्वेताम्बरः मुण्डकः इति हास्यगर्भोक्तिः । तदाकर्ण्य राज्ञी कुपिता आह—'रे जगडक ! किं जिह्वामालोक्य नोच्यसे ? किं वक्ष्यसि, न पश्यसि माम्, न जानासि मम भ्रातरं राजराक्षसम् ? ।' क्रुद्धो राजा पादघातेन तां जघान । साऽप्याह—'यदि रे तव जिह्वामवटुमार्गेण नाकर्षयामि, तदा राजपुत्रीं मा मा मंस्थाः ।' इति वदन्त्येव सा ससैन्या निर्विलम्बं श्रीपत्तनमागत्य श्रीचौलुक्याय तं परिभवं स्वप्रतिज्ञां चाविज्ञपत् । राजाऽप्यमापत—'पश्य कौतुकमित्यमेव करिष्यामः ।' ततश्चाऽऽनाकस्तस्यां तत्र गतायां गूर्जरनृपं दुर्द्धरं विदन् क्षुभितः । कुलक्रमायात स्वसेवकं व्याघ्रराजं दीनारलक्षत्रयं दत्त्वा भरडकवेषधारिणं श्रीकुमारपालस्य मारणाय प्रैषीत् ।

एतत्स्वरूपं पूर्वमानाकप्रपञ्चपरिज्ञानाय भूपतिप्रेषितः प्रधानपुरुषः श्रीतिप्रीणितानाकदासीमुखेन ज्ञात्वा विज्ञप्त्या श्रीकुमारपालायाज्ञापयत्—'सावधानैः स्थेयं, मरटकविश्वासो न कार्यः'—इति। ततो राजाऽन्यदा लोकव्यवहारेण करणमेरुप्रासादे नवीनं मरटकं प्रधानज्ञापितचेष्टया दृश्यमानमेवोपलक्ष्य निजपुरुषैर्बध्वा व्याघ्रसञ्ज्ञं प्रकटीकृत्योरुबद्धां च क्षुरिकां प्राह—'रे वराक! जंगडकेन प्रेषितोऽसि?, सेवकस्य विचाराविचारो नास्ति हिताहितस्य। स्वाम्यादेशवशंवदस्त्वम्, मा भैषीर्मुक्तोऽसि, तमेव हनिष्यामि, य एवं द्रोहमकरोत्।' ततः समस्तस्वसैन्यपरिवृतः सपादलक्षदेशसीम्नि गतः। श्रीकुमारपालभट्टेनानाकनृपः प्रोक्तः—

४९८. अये! भेक च्छेको भव भवतु ते कूपकुहरं
शरण्यं दुर्मत्तः किमु रटसि वाचाट! कटुकम्।
पुरः सर्पो दर्पी विषमविषसूत्कारवदनो
ललज्जिह्वो धावत्यहह भवतो जिग्रसिषया॥

एतदाकर्ण्याऽऽनाकोऽपि वाजिलक्षत्रयेण पदातिलक्षदशकेन पञ्चाशता गजैः संमुखमचलत्। स्वदेशतः पञ्चक्रोश्या अर्वाक् मेलापकः। तृतीयदिने युद्धं भविष्यतीति निर्णये बहुद्रव्यप्रदानेन परावर्तितं रात्रौ चौलुक्यसैन्यम्। अर्थो हि परावर्त्तयति त्रिभुवनम्। यतः—

४९९. बध्नाति लोभ एवैको रङ्गाचार्येषु धुर्यताम्। आरङ्कशक्रं यन्नाट्यपात्राणि भुवनत्रयी॥

तृतीयदिने रणकरणसमये सामलमहामात्रेण कलहपंचानने गजे पुरः प्रेर्यमाणे तटस्थान् स्वसामन्तान् दुष्टाभिरैक्षीत्। कुमारपालः प्रोवाच—'श्यामल! किममी उदासीना इव दृश्यन्ते?'। तेनोक्तम्—'देव! अरिकृतार्थदानादिति'। 'तव का चेष्टा?' श्यामलोऽप्याललाप—'देवाहं कलहपंचाननो देवश्चैते त्रयः कदाचिदपि न परावर्तन्ते'। तर्हि संमुखीने दृश्यमाने रिपौ गजं प्रेरय। अत्रान्तरे चारणः प्राह—

५००. कुमारपाल मत चिंत करि चिंतिउ किंपि न होई।
जिणि तुह रज्जु समोपियउं चिंत करेसिई सोई॥

५०१. अन्यस्तु—अम्हे थोडा रिउ घणा इय कायर चिंतंति।
मुद्ध निहालउ गयणयलु के उज्जोउ करंति॥

५०२. अपरः कश्चित्—साहसि जुतउं हल वहइ दहवह तणइ कपालि।
खेडि म खूंटा टालि खूंटा विणु खीपइ नही॥

प्रयाणां लक्षं लक्षं ददौ। तेषां सुशब्दं लात्वा रणभूमौ द्वयोश्चिरयुद्धम्। आनाकसैन्ये चाहडनाम्ना सुभटेन सिंहनादे कृते कलहपंचानने निवर्त्तमाने कुमारपालः सुबुद्धिमान् स्वमुत्तरीयं पाटयित्वा गजकर्णौ पिधाय, रणभुवि विद्युदुत्क्षिप्तकरणं दत्त्वा आनाकगजस्कन्धमारूढः। करिशुण्डां छित्त्वा भूमौ पातयित्वा हृदि पदं दत्त्वा—'रे वाचाट! स्मरसि वचो मे भगिन्याः? पूरयामि तत्प्रतिज्ञाम्, छिनद्मि ते जिह्वा'मित्युवाच। ततः काष्ठपञ्जरे क्षिप्तः। दिनत्रयं स्वसैन्ये स्थापितः। जयातोद्यानि उद्घोषितानि। ततः करुणया पुनः शाकंभरीपतिः कृतः। उत्खातप्रतिरोपितव्रताचार्यो हि कुमारपालः। अवटुजिह्वाकर्षणं टोप्यां पश्चात् जिह्वाकरणं च। गम्भीरतया स्वभटा नोपालब्धाः। त्यक्तजीविताशास्ते सर्वेऽपि सेवां कुर्वन्ति।

मेडतकं सप्रवारं भग्नम्। पल्लीकोटस्थाने रुणाऽर्द्दकसुभग्नम्। पुरा मालवीयनृपैर्गूर्जरदेशे प्रासादाः पातिताः। पापभीरुणा श्रीकुमारपालेन तु रुषा मालवके तिलेक्षुपीडनपापाणयन्त्राणि भग्नानि। मन्त्रास्ते

पाणका अद्यापि स्थाने स्थाने दृश्यन्ते । ततो वचले परराष्ट्रमर्दनः श्रीचालुक्यनृपः । समायातः श्रीपत्तने । श्रीगुरूणां पादारविन्दान् पर्युपास्ते । सामायिक-पौषधादि करोति । स्वपरदेशेषु नवीनजीर्णोद्धारप्रासादकरणेषु महाप्रयत्नमकरोत् ।

*

§८५. अथ सौराष्ट्रदेशीयेन सउंराकेन राज्ञा प्रच्छन्नं गृहमध्ये प्रविश्य अजा व्यापादिता । कण्टेश्वर्या देव्या राज्ञे निवेदितम् । तं नृपं विग्रहीतुं श्रीमदुदयनमन्त्रिणं सेनानायकं कृत्वा समस्तकटकबन्धेन प्राहिणोद् राजा । स तु पादलिप्तपुरे श्रीवर्द्धमानं नत्वा श्रीयुगादिदेवं निनंसुः पुरः प्रयाणकाय समस्तमण्डलेश्वरानादिश्य स्वयं श्रीशत्रुञ्जयं जगाम । विशुद्धश्रद्धया स्नात्रपूजारात्रिकादिकं विधाय यावच्चैत्यवन्दनां विधत्ते, तावत् प्रदीपवृत्तिमादाय मूषकः काष्ठमयप्रासादबिले प्रविशन् देवाङ्गपूजकैस्त्याजितः । तदनु स मन्त्री समाधिभङ्गात् काष्ठमयप्रासादविनाशाद् देवाशातनां विमृश्य जीर्णोद्धारं चिकीर्षुः श्रीदेवपादानां पुरतो ब्रह्मैकभक्तभूशयनताम्बूलादित्यागादिकानभिग्रहान् जग्राह । यतः—

५०३. एकोऽपि नियमो येन गृहीतो गृहमेधिना । जिनाज्ञा पालिता तेन भवकूपारपारदा ॥

ततः कृतप्रयाणः स्कन्धावारमुपेत्य तेन प्रत्यर्थिना सम्मरेण सह सङ्गरे सञ्जायमाने स्वसैन्ये भग्ने स्वयं सङ्ग्रामं कुर्वाणो रिपुप्रहारजर्जरितशरीरो मन्त्री रणभूमौ पतितः । स करुणं क्रन्दन् केनापि बुद्धिमताऽङ्गरक्षकेण दुःखकारणं पृष्टः स्वमनसः शल्यचतुष्टयं प्राह—१. आम्बडस्य दण्डनायकत्वदापनं, २. श्रीशत्रुञ्जयप्रासादपाषाणमयनिर्मापणं, ३. श्रीरैवतनव्यपद्यानिर्मापणं, ४. निर्यामकगुरु विना मम मृत्युः—इति शल्यचतुष्कमस्ति ममेति श्रुत्वा स प्राह—'आद्यत्रयं तवाङ्गजो बाहडदेवः कारयिष्यति, आराधनार्थं साधुमानयामी'ति मन्त्रिणं विज्ञप्य स्वयमग्रे गत्वा साधुवेषधरं राजपुत्रमेकं लात्वा समायातः । तत्समक्षं दशधाऽऽराधनां विधाय, समाधिधीरचित्तः स्वीकृतानशनः श्रीमानुदयनः परलोकमसाधयत् । साधुवेषधरोऽपि नेमिदृष्टौ अनशनपरो मृत्वा स्वर्गं गतः ।

ततोऽङ्गरक्षकेणागत्योदयनस्वरूपे प्रोक्ते तज्ज्येष्ठपुत्रो बाहडोऽभिग्रहचतुष्टयं जग्राह निजपितुः । ततो बाहडः स्वभ्रातुराम्बडस्य दण्डनायकत्वमदापयत् । स्वयं राजादेशेन पैतृकवैरेण च ससैन्यः पुनः सुराष्ट्रायां गत्वा वैरिणं समसरं (समरनृपं ?) रणाङ्गणे निर्जित्य श्रीपत्तने श्रीकुमारपालनरेश्वराय गजाश्वभाण्डागारसहितं तन्मस्तकं समर्पयामास । तदनु राज्ञा तन्मस्तकं वंशे बद्ध्वा सर्वत्र देशमध्ये भ्रामितं घोषितं च—'यः प्रच्छन्नं जीववधं करिष्यति तस्य शिरश्छेदो भविष्यति' ।

ततो राजाज्ञामादाय श्रीरैवतके त्रिषष्टिलक्षद्रव्यव्ययेन नवीनां सुगमां पद्यामकारयत्, अम्बिकाप्रक्षिप्तमार्गेण । महतोपक्रमेण वर्षद्वयेन श्रीशत्रुञ्जयप्रासादोद्धारे निष्पन्ने वर्द्धापनिकापुरुषस्य द्वात्रिंशत्स्वर्णजिह्वा दत्ताः । यतः—

५०४. भवन्ति भूरिभिर्भाग्यैर्धर्मकर्ममनोरथाः । फलन्ति यत्पुनस्तेऽपि तत् सुवर्णस्य सौरभम् ॥

विद्युत्पाताद्विदीर्णे पुनः कथकपुरुषस्य द्विगुणा वर्द्धापनिका । अस्मासु जीवत्सु चेद्विदीर्णस्तदा भव्यं जातम्, पुनरपि द्वितीयमुद्धारं करिष्याम इति ।

५०५. प्रारभ्यते न खलु विघ्नभयेन नीचैः प्रारभ्य विघ्नभयतो विरमन्ति मध्याः ।
विघ्नैः सहस्रगुणितैः प्रतिहन्यमानाः प्रारब्धमुत्तमगुणा न परित्यजन्ति ॥

एवं विमृश्य भूपमापृच्छ्य महं कपर्दिने श्रीकरणमुद्रां नियोज्य तुरंगमाणां चतुर्भिः सहस्रैः श्रीशत्रुञ्जयं प्राप । तत्र बाहडपुरनगरं न्यास्थत् । सभ्रमतीयुते प्रासादे पवनः प्रविष्टो न निर्यातीति, स्फुटनहेतुं शिल्पिभिर्निर्णीय

भ्रमतीहीनेषु प्रासादेषु निरन्वयताकारणं ज्ञात्वा मदन्वयाभावे धर्मसन्तानमेवास्तु, पूर्वोद्धारकारिणां श्रीभरतादीनां पंक्तौ नामास्तु; यतः—

त्वरितं किंकर्त्तव्यं विदुषा संसारसन्ततिच्छेदः।

इति दीर्घदर्शिन्या बुद्ध्या विमृश्य भ्रमतीभित्तौ अन्तरालं शिलाभिर्निचितं विधाय वर्षत्रयेण निष्पन्ने प्रासादे कलश-दण्डप्रतिष्ठायां श्रीपत्तनसंघं निमन्त्र्यानीय महता महेन संवत् १२११ वर्षे ध्वजाधिरोपं मन्त्री कारयामास। शैलमयबिम्बस्य मम्माणीसत्कपरिकरमानीय निवेशितवान्। श्रीबांहडपुरे नृपतिपितुर्नाम्ना त्रिभुवनपालविहारे श्रीपार्श्वनाथं स्थापितवान्। तीर्थपूजाकृते चतुर्विंशत्यारामान्, नगरपरितो वप्रम्, देवलोकस्य आवासमुख्यं सर्वं कारयामास। अस्य तीर्थोद्धारस्य व्यये द्विकोटी सप्तनवतिलक्षयुता व्ययिता वारद्वयं मेलयित्वा।

पाठान्तरे—लक्षसप्तकयुता कोटी व्ययिता यत्र मन्दिरे। स श्रीवाग्भटदेवोऽत्र वर्ण्यते विबुधैः कथम्॥

इति तीर्थोद्धारप्रबन्धः।

*

§८६. अथो विश्वविश्वैकसुभटेन आंबडेन स्वपितुः पुण्यार्थं शकुनिकाविहारस्य भृगुकच्छे जीर्णोद्धारे कार्यमाणे रात्रौ नर्मदादेवी मिथ्यादृष्टिर्दिननिर्मितं पातयति, सर्वः कोऽपि तत्र बिभेति। अन्यदा आंबडः स्वं बलिं प्रकल्प्य तत्र रात्रौ स्थितः। समायाता देवी। तत्साहसेन तुष्टा सती प्रासादकरणे साहाय्यमकरोत्। ततः संपूर्णे निष्पन्ने प्रासादे कलश-ध्वजप्रतिष्ठासमये श्रीहेमसूरिः श्रीकुमारपालः सपरिकरः श्रीपत्तनादिबहुग्रामनगरश्रीसंघः समेयरुः। अशन-वसन-भूषणादिदानैः श्रीसंघं सत्कृत्य, ध्वजाधिरोपाय सम्बरन्, अर्थिभिः स्वं मन्दिरं मुषितं कारयित्वा, सुमुहूर्ते कलशरोपण-ध्वजारोहणादि कृत्वा, हर्षोत्कर्षात्तत्र लास्यं विधाय, आरात्रिकं गृह्णन्, राज्ञा कृतमङ्गलतिलकः स्वयं राज्ञा पुनः पुनः प्रेर्यमाणः, द्वासप्ततिसामन्तैश्चामरपुष्पवर्षादिभिः कृतमहोत्सवः, प्रदत्तकङ्कण-कुण्डलहारगजाश्वादिमहादानः, बाहुभ्यां धृत्वा बलात्कारेण नृपेणावतार्यमाणारात्रिकमङ्गलप्रदीपः श्रीसुव्रतस्वामिनः श्रीगुरोश्चरणौ प्रणम्य साधर्मिकवन्दनां कृत्वा, नृपतिं सत्वरारात्रिकहेतुं पप्रच्छ। राजा प्राह—'मन्त्रिन्! यथा घृतकारो घृतरसातिरेकेण शिरःप्रभृतीन् पदार्थान् पणीकुरुते, तथा भवानपि सर्वं दत्त्वा मा कस्मैचिद्दानातिरेकाच्छि-रोऽपि पणीकरोतु, तदमूल्यं मया सर्वस्वदानेऽपि न छुट्यते—' इति एतदाकर्ण्य सर्वेऽपि चमत्कृताः प्रमुदिताश्च। केनापि पठितं कविना—

५०६. किं कृतेन न यत्र त्वं यत्र त्वं किमसौ कलिः।
कलौ चेद्भवतो जन्म कलिरस्तु कृते न किम्॥

लक्षदानमत्र। ततः श्रीसंघलोकाः स्वं स्वं स्थानं जग्मुर्यथोचितमांबडमन्त्रिणा सत्कृताः। कृतांबडप्रशंसौ श्रीगुरु-क्ष्मापती यथागतं जग्मतुः।

§८७. अथ श्रीपत्तने समागतानां प्रभूणां श्रीमदांबडसाकस्मादेवीदोषात् पर्यन्तदशां गतस्य विज्ञप्तिकाऽऽययौ। तां च वाचयित्वा तत्कालमेव 'तस्य महात्मनः प्रासादशिखरे नृत्यतो मिथ्यादृशां दोषः सञ्जातः'—इत्यवधार्य प्रदोष-समये यशश्चन्द्रतपोधनेन समं विद्याबलाद् गगनाङ्गणेन भृगुपुरपरिसरे समागत्य सैन्धवादेवीमनुनेतुं कृतकायो-त्सर्गास्तया जिह्वाकर्षणादवगणिताः श्रीहेमसूरयः। उदूखले शालितन्दुलान् प्रक्षिप्य यशश्चन्द्रेण प्रदीयमाने मुशलप्रहारे प्राक् प्रासादप्रकम्पोऽभूत्। द्वितीयप्रहारे देवीमूर्तिश्चकम्पे। तृतीयप्रहारे स्वस्थानादुत्प्लुत्य देवीमूर्तिः 'मां रक्ष रक्षे'ति जल्पन्ती श्रीगुरुचरणयोः पपात। इत्थमनवद्यविद्यावदान्मिथ्यादृग्देवीदोषं निगृह्य श्रीजिनशासन-प्रभावनां कृत्वा श्रीसुव्रतजिनं नत्वा श्रीआंबडसोल्लापस्थाने वावे देवीमापृच्छ्य यथापथमगुः।

श्रीउदयनचैत्ये कर्णावत्यां, श्रीशकुनिकाविहारे, सत्रो धर्मगृहे, कोंकणनृपतेः कनकमयं कलशत्रयं सप्तनये न्यास्यदांबडमन्त्री राजपितामहः।

§८८. अथ कस्मिन्नप्यवसरे सपादलक्षं प्रति सैन्यं सज्जीकृत्य श्रीबाहडांबडानुजन्मा चाहडनामा मन्त्री दानशौण्डतया दूषितोऽपि भृशमनुशिष्य भूपतिना सेनापतिश्चक्रे । तेन द्वित्रिप्रयाणानन्तरमस्तोकमर्थिलोकं मिलितमालोक्य कोशाध्यक्षाद् द्रव्यलक्षत्रये याचिते सति नृपादेशात् तस्मिन्नददाने तं कशाप्रहारेणाहत्य कटकान्निरवासयत् । स्वयं यदृच्छया दानैः प्रीणितार्थिलोकः, चतुर्दशशतीसंख्यासु करभीष्वारोपितैर्द्विगुणैः सुभटैः समं सञ्चरन्, शीघ्रं स्तोकप्रयाणैः रात्रौ मार्गितादत्तैकप्रच्छादवस्त्रकृते बंबेरानगरप्राकारमवेष्टयत् । तस्मिन्नगरे तस्यां निशि सप्तशतीकन्यानां विवाहः प्रारब्धोऽस्ति—इति नगरलोकादधिगम्य तद्विवाहार्थं तस्यां निशि स्थित्वा प्रातः प्राकारपरावर्तमकार्षीत् । तत्र गृहीताः सुवर्णकोट्यः सप्त, एकादशसहस्राणि वडवानाम्, प्राकारं घरट्टैश्चूर्णीचकार इति । संपत्तिगर्भितां विज्ञप्तिकां वेगवत्तरैर्नरैर्नृपं प्राहिणोत् । स्वयं तत्र देशे कुमारनृपतेराज्ञां दापयित्वाऽधिकारिणो नियोज्य व्याघुटितः । सप्तशतीं कलावतां तन्तुवायानामादाय श्रीपत्तनं प्रविश्य, राजसभामधिगम्य, नृपं प्रणनाम । श्रीकुमारपालस्तमावर्ज्य, तदुचितालापावसरे तद्गुणरञ्जितोऽप्येवमवादीत्—'तव स्थूललक्षतैव महद्दूषणं [रक्षामन्त्रः], नो वा चक्षुर्दोषेणोर्द्ध्व एव विदीर्यसे । यद् व्ययं भवान् कुरुते तादृक्कर्तुमहमपि न प्रभूष्णुः'—इत्यादि श्रुत्वा चाहडो नृपं प्रत्यवोचत्—'तथ्यमेतद् यथादिष्टं देवेन । यतः, पुनः पितुः कोशबलेन व्ययं करोति, पिता तु कस्य बलेन करोति । तेन मयैव साधीयान् द्रव्यव्ययः क्रियते'—इति वदन्, प्रमुदितेन राज्ञा सत्कृतः । संसदनर्घ्यतां लभमानो 'राजघरट्ट'बिरुदं लब्ध्वा नृपतिविसृष्टः स्वं पदं प्रपेदे । सप्तशती तन्तुवाया[नां] छत्राय-स्थानं काराप्य पवित्रीकृता ।

तस्य भ्राता स्वकीयौदार्यावर्जितसमस्तराजवर्गः सोल्लाकः 'सामन्तमण्डलीसत्रागार'मिति बिरुदं बभार ।

*

§८९. अथान्यदा राजा द्वासप्ततिसामन्तैः सहितः श्रीगुरूणां पार्श्वे धर्मदेशनामशृणोत् ।

५०७. भावेह अणिचत्तं जुव्वणधणसयणअत्थदाराणं ।
देहस्स जीवियस्स य इक्कंपि न पिच्छहो निच्चं ॥

इत्यादि श्रुत्वा राजा संसारासारतां विभाव्य भवभावविमुखपरिणामः संवेगरसतरङ्गितान्तःकरणः श्रीगुरून् प्रणम्य पप्रच्छ—'भगवन् ! अद्य का तिथिः ?' इति । श्रीगुरवः सहसाऽमावास्यादिने पूर्णिमेत्याहुः । अत्र वामराशिर्लब्धावकाशो मिथ्यादृग् पाशमित्रोऽप्यान्तरशत्रुराह—'अहो ! कलिकालसर्वज्ञाः श्रीहेमसूरिश्चेदद्य पूर्णिमां कथयन्ति तदा लोकानां भाग्येन पूर्णिमैव भविष्यति'—इत्युपहासगर्भं वचः श्रुत्वा श्रीगुरवः प्राहुः—'सत्यमेतत् भवद्वचः' । तेनोक्तम्—'कोऽत्र प्रत्ययः ?' । श्रीगुरुभिरुक्तम्—'अहो केयं भवतश्चातुरी चन्द्रोदय एव प्रत्ययः ।' इति श्रुत्वा सर्वेऽपि विस्मयस्मेराः परस्परमाहुः—'किमित्थमपि भविष्यति ?' । ततो राजा विस्मयगतस्सन् द्वासप्ततिसामन्तादिवृतो राजसभामागत्य क्व चन्द्रोदयो भविष्यतीति परिज्ञानाय घटीयोजनगामिनीकरभ्यारूढाप्तिजपुरुषान् पूर्वस्यां दिशि प्राहिणोत् । ततः श्रीहेमसूरिः पूर्वप्रदत्तवरसिद्धचक्रदेवप्रयोगेन पूर्णिमावत् पूर्वस्यां सन्ध्यासमयं चन्द्रोदयं कृत्वा सकलां रात्रिं ज्योत्स्नामयीं विधाय चतुरो यामान् गगनतलमवगाह्य सर्वलोकसमक्षं प्रत्यूषे पश्चिमायां गतोऽस्तमगात् । प्रभाते तेऽपि प्रेषिताः पुरुषाः समागत्य तथैव प्रोचुः । सर्वेषां महान् विस्मयोऽभूद्—अहो ! श्रीगुरूणां काऽपि महती शक्तिः, अहो ! जैनानां कोऽपि महामहिमा लोकोत्तरः—इति जनोक्तिरभूत् ।

*

§९०. अथ राजा तेषां विप्रादीनां तदेव छलवचनं स्मरन् श्रीगुरूणां पुरः प्रश्नमकरोत्—'भगवन् ! सत्स्वपि बहुदर्शनेषु ब्राह्मणानां कस्माज्जिनधर्मे महान् द्वेषः ?' । तत्र श्रीगुरुः प्राह—'राजन् ! पुरा प्रथमजिनो युगादौ विहरन् विनीतासन्ने पुरिमतालपुरे समवसृतः । भरतश्चक्री श्रीजिनस्याष्टानवतिभ्रातृसाधूनां चागमनं श्रुत्वा भक्तार्थं खाद्यस्वाद्यादिशकटानि भृत्वा तत्र गतः । प्रभुं प्रणम्य धर्मदेशनां श्रुत्वा भक्तार्थं साधूनां निमन्त्रणामकरोत् ।

श्रीभगवान् प्राह—'राजन्! आधाकर्मिकाभ्याहृत-राजपिण्डादिदोषदूषितमिदं भक्तादि साधूनामकल्प्य'मिति श्रुत्वा दूनं श्रीभरतं ज्ञात्वा शक्रः प्राह—'मा विषादं कुरु, सर्वज्ञशासने सप्तक्षेत्राणि सन्ति—श्रीजिनभुवन-जिनबिम्ब-जिनागम-चतुर्विध-संघ-रूपाणि। तत्र ये साधर्मिका गृहारम्भपराङ्मुखाः संयमपरिणामभाजः संवेगवैराग्ययुक्तेषां वात्सल्यं कुरु'—इति सुरेन्द्रवचः श्रुत्वा राजा भरतः पूर्वानीतवस्तुभिः साधर्मिकवात्सल्यमकरोत्। तेषां गृहारम्भादिकं निवार्य तृप्तिमकार्षीत्। गृहस्थाचारविचारं चतुरध्यायनिबद्धं श्रावकप्रज्ञप्तिग्रन्थमर्थतो जिनप्रणीतं ते पठन्ति 'माहन माहन' इति परेषां कथयन्ति, ते माहना इति लोके प्रसिद्धिमगुः। कालेन तेषां वृद्धिरभूत्। ततः षष्ठे षष्ठे मास्याचारग्रन्थपठनादिकां परीक्षां कृत्वा—'अयं ज्ञान-दर्शन-चारित्राचारशुद्धः' इति काकिण्या रत्नेन कण्ठे रेखात्रयं कृतम्। ततः कालेन परीक्षापूर्वं कनकसूत्रत्रयं क्रमेण रौप्यं जातम्। ततः कालेन नवम-दशमजिनयोरन्तरे सकलसाधुव्युच्छेदे सति सर्वेषां लोकानामपरधर्मप्रकाशकाभावादेते गुरवः सञ्जाताः। क्रमेणाब्रह्मचारिणः कण्ठे सूत्रत्रयधारिणश्चाभूवन्। ततः क्रमेणोत्पन्नकेवलज्ञाने दशमजिने धर्मं प्रकाशयति, गृहारम्भप्रवृत्तोऽब्रह्मचारिगुरुर्न भवति, इत्युक्ते तेषां जिनधर्मे च महान् द्वेषोऽभूत्। लोकानामपि मूढमतीनां द्वेषमुत्पादयन्ति। ततः कालेन मिथ्यात्वं गताः। यदुक्तम्—

५०८. समोसरण भत्तउग्गह अंगुलिझय सक्कसावगा अहिआ।
जे यावढइ कागिणि लंछणअणुमज्जणा अट्ठ॥

५०९. अस्सावगपडिसेहो छट्ठे छट्ठे य मासि अणुओगो।
कालेण य मिच्छत्तं जिणंतरे साहुवुच्छेओ॥

इति द्वेषकारणं ब्राह्मणानां राजा श्रुत्वाऽचिन्तयद्—अहो! चन्द्रमण्डलादग्निः सुधाकुण्डाद्विषं प्रादुरभूत्। लोकानामभाग्योदयेन श्रीजिनधर्मादपि मिथ्यात्वमभूदिति। श्रीगुरवः प्राहुः—'राजन्नेते तु दर्शनान्तरं प्रतिपन्नाः सन्ति, कालेन केऽपि निह्नवाः, केऽपि निह्नवाभासाः श्रीजिनवचनान्ययथावादिनः, स्वमतिप्रकल्पितमतपक्षपातिनः, साधुवेषधारिणोऽपि साध्वाभासाः, प्रमादशीलत्वेनालम्बनपराः, परलोकनिरपेक्षा अनेकधा मतभेदाननकार्षुः। एवं राजन्! स्वमतेऽप्यनेकमतभेदा अभिमानाज्ञानपरवशैः प्रकल्पिताः सन्ति।

*

§९१. अन्यदा कोऽपि मत्सरी श्रीहेमसूरितेजोऽसहिष्णुरेकान्ते राजानमिदमवादीत्—'देव! प्रायः प्राकृतमेते पठन्ति, सिद्धान्तोऽप्येतेषां प्राकृतमयः। तत् प्रभातेऽश्रोतव्यमिदम्। संस्कृतं स्वर्गिणां भाषा सैव महतां प्रत्यूषे श्रोतव्या श्रेयस्करी चेति। किमर्थं प्रथमं तच्छ्रवणं विधीयते'। एतदाकर्ण्य राजाऽविज्ञातभाषाभेदतत्त्वः, किञ्चित्प्राकृतेऽकृतादरस्तत्स्वरूपं श्रीगुरूणामकथयत्। श्रीगुरवः प्राहुः—'अनुपासितसद्गुरुकुलस्य अविज्ञातवाङ्मयतत्त्वस्य कस्यापीदं वचः। राजन्! अनेकधा भाषाभेदवैचित्र्येऽपि, परं युगादौ प्रथमपुरुषेण ज्ञातत्रैलोक्यस्वरूपेण प्रथमं चतुर्दशस्वरा ऽष्टत्रिंशद्व्यञ्जनरूपा (?) द्विपञ्चाशदक्षरप्रमाणा मातृकैवोपदिष्टा। सा च प्राकृतस्वरूपा सर्वप्रकृतिलोकानामुपकारिणीति। ततो याश्च येऽष्टत्रिंशद्वर्णास्तैः संस्कारे कृते संस्कृतं जातम्। ततश्चानेकभाषाभेदा अभूवन्। तेन सकलशास्त्रमूलं मातृकारूपं प्राकृतमेव। प्रथमं युगादौ लोकोपकाराय प्रथमं प्राकृतमुपदिष्टं सर्वज्ञैरिति। सर्वाक्षरसन्निपातलब्धीनां श्रीद्वादशाङ्गीनिर्माणसूत्रधाराणां श्रीगणधराणां सिद्धान्तस्य प्राकृतकरणे कारणमिदम्—

५१०. बालस्त्रीमूढमूर्खाणां नृणां चारित्रकांक्षिणाम्।
अनुग्रहार्थं तत्त्वज्ञैः सिद्धान्तः प्राकृतः कृतः॥

राजन्! भवतु भाषा याऽपि साऽपि परं परमार्थ एव विलोक्यते। यत्पठन्ति लोकाः।—

५११. अत्थनिवेसा तच्चिय सद्दा तच्चेव परिणमंता वि।
उत्तिविसेसो कव्वं भासा जा होउ सा होउ॥

परं कस्यापि ज्ञानलवदुर्विदग्धस्य खण्डखण्डपाण्डित्यतुण्डकण्डूकरालितस्येयं प्राकृतनिन्दा । यदुक्तम्—

५१२. सो होइ सुहावेई उवमुंजंतो लवो वि लच्छीए ।
एसा सरस्सई पुण असमग्गा कं न विनडेइ ॥

इति श्रुत्वा राजादयः सर्वेऽपि प्राकृतप्रशंसां कुर्वन्तो विशिष्य तदर्थश्रवणप्रवणा बभूवुः ।

एवं श्रीहेमसूरिभिरनेके कुतीर्थिनः प्रवादाः सज्जनसभायां निरुत्तरीकृताः । श्रीसर्वज्ञशासनसैकातपत्रं साम्राज्यं कारितम् । राजप्रतिबोधश्च कृतः ।

*

§९२. अथान्यदा राजा श्रीजिनशासनप्रभावनां कर्तुकामः संघाधिपतिमनोरथमकरोत् । प्रथमं श्रीतीर्थमहिमां श्रीगुरवः प्राहुः—'राजन् ! त्रिभुवनेऽपि श्रीजिनमयानि तीर्थानि सन्ति । यदुक्तं श्रीभद्रबाहुस्वामिना चतुर्दशपूर्वधरेण श्रीआचाराङ्गनिर्युक्तौ—

५१३. जं साभिसेयनिक्खमणचरणनाणुप्पया य निव्वाणे ।
दियलोयभवणमंदरनंदीसरभोमनगरेसु ॥

५१४. अट्ठावयमुज्जिंते गयग्गपए य धम्मचक्के य ।
पासरहावत्तनगं चमरुप्पायं च वंदामि ॥

परं राजन् ! संप्रतिकाले प्रत्यासन्नं महाप्रभावं च श्रीशत्रुञ्जयतीर्थम् । यदुक्तं श्रीअतिमुक्तमुनिना नारदस्य पुरः—

५१५. जं लहइ अन्नतित्थे उग्गेण तवेण बंभचेरेण ।
तं लहइ तित्थपुन्नं सित्तुञ्जगिरिम्मि निवसंतो ॥

५१६. केवलनाणुप्पत्ती निव्वाणं आसि जत्थ साहूणं ।
पुंडरियं वंदित्ता सव्वे ते वंदिया तित्था ॥

५१७. अट्ठावय-संमेए पावा चंपा य उज्जिलनगे य ।
वंदित्ता पुन्नफलं सयगुणियं तं पि पुंडरिए ॥

५१८. पूआकरणे पुन्नं एगगुणं सयगुणं च पडिमाए ।
जिणभवणेण सहस्सं णंतगुणं पालणे होइ ॥

५१९. नवि तं सुवन्नभूमी भूसणदाणेण अन्नतित्थेसु ।
जं पावइ पुन्नफलं पूआन्हवणेण सित्तुञ्जे ॥

५२०. जं नाम किंचि तित्थं सग्गे पायालि तिरियलोगंमि ।
तं सव्वमेव दिट्ठं पुंडरिए वंदीए संते ॥

श्रीविद्याप्राभृते तु श्रीशत्रुञ्जयस्यैकविंशतिनामानि प्रोक्तानि । विमलगिरिः १. मुक्तिनिलयः २. श्रीशत्रुञ्जयः ३. सिद्धिक्षेत्रम् ४. पुण्डरीकः ५. सिद्धशेखरः ६. सिद्धपर्वतः ७. सिद्धराजः ८. बाहुबलिः ९. मरुदेवः १०. भगीरथः ११. सहस्रपत्रः १२. शतपत्रः १३. अष्टोत्तरशतकूटः १४. नगाधिराजः १५. सहस्रकमलः १६. ढंकः १७. कपर्दिनिवासः १८. लौहित्य १९. तालध्वजः २०. कदंब २१. इति देव-मनुष्यकृतानि नामानि । श्रीभद्रबाहुस्वामिना प्रणीते, श्रीवज्रस्वामिनोद्धृते, ततः श्रीपादलिप्ताचार्येण संक्षिप्तीकृते श्रीशत्रुञ्जयकल्पेऽप्युक्तम्—योऽवसर्पिण्यां पट्सु अरकेषु अशीति सप्तति षष्टि पञ्चाशत्-द्वादशयोजन-सप्तकरप्रमोऽभूत् । उत्सर्पिण्यां पुनरुपचीयमानः । यस्मिन्नसंख्याता ऋषभसेनाद्यास्तीर्थंकराः समवसृताः । श्रीपद्मनाभमुख्यास्तीर्थंकराः समेष्यन्ति । श्रीनेमिवर्जास्त्रयोविंशति

ऋषभाद्याः समवसृताः। महाविदेहनिवासिनोऽपि सम्यग्दृष्टयो लोका मानसिकभावेन नित्यं स्मरणं कुर्वन्तीति। प्रथमं श्रीऋषभकेवलोदयाद् भरतेन प्रमाणोपेतं रत्नमयं हैमं रूप्यं च विम्बत्रयं कारितम्। द्वाविंशतिदेवकुलिकाकलितं हैमचैत्यं च। ततोऽसंख्या उद्धारा जाताः, प्रतिमाश्च असंख्याताः, कोटाकोट्यश्च सिद्धाः। पुण्डरीकगणधरः पञ्च-कोटिभिः सह मुक्तिं गतः। द्रविड-वालिखिल्लादयो दशकोटिभिः। नमि-विनमी विद्याधरौ कोटिद्वयेन। श्रीऋषभ-सन्ताने भरतेश्वरराज्ये आदित्ययशा महायशा अतिबलः बलभद्रः बलवीर्यः कार्त्तवीर्यः जलवीर्यः दंडवीर्यस्त्रिखण्ड-भोक्तारः प्रथमसंघाधिपतिश्रीभरतेश्वरवत् प्राप्तसंघाधिपत्या आदर्शभवनप्राप्तकेवलज्ञाना बहुतरेक्ष्वाकुराजराजकुमार-परिवृताः श्रीशत्रुञ्जये सिद्धाः। अन्येऽपीक्ष्वाकुवंशराजान आदित्ययशाद्याः सगरपर्यन्ताः पञ्चाशत्कोटिलक्षसागराणि यावत् सर्वार्थसिद्धान्तरचतुर्दशलक्षादिश्रेणीभिरसंख्याताभिरत्र मुक्तिं गताः। श्रीरामादीनां कोटित्रयं सिद्धम्। पाण्डवानां विंशतिकोट्यः। प्रद्युम्न-शाम्बादीनां सार्द्धाष्टौ कोट्यः। नारदाद्याः एकनवतिलक्षाः। अत्रैवाजित-शान्ति-जिनौ वर्षाकालमवस्थितौ। मरुदेवीचैत्यं स्वर्णमयं पुरा बाहुबलिना कारितम्। मरुदेवीसमीपे शान्तिचैत्यं पुरा सुवर्णमयम्, तदग्रे त्रिंशता हस्तैरधः पुरुषसप्तकेन सुवर्ण-रूप्यखानिद्वयम्। ततो हस्तशतेन पूर्वद्वारा रसकूपिका। श्रीशान्तिचैत्याद् हस्ताष्टकेनोद्धारयोग्यं सुवर्णं पादलिप्ताचार्योपदेशेन नागार्जुनेन स्थापितमस्तीति लोकोक्तिः। अष्टमतपसा तुष्टः कपर्दियक्षः श्रीभरतकारितां प्रतिमां वन्दापयति, यदि कश्चित् सत्त्ववानेकावतारी भवति। कल्की दत्तो नाम तीर्थं सपूजं कारयिष्यति। तत्पुत्रो मेघघोषश्चोद्धारम्। ततः २२१४ अनन्तरम्–

५२१. नंदी सूरी अज्जे सिरिप्पभे माणिभद्द-जसमित्ते।
धणमित्त-धम्मविघडे सुमंगले सूरसेणे य॥

५२२. एए होही उद्धारकारया जाव सूरिदुप्पसहो।
पच्छिमउद्धारकरो होही इह विमलवाहणओ॥

५२३. वुच्छिन्ने वि य तित्थे होही कूडं तु उसहसामिस्स।
जा पउमनाहतित्थं सुराइकयपूयसंजुत्तं॥–इति तीर्थमहिमा।

*

§९३. अथ राजन्! रैवतकतीर्थमपि महाप्रभावं प्रत्यासन्नं च वर्त्तते। अस्य महिमा श्रीविद्याप्राभृते तीर्थमाहात्म्ये गणधरैरुक्तः। श्रीभारत्या काञ्चनबलानके श्रीनेम्यादिमूर्त्तिनमस्करणागतया नारदस्य पुरः प्रोक्तस्तेन च लिखितः। इदं तीर्थमनादियुगीनमाहुः। अवसर्पिण्यामयं शैलः षड्विंशति-विंशति-षोडश-दश-द्वियोजन-धनुःशतोच्चशिराः। अनादिकाले यस्मिन्नर्हन्तोऽनन्तसिद्धाः। यस्याकारं सुरासुरनरेशास्त्रिभुवनेऽपि पूजयन्ति। अनन्ततीर्थकृतामत्र कल्याणकत्रयमभूत्। अतीतचतुर्विंशतिकायां नमीश्वराद्यानामष्टजिनानां कल्याणकत्रयमभूत्। अस्यां श्रीनेमिनाथस्य। श्रीपद्मनाभाद्या द्वाविंशतिजिना इह सेत्स्यन्ति। इयं मूर्त्तिर्ब्रह्मेन्द्रकृताऽस्या विंशतिसागरोपमकोट्योऽभूवन्। श्रीऋषभा-देशात् भविष्यतो नेमेर्मूर्त्तिर्हैमी रूप्या च भरतेन पूर्वं स्थापिता रत्नमयी चेन्द्रार्पिता। अस्यान्तःकाञ्चनबलानके शक्रनिर्मिते रत्नमूर्त्तिरस्ति शक्रकृता। शक्रकृतं गजेन्द्रपदकुण्डं सर्वर्तुकं भद्रशालवनं पूजार्थम्, पञ्चमारकपर्यन्ते श्रीनेमिमूर्त्तिः स्वर्गे सुरेन्द्रपूज्या भविष्यति, उत्सर्पिण्यां पुनरत्र। यस्य ध्यानेनान्यत्रापि स्थिता भव्या भवचतुष्केन मोक्षं यान्ति। इदं तीर्थं सर्वदा सुरासुरार्च्यम्। तथा श्रीभद्रबाहुप्रणीतं श्रीवज्रस्वामिनोद्धृतं स्वरूपमिदम्–

"छत्तसिलाए सिलासणे दिक्खं पडिवन्नो नेमी। सहसंबणे केवलनाणं। लक्खारामे देसणा। अवलोयणा-उच्चसिहरे निव्वाणं। रेवयमेहलाए कण्हो तत्थ कल्लाणतिगं नाऊण सुवण्ण-रयणपडिमालंकियं चेईयतिगं, अंबादेविं च कावेइ। इंदो वि गिरिं कोरिऊण सुवन्नवन्नं बलाणयं रुप्पमयं चेईयं रयणमया पडिमा पमाणवन्नोववेया।

सिहरे अंबारंगमंडवे अवलोयणासिहरं घठाण्णमंडवे संबो । सिद्धविणायगो पडिहारो । तहा सत्त जायवा दामोदराणुरूवा कालमेह १ मेहनाद २ गिरिविडा(दा)रण ३ एकपाद ४ सिंहनाद ५ खोडिक ६ रैवत ७ नामानः तिव्वतवेणं कीडणेणं खित्तवाला उववन्ना । तत्थ य मेहनादो सम्मदिट्ठी नेमिकममत्तो । मेहलाए गिरिविदारणो । कंचणवलाणए चउदारे तत्थ अंबाएसेण पवेसो नन्नहा । तहा अंबापुरओ हत्थवीसाए विवरं तत्थ य अंबाएसेणं उववासतिगेणं सिलुग्घाडणं । हत्थवीसाए संपुडसत्तगं, समुग्गयपंचयं, अहो रसकूविआ । अमावाए अमावाए उग्घाडइ, गिण्हिज्जइ अंबाएसेण । तहा पज्जुन्नकूडे उववासतिगं काऊण सरलमग्गेण घलिपूअणेणं सिद्धिविणायगो लब्भइ । तत्थ य चिंतिया सिद्धी । दिणमेगं ठाइव्वं । जइ पच्चक्खो हवइ । तओ राइमईए गुहाए कमसएणं गोदोहियाए पवेसे रसकूविया किसिणचित्तवल्ली । राइमईए पडिमा रयणमया, अंबा रुप्पमया चिट्ठंति । तहा छत्तसिला घंटसिला कोडिसिला तिगं पन्नत्तं । छत्तसिलामज्झंमज्झेण कणयवल्ली । सहसंबवणमज्झे रयय-सुवण्णमयचउवीसं । लक्खारामे पायत्तरी चउवीसं जिणाण गुहा पन्नत्ता । कालमेहस्स पुरओ सुवण्णवालुयाए नईए सइकमसयतिएणं उत्तरदिसीए गमित्ता गिरिगुहं पविसित्ता, न्हवणं उदएण काऊण ठिए उववासपंचगहिं दुवारमुग्घडइ । मज्झे पढमदुवारे सुवन्नखाणी, दुइए रयणखाणी । तत्थ एगो कण्हमंडारो अन्नो दामोदरसमीवे । अंजणसिलाए अहोभागे रययसुवन्नधूली पुरिसपावीसेहिं पन्नत्ता ।

५२४. तरसत्थमणे मंगलयदेयदाली य संतु रससिद्धी ।
सिरिवयरोयचक्खायं संघसमुद्धरणकज्जंमि ॥

५२५. सस्सकहाहं मज्झे गिण्हित्ता कोडिविंदुसंजोए ।
घंटसिलाजुम्मयजोयणाओ अंजणगयरसिद्धी ॥

रत्नजाति-महौषध्यादिकं यद् विश्वत्रये वर्त्तते, तत् सर्वमत्रास्ति ।

अन्यान्यपि चित्ताह्लादकानि पुण्यानि श्रीजिनमयानि तीर्थानि ग्राम-पुर-पत्तन-पर्वतादिषु सन्ति । तेषु सर्वत्र शासनप्रभावकाः सुश्रावका दर्शनविशुद्ध्यायर्थं तीर्थयात्रां कुर्वन्ति । करणीयमेतत् । कृतं पुरा श्रीभरतेश्वरादिभिर्भूपतिभिः । एतत् श्रीतीर्थद्वयमाहात्म्यमाकर्ण्य राजा सपरिकरस्तीर्थयात्रासामग्रीमकारयत् ।

§२४. महता महेन श्रीदेवालयप्रस्थाने सञ्जायमाने देशान्तरायातेन पुरुषयुग्मेन–'त्वां प्रति डाहलदेशीयः श्रीकर्णनृपतिरेति–' इति विज्ञप्तः । स्वेदबिन्दुतिलाङ्कितं ललाटं दधानो मन्त्रिवाग्भटेन सार्कं साध्वसध्वस्तसंघाधिपत्यमनोरथः प्रभोः पदान्ते स्वं निनिन्द ।

५२६. श्रेयांसि बहुविघ्नानि भवन्ति महतामपि । अश्रेयसि प्रवृत्तानां क्वापि यान्ति विनायकाः ॥

अथ नृपतेस्तस्मिन् महाभये समुपस्थिते किञ्चिदवधार्य 'द्वादशे यामे भवतो निर्वृत्तिर्भविष्यति' इति आदिश्य विसृष्टे नृपः । किंकर्त्तव्यमूढो यावदास्ते, तावन्निर्णीतवेलासमागतनरयुग्मेन 'श्रीकर्णो दिवंगतः' इति विज्ञप्तः । ताम्बूलमुत्सृज्य कथमिति पृष्टौ तौ ऊचतुः–'कुम्भिकुम्भस्थलस्थः श्रीकर्णो निशि प्रयाणं कुर्वन् निद्रामुद्रितलोचनः कण्ठपीठप्रणयिना सुवर्णशृङ्खलेन प्रविष्टवटशाखापादेन उल्लम्बितः पञ्चतामञ्चितवान् । तस्य संस्कारानन्तरमावां चलितौ'–इति ताभ्यां विज्ञप्ते तत्कालं द्वासप्ततिमहासामन्तैः समं राजा श्रीतीर्थयात्राभेरीमवादयत् । सर्वदेशेषु कुङ्कुमपत्रिकाः प्रैषीत् । ततः श्रीसंघमेलापके स्वगजाश्वरथपत्तिपरिवृता द्वासप्ततिसामन्ताः, मन्त्री वाग्भटः, २४ प्रासादकारको नृपमान्यो नागश्रेष्ठिसुत आभडः, षड्भाषाकविचक्रवर्ती श्रीपालस्तत्पुत्रः सिद्धपालः, कवीनां दातृणां च धुर्यो भाण्डागारिकः कपर्दी, प्रह्लादनपुरनिवेशको राणप्रह्लादनः, ९९ लक्षसुवर्णस्वामी श्रेष्ठी छाडाकः, राजदौहित्रिकः प्रतापमल्लः, १८०० व्यवहारिणः, श्रीहेमसूरयः । अन्येऽपि लोका ग्राम-

नगरस्थाननिवासिनो बहवः। षड्दर्शनानि। बहवो बन्दिजनाः। स्थाने स्थाने प्रभावना, जिने जिने छत्र-चामरादि-प्रदानम्। स्थाने स्थाने सत्पात्रपूजा। याचकानां मनोवाञ्छिता सिद्धिः। एवं परिवृतो प्रभुणा द्विधोपदिश्यमान-वर्त्मना धुन्धुकपुरे प्राप्तः। प्रभूणां जन्मगृहभूमौ स्वयं कारितसप्तदशहस्तप्रमाणे झोलिकाविहारे प्रभावनां विधि-त्सुर्जातिपिशुनानां द्विजातीनामुदितमुपसर्गं वीक्ष्य तान् विषयताडितान् कुर्वन् श्रीशत्रुञ्जयतीर्थं प्राप। पादचारेण पर्वताधिरोहणम्। श्रीजिनेन्द्रप्रासादद्वारे सपादसेतिकामौक्तिकैः प्रासादद्वारवर्द्धापनकम्। मध्ये प्रदक्षिणात्रयम्। प्रथमपूजायां नवाङ्गेषु नवरत्नानि लक्षमूल्यानि। अष्टाह्निकामहोत्सवः। सुवर्ण-रूप्यादिसप्तध्वजाप्रदानम्। चैत्यपरि-पाट्यां वामहस्तं श्रीगुरूणां हस्ते लग्नं वीक्ष्य महं कपर्दी प्राह–

५२७. श्रीचौलुक्य! स दक्षिणस्तव करः पूर्वं समासूत्रित-
प्राणिप्राणविघातपातकसखः शुद्धो जिनेन्द्रार्चनात्।
वामोऽप्येष तथैव पातकसखः शुद्धिं कथं प्राप्नुयात्
न स्पृश्येत करेण चेत् यतिपतेः श्रीहेमसूरिप्रभोः॥

प्रमुदितो राजा। अवारितान्नदानयाचकसत्काराः प्रवर्त्तन्ते।

§९५. मालोद्घट्टनप्रस्तावे उदयनसुतादिमहापुरुषसंघश्रेणिभृते धर्मशिलायां महं वाग्भटः प्रथमं लक्षचतुष्क-मवदत्। प्रच्छन्नधार्मिकः कश्चित् कथापयत्यष्टौ लक्षाः। एवमन्योन्येष्वीश्वरेषु वर्द्धयत्सु कश्चित् सपादकोटीं चकार। चमत्कृतो राजोवाच–'उत्थाप्यतां स यो गृह्णाति'। उत्थितः स यावत् दृश्यते तावद् बादरमलिनवसनो वणिग्रूपो विलोकितः। राज्ञा वाग्भटो भाषितः–'द्रव्यसुस्थं कृत्वा देहि'। श्रीवाग्भटो वणिजा सहोत्थाय द्रव्यसुस्थं पप्रच्छ। वणिजा सपादकोटिमूल्यं माणिक्यं दर्शितम्। मन्त्रिणा पृष्टम्–'कुत इदं ते?'। वणिगाह–'महूअकवास्तव्यो मत्पिता हंसाख्यः सौराष्ट्रिकः प्राग्वाटान्वयः। अहं तद्भूर्जगडः। माता मे धारू-नाम्नी। मत्पित्रा निधनसमयेऽहं भाषितः–"वत्स! चिरं कृताः प्रवहणयात्राः। फलिताश्च मे। मेलितं धनं तेन च प्रत्येकं सपादकोटिमूल्यं माणिक्यपञ्चकम्। अधुना प्रभुऋषभचरणौ शरणं मे। अनशनं प्रतिपन्नम्। क्षमिताः सर्वे जीवाः। एकं माणिक्यं श्रीऋषभाय, एकं श्रीनेमिनाथाय, एकं चन्द्रप्रभाय, माणिक्यद्वयमात्मनोऽन्तिके दध्याः।" मामिति निगद्य गतः परलोकं पिता। तज्जनकवचनसमर्थनाय जनन्याः सहाहमागतः। सा कपर्दि-भुवने मुक्ताऽस्ति। तामष्टपष्टितीर्थाधिकां मालां परिधापयिष्यामि।' श्रुत्वा हृष्टो राजा मन्त्री संघश्च। मालापरिधानं कृतं तेन जगड्डेन वणिजा। तन्माणिक्यं हेम्ना खचित्वा ऋषभाय कण्ठाभरणं राजा कारयामास।

महापूजावसरे चारणः पपाठ–

५२८. इक्कह फुल्लह माटि देयइ जु नरसुरसियसुहइ।
एही करइ कु साटि कट भोलिम जिणवरतणी॥

नवकृत्वः पठने नवलक्षदानं द्रम्माणाम्। आरात्रिकावसरे महादानम्।

§९६. ततो राजा स्वं कृतार्थं मन्यमानः, कृत्वा अमानमहिमानं श्रीरैवतदैवतं मनसाध्याय सपरिकरस्तद्दिशं प्रति प्रयाणमकरोत्। पथि च वृक्षानपि पट्टकूलपरिधापनिकया सन्मानयन् रैवतासन्ने समायाते, अकस्मादेव पर्वत-कम्पे सञ्जायमाने श्रीहेमचन्द्राचार्या नृपं प्राहुः–'इयं छत्रशिला युगपदुपेतयोर्द्वयोः पुण्यवतोरुपरि पतिष्यति।' इति वृद्धपरंपरा। तदावां पुण्यवन्तौ, यदियं गीः सत्या भवति, तदा लोकापवादः। नृपतिरेव देवं नमस्करोतु, न वयम्'–इत्युक्ते नृपतिनोपरुध्य प्रभव एव सङ्घेन सह प्रेषिताः, न स्वयम्। छत्रशिलामार्गं परिहृत्य परस्मिन् मार्गे जीर्णप्राकारपक्षेन श्रीवाग्भटकारितपद्यां चटितः। तत्र स्नात्रविधिपूर्वकं स्नात्रपूजादानं सर्वस्थानेषु। लक्षाराम-सहस्राम्रवन-चन्द्रगुम्फाम्बिकावलोकनाशिखर-शाम्ब-प्रद्युम्नादिषु चैत्येषु चैत्यपरिपाटीं कृतवान् महाप्रभावनां च।

५३४. निरञ्जनं निराकारं सहजानन्दनन्दितम् ।
निरूप्य मनसा नित्यं स्वरूपं परमेश्वरम् ॥

५३५. कृत्वा तन्मयमात्मानं त्यक्त्वा सर्वं स्वतः परम् ।
स्वात्मावबोधसम्भूतज्योतिषेति व्यभावयन् ॥

५३६. यथा—आत्मन् ! देवस्त्वमेव त्रिभुवनभवनो ज्योतिदीपस्त्वमेव,
ब्रह्मज्योतिस्त्वमेवाखिलविषयसमुज्जीवनायुस्त्वमेव ।
कर्त्ता भोक्ता त्वमेव व्रजसि जगति च स्थाणुरूपस्त्वमेव,
स्वस्मिन् ज्ञात्वा स्वरूपं किमु तदिह बहिर्भावमाविष्करोषि ॥

इति सञ्चिन्त्य चरमोच्छ्वाससमये दशमद्वारेण प्राणोत्क्रान्तिमकार्षुः ।

तदनन्तरं प्रभोः शरीरस्य चन्दनकर्पूरागरुभिः कृते संस्कारे तद्भस्म पवित्रमिति कृत्वा राजा तिलकव्याजेन नमश्चक्रे । ततः समस्तसामन्तैस्तदनु नगरलोकैश्च तत्रत्यमृत्स्नायां गृह्यमाणायां 'हेमखड्ड' इत्यद्यापि सा प्रसिद्धाऽस्ति लोके ।

*

§९९. अथ राजा श्रीगुरुपादानां विरहेणास्तोकशोकाश्रुजलाविललोचनः श्मशाननिभां राजसभां मन्यमानस्तत्र नायाति; दुर्गतिचिह्नान्येतानि इति राजचिन्हानि न धारयति; अयमपारं संसारं प्रापयतीति प्रजाव्यापारं चापि न करोति । भोगान् संसाररोगानिव मन्यते । लास्यहास्यादिविमुखः, सुखाय तान् विना किमपि न पश्यति । सकलकलाकलापकुशलैरपि अनेकधा विनोद्यमानोऽपि न क्वापि रतिं प्राप । सचिवैर्विज्ञप्त इदमवादीत्—'स्वपुण्यार्जितोत्तमलोकान् प्रभून् न शोचामि, किन्तु निजमेव सप्ताङ्गराज्यम् । सर्वथा परिहार्यराजपिण्डदोषदूषितं यन्मदीयमुदकमपि जगद्गुरोरङ्गे न लग्नं, यस्मात्तदेव शोचामि ।

अथान्यदा सान्ध्यविधिविधानाय सन्ध्यासमयमावेदयितुं केनापि विदुषाऽवसरपाठकेन पठितम्—

५३७. ध्वान्तं ध्वस्तं समस्तं विरहविषगमं चक्रवाकेषु चक्रे,
सङ्कोचं मोचितं द्राक् किल कमलवने धाम लुप्तं ग्रहाणाम् ।
प्राप्ता पूजा जनेभ्यस्तदनु च निखिला येन भुक्ता दिनश्रीः,
संप्रत्यस्तंगतोऽयं हतविधिवशतः शोचनीयो न भानुः ॥

इत्याकर्ण्य राजा, शोकं किञ्चित् स्तोकं कृत्वा, श्रीगुरूणां गुणान् लोकंपृणान् स्मारं स्मारं सुचिरमिदमवादीत्—

५३८. श्रीसूरीश्वर ! हेमचन्द्र ! भवतः प्रक्षाल्य पादौ स्वयम्,
स्वर्धुनेः पयसा विलिप्य च मुहुः श्रीखण्डसान्द्रद्रवैः ।
अर्चामोऽम्बुदमौक्तिकैर्यदि तदाऽप्यानृण्यमस्तु क नो,
विश्वैश्वर्यदजैनधर्मविविधाज्ञाप्राप्तिहेतू हमम् ॥

५३९. श्रीहेमसूरिप्रभुपादपद्मं वन्दे भवाब्धेस्तरणैकपोतम् ।
ललाटपट्टाक्षरकान्तराज्याक्षरावली येन मम व्यलोपि ॥

आरात्रिकावसरे चारणः पपाठ–

५२९. लच्छि वाणि मुहकाणि ए तइं भागी मुह मरउं।
हेमसूरि अत्थाणि जे ईसर ते पंडिआ॥

वन्दनकसमये नृपस्य पृष्ठे हस्तप्रदाने [अन्यः] चारणः–

५३०. हेम तुहारा कर मरउं जिहिं अचन्मुअ रिद्धि।
जे चांपइ हेठामुहा ताहं ऊपहरी सिद्धि॥

द्वयोरपि पाठे लक्षत्रयमौचित्यमदात्। ततः परमेश्वरं तुष्टाव।

५३१. आजन्म कलिताजिह्मपरब्रह्ममयात्मने।
चिदानन्दपदस्थाय श्रीनेमिस्वामिने नमः॥

अथोभयतीर्थयात्रयाऽऽत्मानं पवित्रीकृत्य राजा सपरिकरः पथि प्रभावनां कुर्वाणः श्रीपत्तनमाजगाम। प्रौढमहिम्ना नित्यं धर्मध्यानपरो दिनानि सफलयति।

*

§९७. अथ श्रीकुमारपालेन द्वासप्ततिसामन्ता भूपालाः स्वाज्ञां ग्राहिताः। अष्टादशदेशेषु अमारिपटहो दापितः। चतुर्दशसु देशेषु अर्थबलेन मैत्रीबलेन च विनयेन च जीवरक्षा कारिता। १४४४ नवीनप्रासादेषु कलशाधिरोपणं कारितम्। १६००० जीर्णोद्धारेषु कलशध्वजारोहोऽकारि। सप्तभिस्तीर्थयात्राभिरात्मा पवित्रितः। एकविंशति ज्ञानकोशलेखनम्। द्वासप्ततिलक्षरुतकद्रव्यपत्र फाटितवान्। ९८ लक्षप्रमाणं द्रव्यमौचित्ये दत्तम्। परमार्हतनिरुदं लब्धम्। आजन्म परनारीसहोदरबिरुदं च। सप्तव्यसनानि निवारितानि। श्रीसङ्घभक्ति-साधार्मिकवात्सल्य-निर्जिनार्चादिरावश्यक-पर्वदिनपौषधादान-शासनप्रभावना-दीनोद्धारपरोपकारादिपुण्यकृत्यान्यनेकधा कृतानि।

५३२. कुमारपालभूपस्य किमेकं वर्ण्यते क्षितौ।
जिनेन्द्रधर्ममासाद्य यो जगत् तन्मयं व्यधात्॥

*

§९८. अत्रान्तरे च निर्व्यूढराज्यव्यापारौ विहितानेकनवीनप्रासादजीर्णोद्धार-परोपकार-दीनोद्धारादिपुण्यकृत्यौ कृतश्रीजिनशासनप्रभावनौ मन्त्रिबाहडदेव-आंबडौ स्वर्गं जग्मतुः।

अथैव काले श्रीकुमारपालभूपालः श्रीहेमसूरिश्च कृतकृत्या महसा तपसा वयसा च वृद्धौ जातौ। परं श्रीहेमसूरिगच्छे विरोधः। रामचन्द्र-गुणचन्द्रवृन्दमेकतः, एकतो बालचन्द्रः। तस्य तु राजभ्रातृव्याऽजयपालेन सह मैत्री। अन्यदा राजा श्रीगुरुं पृच्छति स्म–'भगवन्! अपुत्रोऽहं, कं स्वराज्यपदे स्थापयामि?'। श्रीगुरुभिरुक्तम्–'राजन्! अयं भागिनेयः प्रतापमल्लः प्रजाप्रियो न्यायधर्मनिष्ठो बहुराजवर्गीयसम्मतो राज्यभारधुराधुरीणोऽस्ति। अजयपालोऽप्यस्ति परं न तत्सङ्गरङ्गः, न न्यायनिष्ठः, न धर्मप्रियः, न जनानुरागः। यदुक्तम्–

५३३. धर्मशीलः सदा न्यायी पात्रे त्यागी गुणादरः।
प्रजानुरागसम्पन्नो राजा राज्यं करोति सः॥

न चायमेवंविधगुणवान्। अजयपालात् तु त्वत्कारितधर्मस्थानक्षयः कियानस्ति'। एवं मन्त्रे कृते बालचन्द्रेण स्वरूपमेतदजयपालाय न्यवेदि। तस्य रामचन्द्रादिषु महाद्वेषः समजनि।

अत्रावसरे चतुरशीतिवर्षायुषः श्रीहेमसूरिवराः परिज्ञातनिजावसानसमयाः समयोचितं चिकीर्षवः समस्तश्रीसंघं स्वकीयगच्छं श्रीकुमारपालनृपतिं चाहूय, 'तवापि षण्मासशेषमायुरस्ती'ति प्रज्ञापनां कृत्वा, दशधाऽऽराधनां विधाय, समाधियोगसाधितसत्कृत्याः–

५३४. निरञ्जनं निराकारं सहजानन्दनन्दितम्।
निरूप्य मनसा नित्यं स्वरूपं परमेश्वरम् ॥

५३५. कृत्वा तन्मयमात्मानं त्यक्त्वा सर्वं स्वतः परम्।
स्वात्मावबोधसम्भूतज्योतिषेति व्यभावयन् ॥

५३६. यथा–आत्मन्! देवस्त्वमेव त्रिभुवनभवनो ज्योतिदीपस्त्वमेव,
ब्रह्मज्योतिस्त्वमेवाखिलविषयसमुज्जीवनायुस्त्वमेव।
कर्त्ता भोक्ता त्वमेव व्रजसि जगति च स्थाणुरूपस्त्वमेव,
स्वस्मिन् ज्ञात्वा स्वरूपं किमु तदिह बहिर्भावमाविष्करोषि ॥

इति सञ्चिन्त्य चरमोच्छ्वाससमये दशमद्वारेण प्राणोत्क्रान्तिमकार्षुः।

तदनन्तरं प्रभोः शरीरस्य चन्दनकर्पूरागरुभिः कृते संस्कारे तद्भस्म पवित्रमिति कृत्वा राजा तिलकव्याजेन नमश्चक्रे। ततः समस्तसामन्तैस्तदनु नगरलोकैश्च तत्रत्यमृत्स्नायां गृह्यमाणायां 'हेमखड्ड' इत्यद्यापि सा प्रसिद्धाऽस्ति लोके।

*

§९९. अथ राजा श्रीगुरुपादानां विरहेणास्तोकशोकाश्रुजलाविललोचनः श्मशाननिभां राजसभां मन्यमानस्तत्र नायाति; दुर्गतिचिह्नान्येतानि इति राजचिन्हानि न धारयति; अयमपारं संसारं प्रापयतीति प्रजाव्यापारं चापि न करोति। भोगान् संसाररोगानिव मन्यते। हास्यसहासादिविमुखः, सुखाय तान् विना किमपि न पश्यति। सकल-कलाकलापकुशलैरपि अनेकधा विनोद्यमानोऽपि न क्वापि रतिं प्राप। सचिवैर्विज्ञप्त इदमवादीत्–'स्वपुण्यार्जितोत्तम-लोकान् प्रभून् न शोचामि, किन्तु निजमेव ससाङ्गराज्यम्। सर्वथा परिहार्यराजपिण्डदोषदूषितं यन्मदीयमुदकमपि जगद्गुरोरङ्गे न लग्नं, यस्मात्तदेव शोचामि।

अथान्यदा सान्ध्यविधिविधानाय सन्ध्यासमयमावेदयितुं केनापि विदुषाऽवसरपाठकेन पठितम्–

५३७. ध्वान्तं ध्वस्तं समस्तं विरहविषगमं चक्रवाकेषु चक्रे,
सङ्कोचं मोचितं द्राक् किल कमलवने धाम लुप्तं ग्रहाणाम्।
प्राप्ता पूजा जनेभ्यस्तदनु च निखिला येन भुक्ता दिनश्रीः,
संप्रत्यस्तंगतोऽयं हतविधिवशतः शोचनीयो न भानुः ॥

इत्याकर्ण्य राजा, शोकं किञ्चित् स्तोकं कृत्वा, श्रीगुरूणां गुणान् लोकंपृणान् स्मारं स्मारं सुचिरमिदमवादीत्–

५३८. श्रीसूरीश्वर! हेमचन्द्र! भवतः प्रक्षाल्य पादौ स्वयम्,
स्वर्धेनोः पयसा विलिप्य च मुहुः श्रीखण्डसान्द्रद्रवैः।
अर्चामोऽभ्युदमौक्तिकैर्यदि तदाऽप्यानृण्यमस्तु क्व नो,
विश्वैश्वर्यदजैनधर्मविविधाम्नायासिहेतुं शमम् ॥

५३९. श्रीहेमसूरिप्रभुपादपद्मं वन्दे भवाब्धेस्तरणैकपोतम्।
ललाटपट्टाक्षरकान्तराज्याक्षरावली येन मम व्यलोपि ॥

§१००. ततः श्रीगुरुविरहातुरो राजा यावद्दौहित्रं प्रतापमल्लं राज्ये निवेशयति, तावत् किंचित् कृतराजवर्गभेदोऽजयपालो भ्रातृव्यः श्रीकुमारपालदेवस्य विषमविषमदात्। तेन विधुरितगात्रो राजा ज्ञातभ्रातृव्यप्रपञ्चः स्वाधीनां विषापहारशुक्तिकां पुरा कोशे स्थापितां शीघ्रमानयतेति निजाप्तपुरुषानादिदेश। ते च तां पुराऽप्यजयपालेन गृहीतां ज्ञात्वा तूष्णीं स्थिताः। अत्रान्तरे व्याकुले समस्तराजकुले विषापहारिशुक्तिकाया अनागमनहेतुं ज्ञात्वा कोऽपि चारणः पपाठ–

५४०. कुमरड! कुमरविहार एता कांइं करावीया।
ताहं कु करिसइ सार सीप न आवइं सयं धणी॥

इत्याकर्ण्य राजा यावद्विमर्शं करोति, तावत् कोऽप्यवसरावेदकः पपाठ–

५४१. कृतकृत्योऽसि भूपाल! कलिकालेऽपि भूतले।
आमन्त्रयति तेन त्वां विधिः स्वर्गे यथाविधि॥

इति श्रुत्वा राजा शुक्तेरनागमनकारणं ज्ञात्वा सर्वसमक्षमित्युवाच–

५४२. अर्थिभ्यः कनकस्य दीपकपिशा विश्राणिताः कोटयो,
वादेषु प्रतिवादिनां प्रतिहताः संस्कारगर्भा गिरः।
उत्खातप्रतिरोपितैर्नृपतिभिः सारैरिव क्रीडितं,
कर्त्तव्यं कृतमर्थना यदि विधेस्तत्रापि सज्जा वयम्॥

५४३. इत्युदीर्य स्वधैर्येण भूपतिर्भूरिभाग्यवान्।
लक्षं लक्षं ददौ तोपादनयोः पारितोषिकम्॥

*

§१०१. ततो राजा त्रिंशद्वर्षाणि अष्टौ मासान् सप्तविंशतिदिवसान् साम्राज्यं कृत्वा कृतार्थी कृतपुरुषार्थः सर्वं विरसावसानं विज्ञाय विश्वशिरोमणिः प्राणान्ते दशधाराधनां विधाय स्वचित्ते श्रीपञ्चपरमेष्ठीप्रतिष्ठाप्रगल्भकण्ठः समाधिस्वाधीनसाध्यः परमविधिना परमोच्छ्वासे त्यक्तशरीरादिममत्वस्तत्त्वपरिज्ञानवान् प्राणान् मत्याक्षीत्।

५४४. सर्वज्ञं हृदि संस्मरन् गुरुमपि श्रीहेमचन्द्रं प्रभुम्,
धर्मं तदुगदितं च कल्मषमषीप्रक्षालनापुष्करम्।
व्योमाग्नियम(१२३०)वत्सरे विषलहर्युत्सर्पि मूर्छाभरो,
मृत्वाऽवाप कुमारपालनृपतिः स व्यन्तराधीशताम्॥

*

ततो लोके हाहाकारो महानभूत्। सर्वत्रलोकानामिति गिरः प्रादुरासन्–

५४५. आकर्ण्य प्रतिकाननं पशुगणाश्चौलुक्यभूपव्ययम्,
क्रन्दन्तः करुणं परस्परमदो वक्ष्यन्ति निःसंशयम्।
योऽमूघः कुलवर्द्धनः स सुकृती राजर्षिरस्तं ययौ,
यूयं यात दिगन्तरं झटिति रे नो चेन्मृता व्याधतः॥

*

५४६. नाऽभूद् भविता चात्र हेमसूरिसमो गुरुः ।
श्रीमान् कुमारपालश्च जिनभक्तो महीपतिः ॥

५४७. आज्ञावर्तिषु मण्डलेष्वष्टादशस्वादरा-
दब्दान्येव चतुर्दश प्रसृमरीं मारिं निवार्यौजसा ।
कीर्त्तिस्तम्भनिभां चतुर्दशशतीसंख्यान् विहारांस्तथा,
कृत्वा निर्मितवान् कुमारनृपतिर्जैनो निजैनो व्ययम् ॥

5

*

५४८. कर्णाटे गूर्जरे लाटे सौराष्ट्रे कच्छ-सैन्धवे ।
उच्चायां चैव भंभेर्यां मारवे मालवे तथा ॥

५४९. कौंकणे तु तथा राष्ट्रे कीरे जाङ्गलके पुनः ।
सपादलक्षे मेवाडे दीपे (ढीहयां ?) जालन्धरेऽपि च ॥

10

५५०. जन्तूनामभयं सप्तव्यसनानां निषेधनम् ।
वादनं न्यायघण्टाया रुदतीधनवर्जनम् ॥

*

५५१. किञ्चिद्गुरुमुखाच्छ्रुत्वा किञ्चिदक्षरदर्शनात् ।
प्रबन्धोऽयं कुमारस्य भूपतेर्लिखितो मया ॥

॥ इति कुमारपालप्रबोधप्रबन्धः समाप्तः ॥

15

## [ अथ ग्रन्थलेखनप्रशस्तिः । ]

श्रीमच्छ्रीचैत्रगच्छेशा श्रीधनेश्वरसूरयः ।
ततः क्रमागताचौमि श्रीभुवनेन्दुसद्गुरून् ॥ १ ॥

देवभद्रगणीशानां शिष्याः श्रीगच्छनायकाः ।
विजयचन्द्रसूरीन्द्रास्तपसा द्योतिताम्बराः ॥ २ ॥

वज्रसेन-पद्मचन्द्र-खेमकीर्त्तिस्तथा गुरुः ।
हेमकुम्भमुनीन्द्रश्च श्रीयशोभद्रसूरिराट् ॥ ३ ॥

श्रीरत्नाकरसूरीणां नाम्ना नश्यति कल्मषम् ।
मुनिशेखरयोगीन्द्रं धर्मदेवगुरुं परम् ॥ ४ ॥

ज्ञानचन्द्राभयसिंहसूरिं तपःपरायणम् ।
हेमचन्द्रप्रभुं वन्दे गुणश्रेणिविभूषितम् ॥ ५ ॥

भविकजनसमूहैः सेव्यपादारविन्दम्,
रविकिरणसकाशं चन्द्रमाकारसौम्यम् ।
भवजलनिधिनावं दुःखपाशप्रणाशम्,
जयतिलकगुरुं श्रीसूरिराजं नमामि ॥ ६ ॥

धर्मशेखर-माणिक्यसूरिं माणिक्यसंनिभम् ।
रत्नसागरसूरीन्द्रं रत्नसिंहगुरुं तथा ॥ ७ ॥

उपाध्यायपदे श्रीमन्मुनिरत्नगणीश्वरान् ।
नौमि पण्डितसाधूनां क्षमाम्बुजमहं सदा ॥ ८ ॥

श्रीगच्छेशक्रमाम्भोजसेवने भ्रमरास्सदा ।
दयावर्द्धननामानः पण्डितास्सपरिच्छदाः ॥ ९ ॥

वेदं रसं-वेदं-चन्द्रे गते विक्रमवत्सरे ।
भव्यलोकप्रमोधाय स्थिता देवलपाटके ॥ १० ॥ —युग्मम् ।

तेषामादेशतः श्राद्धैः श्रीकुमारनरेशितुः ।
वृत्तं लिखापितं रम्यं गच्छोपकृतिहेतवे ॥ ११ ॥

यावन्मेरुर्महाशैलो यावच्चन्द्र-दिवाकरौ ।
श्रूयतां वाच्यतां पुण्यभृद्भिः संघे चरित्रपुस्तकम् ॥ १२ ॥

---

# चतुरशीतिप्रबन्धान्तर्गत

# कुमारपालदेवप्रबन्ध ।

चौलुक्यवंशेग(श्ध्व)जः श्रीकुमारपालदेवः —

एको यः सकलं कुतूहलितया म(ब)भ्राम भूमीतलं
प्रीत्या यस्य पतिंवरा समभवत् साम्राज्यलक्ष्मी स्वयम् ।
श्रीसिद्धाधिपविप्रयोगविधुरामप्रीणयत्(द्) यः प्रजां
कस्यासौ विदितो न गूर्जरपतिश्चालुक्यवंशध्वजः ॥ १ ॥

§ १. तस्य प्रबन्धो लिख्यते । यथा—श्रीपत्तने श्रियां निकेतने श्रीसिद्धच[क्र]वर्त्ती राज्यं करोति । तस्य पितृव्यस्य त्रिभुवनपालदेवस्य कुमारपालदेवः सुतोऽस्ति । पुत्र्यौ द्वे स्तः । एका प्रेमलदेवी, सपादलक्षाधिपतिना आनाकेन नृपतिना परिणीता । द्वितीया नामलदेवी, राज्ञा महासाधनिकेन प्रताप[म]ल्लेन परिणीता । अन्यदा श्रीसिद्धराजो निरपत्यश्चिन्तयति—

निर्नामताम्बुधौ मज्जद् राज्यभूवलयोद्धृतौ ।
पुत्राः श्रीडावराहन्तः संपद्यन्ते कृतात्मनाम् ॥ २ ॥
घटिकाऽप्येकया घट्या कुण्डीपयसि मज्जति ।
गोत्रं पुनरपुत्रस्य क्षणान्निर्नामताम्भसि ॥ ३ ॥

इति विचिन्त्य देवपत्तने श्रीसोमेश्वरयात्रायै चचाल । तत्र गत्वा सोमेश्वरः पूजादिभिराराधितः । स प्रत्यक्षीभूय उवाच—'स्कन्धे विहङ्गिकां विधाय इहाऽऽगमने कष्टं कथं कृतम्?' । तेनोक्तम्—'किं तेन? राज्यार्थम्' । 'राज्यधरस्ते कुमारपालदेवो भविष्यति' । नृपो निवृत्याऽऽयातस्त्वेवमचिन्तयत्—'चेदमुं मारयामि तदा सोमेश्वरः सुतं यच्छति' । अतस्तं मारयितुमारेभे । सोप (सोऽपि) विज्ञदर्भदेशीयः पुराच्छन्नो निस्ससार । भ्रमन् सप्तवारं केदारयात्रामकरोत् । अन्तराऽन्तरा पत्तने छन्नमभ्येति ।

§ २. एकदा तपश्वि(स्वि)वेषधरः केनापि नृपाय निवेदितः । मार्ग्यमाणो न दृष्टः । सज्जनकुलालेन कथकोठीमध्ये नीवाहे प्रक्षिप्य राजपुरुषेभ्यो रक्षितः । तज्जायया उक्तम्—'रक्ष रक्ष, असौ ते चिन्नकूटं दास्यति' । अथ निःशल्य नष्टः ।

§ ३. पुनरेकदा तपश्वि(स्वि)वेषधरः पत्तनं प्रविष्टः । अनादिराउलमढे प्रविष्टः । तत्र भ्रमन्नेकदा श्रीहेमाचार्याणां पो(पौ)षधागारे प्रविष्टः । व्याख्याने जायमाने कमठिकोपरि मरितवेष्टनं दृष्टम् । तेन चिन्तितम्—'याचिष्येऽमुं जटावेष्टनाय, पर(रं) दास्यन्ति न वा इति वक्तुं न शक्नोति' । ऊर्ध्वं दृष्ट्वा श्रीहेमाचार्यैर्नि(र्नि)र्व्यधनमालोक्य उक्तम्—'क्षुल्लक! राजपुत्रार्थे पट्टं मुञ्च' । तेन सक्रोधमुक्तम्—'यदं राउठो वा राजपुत्रो वा?' गुरुभिरुक्तम्—'उत्स(त्सु)को मा भव । यदा भविष्यसि तदा राजानं भणिष्यामि' । तेन स्वजटाभिः पदौ प्रमार्ज्योक्तम्—'कदा[स उ]त्यो वासरो भावी?' । तदा 'संवत् ११९९ वर्षे मार्गशिरवदि ४ रवौ तव राज्यम्'—पत्रिकाऽर्पिता । 'परं निकटा आपदस्ति, शीघ्रं मे पौषधागारे समागन्तव्यम्' ।

इतः केनापि नृपा[य] तपश्चि(स्वि)वेषो मठस्थो निवेदितः । राज्ञा तपश्चि(स्वि)नो निमन्त्रिताः । अनादिराउलस्तपश्चि(स्वि)समस्त्या भोजनाय गतः । इतः तपश्चि(स्वि)नां पार्श्वयोः खड्गधरा नराः स्थापिताः । तेषामिदमुक्तम्–'यस्य तपश्चि(स्वि)नोऽहं पादौ क्षालयन् विमुच्य उपरि यामि स [मा]रणीय एव' । इतस्तस्य पदक्षालने नृपश्चरणलक्षणं ललाटं चालोक्य विमुच्य 'निर्विण्णोऽहम्' । पुरोहितं तत्र ने(नि)युज्य उपरि गतः । तद्भाग्यात् संज्ञा सुभटानां विस्मृता । ततः कुमरिक एकं करं उदरे दत्त्वा, एकं मुखे [दत्त्वा] पित्तप्रकोपव्याजान्नष्टः । इतः श्रीहेमाचार्या भुक्तोत्तरं द्व(द्वा)रमुद्घाट्य उद्धाः सन्ति । सोऽपि पौषधागारे प्रविष्टः । उपवरकान्तः प्रक्षिप्य गुरुभिस्तालकं दत्तम् । पश्चान्नृपः कलकलमश्रुत्वा पश्चीन् दक्षयामास । मरटिका विस्मृताः । 'रे ! रे ! विलोकयत तम्' । अश्ववाराः प्रसृताः । श्रीहेमाचार्यपौषधागाररथ्यायां समायाताः । एकेन हट्टिकेन महेश्वरिणा पृष्टाः–'किमवि(व)लोक्यते ?' तैरुक्तम्–'कुमरिकः' । तेनोक्तम्–'श्वेताम्बराणां पौषधागारेऽस्ति' । तत्र गताः । नतिपूर्वं हेमाचार्याः पृष्टाः–'अत्र कुमरिकः कथ्यते' । 'तं न विद्मः । कोऽपि भिक्षुको द्वारं प्रेर्यं प्रविष्टोऽस्यां निःश्रेण्यां अधिरुह्य गतः' । ते गताः । पुनभ्र(भ्रे)मन्तो रथ्याद्वारे समायाताः । तेन वणिजा उक्तम्–'किमवलोक्यते ?' 'कुमरिकः' । तेनोक्तम्–'तत्र किं न प्राप्तः ?, चलत दर्शयामि' । अग्रे भूतः, समायातः । उक्तम्–'कुमरिकं [कथं] नापर्य(र्पय)त ?' तैरुक्तम्–'विलोकयत' । सोऽपि राजपुरुषैः सह शोधितुं प्रवृत्तः । तालकं दृष्टम् । 'असुमपाकुरुत, इहाऽऽस्ते' । पूज्यैरुक्तम्–'असौ राजपाटकतारुव्यस्य व्यव० धरणिगस्य भाण्डशाला । ततः कुञ्चिकामानीयोद्घाटयत' । राजपुत्रैरुक्तम्–'कस्तत्र गत आयातो वा ?, चलत' । स कथयति–'मा व्रजत, अस्त्येव' । इतो राज्ञा चिन्तितम्–

मृग-मीन-सज्जनानां तृण-जल-संतोषविहितवृत्तीनाम् ।
लुब्धक-धीवर-पिशुना निष्कारणवैरिणो जगति ॥ ४ ॥

एवं चिन्तयन् निरशनो दिनत्रयमस्थात् । तृतीयदिनरात्रौ भाण्डागारिककपर्दी पौषधागारे समायातः । परिजनं बाह्ये स्थाप्य नमस्कारं कृत्वा उपविष्टः । गुरुभिरुक्तम्–'कोऽप्यस्माभिर्भवद्बलाद् यदन्यायः कृतस्तत्र किम् ?' तेनोक्तम्–'न संभाव्यते ।' 'भविष्यति चेत् ?' 'तदा वारयितुं क्षमः' । उक्तम्–'कुमरिकः स्थापितः' । 'किं तेन नृपापथ्यकारिणा ?' । 'असौ कालेन महाप्रभावको भावी; परं दिनत्रयं निरशनस्य जातम्' । ततो द्वारमुद्घाट्य स्ववेषं परिधाप्य गृहं नीत्वा मासं यावच्छन्नं स्थापितः । इतः पत्रदौःस्थ्ये सति नृपेन(ण) भाण्डागारिक उक्तः–'त्वं याहि, मार्गसौरथ्यं कुरु' । भाण्डागारिकेणान्यकरभी शोधिता(?) । स्वयं तथैव स्थितः । वहिर्नीत्वा योजनविंशति प्रान्ते मुमोच ।

*

§४. स भ्रमन् काञ्ची[नगरी गत]स्तत्र सरसि तटे प्रासादे शिरः पूज्यमानं दृष्ट्वा पप्रच्छ–'किमेतत् शिरः पूज्यते ?' देवार्चकेनोक्तम्–'अत्र सरसि तय्य(स्क)रस्य शिरः केनापि नि[:]कृत्य क्षिप्तम् । तदनु तत् प्रातः पातर्ट(प्रात)रिद मृते–'मुडति' [ज]ल्पात् उक्त्वा पुनः प्रातर्वक्ति । नृपेणामात्याः पृष्टास्तैश्च पण्डिताः । तैर्मासो याचितः । मुख्यपण्डितः स्वगृहे सूत्र कृत्वा निर्ययौ । अटवी भ्रमन्नेकस्मिन् कोटरे रात्रौ स्थितः । तत्र वृक्षे भूता [:] सन्ति । लघुभिरुक्तम्–'ता[त] अस्माकं [क्षुधा' । ता]तेनोक्तम्–'दिनत्रयानन्तरं यास्यति' । 'कथं ?' मत्यासन्नपुरे [नृपेण] पण्डिताः शिरसो वाक्य पृष्टाः, ते न जानन्ति, नरेन्द्रस्तान् सकुटुम्बान् व्यापादयिष्यति' । तै[:] पृष्टम्–'तात ! किं कारणम् ?' निर्बन्धे कृते उक्तम्–'लोभेन मुडति' । तत् पण्डितेन श्रुतम् । गृहमायातः । मासप्रा(प्रा)न्ते नृपेणाऽऽहूतस्तेन सरस्तीरे गत्वा उक्तम्–'यदि ला(लो)भेन मुडसि, तदा पुनर्न वाच्यम्' । शिरस्तथैव स्थितम् । तं (तत्र) नृपेण प्रासादः कृतः । अतो मध्ये शिरः पूज्यते' ।

§५. ततः कुडंगेश्वरप्रासादे श्रीसिद्धसेन-दिवाकरेण स्वयं लिखितां गाथां ददर्श–

पुण्णे वाससहस्से सयंमि वासाण नवनवइ अहिए ।
होही कुमरनरिंदो तुह विक्कमराय ! सारिच्छो ॥ ५ ॥

एतां दृष्ट्वा श्रीहेमसूरीणां वचो निश्चिकाय ।

§६. एकदा क्वापि वृक्षतले निविष्टः । पत्रपति(?)मूख(ष)केनाऽऽकृष्य द्रम्माणां शतपञ्चकं पुञ्जीकृतं दृष्ट्वा, जग्राह । स अदृष्ट्वा मृतः । नृपः पश्चात्तापपरो जज्ञे ।

§७. इत एकदा शीतार्तो जावालिपुरप्रत्यासन्ने वायराग्रामे गतः । तत्र तिहुणसिंहव्यवहारकगृहे गोजार्यां शीतरक्षार्थं कम्बलमेकं याचित्वा सुष्वाप । गच्छन् तमेवाऽऽदाय गतः ।

§८. क्रमेण कश्चित् व्यवहारी भार्यां नीत्वा प्रौढपरिकरेण पत्तनं प्रतिनिवृत्तः । तेन सार्थेन मिलितः । सार्थे स्थिते भोजनवेलायां सार्थपेन स्वदृष्टौ परिजनो भोजितः । योगी तथैव निरन्नोऽस्थात् । तद्भार्याऽपि उपविश्य भोक्तुं तस्य क्रूरस्य दृष्टौ दातुमक्षमा सती भोज्यं त्यक्त्वा उत्थिता । एवं द्वितीयदिने, तृतीयेऽपि । चतुर्थे दिने कस्यापि ग्रामस्य प्रत्यासन्ने स्थितः । सोऽन्तर्गतः । ततस्तत्पत्नी परिवेष्य योगिनं ययौ–'भो योगिन् ! भुज्यताम्' । तेनोक्तम्–'भुक्ता[ः] स्मः' तयोक्तम्–'मा जानीथा यदहं भुक्ता । भुज्यतां यथाऽहमपि भुञ्जे' । राज्ञा चिन्तितम्–'एषा कल्पवल्ली, स तु विषद्रुः' ।

§९. क्रमेण पत्तने गतः । रात्रौ कान्दविकगृहे गतः । लोहटिकः समर्पितः । स दिनद्वयक्षुधितो न तृप्तः । कान्दविकेन प्रिया उक्ता–'असौ योगी न तृप्तः, तथा परिवेषय, आकण्ठं भोजितः' । पश्चात् कम्बलैका प्रावरणाय दत्ता ।

पुन[ः] भ्रमन्नेकदोज्जयिन्यां चतुष्पथे मोचिकाऽऽपणि पादुकासन्धानाय उपविष्टः । इतः केनाप्युक्तम्–'यत् गर्जराधिपति[ः] मृतः' । तत् श्रुत्वा उन्मना [अ]भूत् । मोचिकेन ज्ञातम्–कोऽप्येष नृपसगोत्रः । ततः पृष्टवान्–'नृपः किं वो भवति ?' तेनोक्तम्–'न किमपि, परं राज्ञो [मृतेः] दुःखं कस्य न स्यात् ?' । भ्रान्त्वा पत्तने प्रविष्टः ।

§१०. इतः पत्तने भगिनीपतिः प्रतापमल्लो(ल्लो) महासाधनिकः, तेन जाकरण्येका गृहे समानीता । तया पणबन्धः कृतः–'यदन्याः सर्वाः प्रियाः पितृगृहे प्र(प्रे)ष्या[ः]' । तेन तथाकृते कुमारपालभगिनी नामलदेवी पितृगृहमदृष्ट्वा समयज्ञा तस्याश्चरणयोः पपात । तयोक्तम्–'किमिदम् ?' तयोक्तम्–'मम त्वमेव पितृगृहम्; तव दासीसमा स्थास्यामि' । तयोक्तम्–'स्थीयताम्' । इतः कुमारिको भगिनीमेत्य प्राह–'अहं बुभुक्षया म्रिये । मम दशां पश्य' । भगिन्या उक्तम्–'मम भ्राता भवान् ?' । तया वेश्योक्ता–'मम भ्रातुर्दाल्लिखण्डदेशो दीयताम्' । तथाकृते सति नित्यं नित्यं दालिं खाणउठे गृह्णाति ।

इतो नृपे मृते यो यो राज्ये स्थाप्यते, स स प्रत्यग्नैपाद्(क्रि)यते । एवं सिद्धराजस्य पादुके एव राज्यं कुर्वतः । एकदा प्रतापमल्लो रात्रौ वक्रोक्तिं कर्तुं दर्शनिष्टः । सा वेश्या पवित्रि(त्र)यति । नामलदेवी दीपकरा [अभा]ष्युसी विद्यते । तां दृष्ट्वा प्रतापमल्ल उवाच–'रे ! तव (तव) भ्राता क्वास्ति ?' तथा वेश्या दृष्टा । तयोक्तम्–'खाणउठे प्रतिदिनं दालिं गृह्णा(ह्णा)ति' । तत्र दृ(दृ)ष्टः । तेन[क्तम्]–'गन्धदार्वी देवं नन्तुं पादमवधार[य]त' । तत्राय सङ्केतः । मध्ये मर्दा मुच्यते । यः मुद्रावद्धो न भवति, तस्याक्षानि यच्छन्ति । ततः टके(?) जाते प्रतापमल्लेनोक्तम्–'कथमेव देवनमस्कारं चामरपंतिना कथं गम्यते' । तत् कृतं छिन्नम् । अथ प्रापृशा- प्रतापमल्लेनोक्तम्–'मम तयो लक्षाः प्रसादे देहि' । राज्ञोक्तम्–'केन कारणेन ?' । 'मया गर्जं

दत्तम्' । 'स्व(त्तिव)पितुवा(र्वा) मदीयस्य वा तत्' । ततः प्रतापमल्लेन प्रधानैः सह पर्यालोचितम्—'यदस्मात् जीवितसन्देहः; ततोऽसौ मार्य एव । आखेटकव्याजात् बाह्ये नीत्वा' । इत्य(त्या)लोचे क्ष(कृ)ते प्रातर्देवो विज्ञप्तः—देव ! आखेटके गम्यते । यतः—

> परिचयं च लक्ष(क्ष्य)निपातने भयरुषोश्च तद(दि)ङ्गितबोधनम् ।
> श्रमजयात् प्रगुणां च करोति सा तनुमतोऽनुमतः सचिवीर्यपो (?) ॥ ६ ॥

इतः काल्हुंभारथीअपसिरे प्रतापमल्टे(ल्ले)न नृपाज्ञां दत्त्वा, सर्वः कोऽपि वारितः । इतः कृष्णमृगं दृष्ट्वा नृपेणाश्व उत्थापितः । प्रधानैरुक्तम्—'वलमानो व्यापादनीयः' । इतः कृष्णदेवो कटकं विमुच्य पृष्ठे गतः । नृपं मारितमृगं वलमान(नं) प्राह—'एनं त्यज, विधिर्विनष्टः । गतमात्र एव मारिष्यसे' । तथा प्रतोल्यो दत्ता[ः] । अन्धकारप्रतोल्युद्घाटाऽस्ति । तस्यां प्रविश्य धवलगृहे गतः । पटी फेरिता । इतः प्रतापमलो(ल्लो) प्रातरमदृष्ट्वा तत एव तथा नष्टः, यथा पुनः शुद्धिरपि न जाता । ततः सर्वोऽपि व्यावृत्तः । ततो नृपः कुपितो दिने दिने कट-मर्दात् व्यापादयितुं लग्नः । एवं दुर्ध्यानपरस्य वर्षत्रयं जातम् । ततो राज्यसलो जातः ।

*

§ ११. इत एकदा नृपस्य शरीरेऽरतिर्जाता । कथमपि निवर्तते न । इत रात्रौ राज्ञा कपर्दी माण्डागारिक उक्तः—मम देहे किञ्चिदसमाधिरस्ति' । कपर्दी पौषधागारे समायातः । तस्यैव निश्चयः । गुरुभिरुक्तम्—'कथमुत्तरं, कृतम् ?' । देवस्यारतिरुक्ता । 'तर्हि त्वरितं याहि, नृपमुपरितनभूमेरध[ः] समानय' । ततः स त्वरितं गतः । राज्ञोक्तम्—'कः ?'; 'कपर्दी'; 'कथम् ?'; 'देव ! विज्ञप्तिरस्ति, अधः पादमवधार्यताम्' । यावदधोभूमौ नीतस्ता-वदुपरि निर्घातोऽभूत् । 'किमिदम् ?' नृपस्तव(स्तु)परि गतः पश्यति । मण्डपिकां भित्त्वा शय्योपरि तावती पतितां शिलां वीक्ष्य कण्टकितो नृपोऽवादीत्—'भो कपर्दिन् ! त्वयेदं कथं ज्ञातम् ?'; 'देव ! श्रीहेमाचार्यैरुक्तम्' । 'ते महात्मानः मम सारामित्थं कुर्वन्ति । अहं वेद्मि च न त[त्] । प्रातद(र्द्र)ष्टैव्योऽस्ये ।

§ १२. इतः प्रातः श्रीहेमसूरय आकारिताः । नृपस्तु मूलुठनेनायथौ । ततः सिंहासने निवेश्य नमश्चक्रे । तैश्चाशीर्वादो दत्तः—

> गौः कामधुक् सवृषभा मरुदेविरम्भा कल्पद्रुमोऽरुणरुचिः स युगादिदेवः ।
> चिन्तामणिर्विमलमूर्त्तिरथादिनाथः शत्रुञ्जये ददतु ते तव वाञ्छितानि ॥ ७ ॥

नृपेणोक्तम्—'प्रभो ! काऽसौ शिला ?' । उक्तं गुरुभिः—'पउंतारपुत्रबाहडो यो राज्याद् दूरीकृतः स श्रीपव(र्व)ते गतः । भैरवानन्दमाराध्य तस्मात् शिलाविकुर्विणी(र्णी) विद्यां प्राप । सा शिला ततश्चलिता । इतो भवतामरतिरभूत्' । साऽर्द्धप्रहरे प्रा[ग्रा] । नृपेनो(णो)क्तम्—'अतः परं भवद्भिर्दत्तं राज्यं पाल्यते । परं किञ्चि-दथ विज्ञपयामि । भवद्भिः स्वधर्मः सर्वथा नोपदेष्टव्यः । भवतां धर्मे श्रुते, येन सोमेश्वरेण राज्यं दत्तं स एव त्यज्यते' । 'राजन्नस्माकं धर्मोऽधिको नास्ति' । उच्यते—

> अणवट्ठियस्स धम्मं मा हु कहिज्जासु सुट्ठु कुसलो वि ।
> [illegible] ॥ ८ ॥

§ १३. एकदा नृपेणोक्तः—'भगवन् ! मे किञ्चित् कृत्यं दिशत' । ततो गुरुभिरुक्तम्—'देवपत्तने श्रीसोमे-श्वरस्य प्रासादः पतितोऽस्ति, स समुद्ध्रियताम्' । नृपेण द्विजास्तपस्विन उक्ताः—'मम नैकेनाप्युपदेशा(शो) दत्तः' । इतः प्रासादप्रारम्भे कृते श्रीहेमाचार्यैरुक्तम्—'देव ! कोऽप्यभिग्रहो गृह्यताम्' । 'कस्य ?', 'मांसस्य' । तथाकृते सत्वरं कर्मस्थाये निष्पद्यमाने प्रासादो निष्पन्नः । नृपेणोक्तम्—'भगव[न्] ! छिद्रं यच्छत' । 'यात्रां

विना देव! कथं छिद्रम्?' । 'यूयमेष्यथ?' । 'अस्माकमेतदेव प्रयोजनम्' । 'किं वाहनादि विलोक्यते?' । 'तव भूरस्माकं चरणाः' । नृपश्चलितो यात्रायै । श्रीहेमसूरयोऽपि सहैव प्रस्थिताः । धवलक्कके प्राप्ते, तत्र मार्ग(र्गे)-द्वयम्—एकः श्रीशत्रुञ्जयोपरि, द्वितीयो देवपत्तने । गुरुभिर्भूपः(?)लापितः—'देव! वयं शत्रुञ्जये देवान् नन्तुं यास्यामः' । द्विजैरुक्तम्—'चलिताः' । नृपेणोक्तम्—'देवपत्तने समेष्य(ष्य)थ' । 'भवतां पूर्वं पस्था(स्या)मः' । गुरवस्तीर्थे नत्वा पूर्व[मेव] देवपत्तने गताः । नृपेण शम्भुं नत्वा उक्तम्—'भगवन्नभिग्रहानुग्रहं यच्छत' । 'देव! कथमुच्छ(त्स)काः? यदि देवः प्रत्यक्षीभूयानुग्रहं यच्छति, तदा भव्यम्' । 'कथमेतत् भविष्यति?' । इतो द्विजैरुक्तम्—'देव! हेमाचार्याः शिवं न नमन्ति' । 'भगवन्! ईशः किं न नतिमर्हति' । 'देव! पूजां विना का नतिः?' उपस्करेष्वानीतेषु, मन्त्रपूर्वां पूजां कृत्वा, उक्तम्—

भवबीजाङ्कुरजनना रागाद्याः क्षयमुपागता यस्य ।
ब्रह्मा वा विष्णुर्वा हरो जिनो वा नमस्तस्मै ॥ ९ ॥

इति [उ]दीर्य नतिः कृता । गण्डपतिनायया(?)दिभिरुक्तम्—'एषा परमार्थतो जिनस्यैव नतिः । देव! न तेऽर्हस्य नतिः । काऽपरस्य?' । इतो रात्रौ पूजोपचारान् सज्जयित्वा, श्रीहेमाचार्याः सनृपा मध्ये प्रविश्य स्थाने स्थिताः । अर्द्धरात्रौ दीपेष्वपाकृतेषु प्रासादः कम्पितः—'भगवन्! किमेतत्?'; 'स्थिरीभवत' । इतो जटामुकुटमण्डितशिरा भस्मोद्धूतो वृषवाहनः प्रत्यक्षोऽभूत् । नृपेन(ण) नत्वा दृ(?पृ)ष्टं—'देव! आदिश, मया धर्मः कः कार्यः । कथं मम कटके मारिर्निवर्त्तिष्यते?' । सोमे० उक्तम्—

निवसइ हंसी कमलि जिम जीवदया जसु चित्ति ।
तसु पय तुम्ह आराहणिण होस्यइ अशिव निरत्ति ॥ १० ॥

भो महाराज! अमुं गुरुं लब्ध्वा सन्देहो न विधेयः' । प्रातर्नृपेण दर्शनिन आहूय रात्रिवृत्तमुक्तम् । तैर्विमृश्य प्रोक्तम्—'जिनं विनाऽन्यस्य कस्य' । ततो मांसाभिग्रहः समस्तोऽभूत् । तदनु श्रावकत्वं सम्यगङ्गीचक्रे ।

*

§ १४. वाग्भटदेवः सर्वसर्वेश्वरः प्रधानः । कपर्द्दी भाण्डागारिकः कृतः । सज्जनकुम्भकारस्य चित्रकूट(टं) पाटीसहितं दत्तम् । स तत्र राजा कृतः ।

एकादश शतानि श्रीमालीवणिजां व्यापारिणः कृताः । पञ्चाणवति ९५ वणिजो ग्रामादिदानेन महातः(न्तः) कृताः । जिणहाश्रेष्ठेर्धवलक्ककं ददौ ।

§ १५. एकदा वाघराग्रामात् शकटानि घृतस्य भृत्वा तिहुणसिंहव्यवहारकः पत्तनमाययौ । मण्डपिकैः स्थितौ पातितः, कथञ्चिन्न छुटति । तेन राजगृहद्वारि पूत्कृतम् । नृपेणाकारितः । उपलक्ष्य प्रोक्तः—'भो श्रेष्ठिन्! क्व वससि?' । तेनोक्ते स्थाने नृप[:] प्राह—'यत् शीतकाले कश्चित् योगी तव गौजार्यां त्वयार्पित-कम्बलः सुप्तः, स कम्बलमनर्घ्यं गतः; तत् स्मरसि? । तवारतिर्जाता भविष्यति?' । 'देव! कम्बलमात्रस्य काऽरतिः' । नृपेणोक्तम्—'सोऽहम् । तव ना[म्ना] योऽन्योऽपि समायाति तस्य दाणं न' । मण्डपिकान् निर्धाट्य तं च व्यवहारकं सन्म(न्मा)न्य विसृष्टवान् । ब्राह्मणानां गुल्लवेडं ग्रामद्वादशसहितं ददौ । योगिवेषधरस्य यया श्रेष्ठि-पत्न्या मार्गे टद्दनत्रयान्ते करम्बो दत्तः, तस्या नाम्ना करम्बावसही कारिता, कालिङ्किं ना(ग्रा?)म दत्तम् । मूषकद्रव्यानिकये उंदिरवसही कारिता । येन कान्दविकेन [दिन]त्रयान्ते भोजितः, कम्बलिका दत्ता, तस्य ग्रामो दत्तः । उज्जयिन्यां येन मोचिकेन चरणत्राणानि दत्तान्यासन् तस्य मेवाडे ग्रामचतुष्कं दत्तम् । तपस्विवेष-धरस्य क्षुधितस्य धरणिगश्रेष्ठिना गृहिणी उक्ता—'अस्य भोजनं देहि' । तयोक्तम्—'कथमसौ महड्डासा-पातलां दास्यति?' । तस्या[:] तां दत्त्वा भगिनीति मानिता । नृपस्तु भव्याजैनो जातः ।

*

## —अथ हेमसूरिप्रबन्धः—

अथ येषां श्रीहेमसूरीणां प्रा(प्र)सादाद्रूपेन(ण) धर्मो ज्ञातस्तेषां संबन्धः प्रोच्यते—

§१६. धंधूकापुरे मोढज्ञातीयः श्रेष्ठिचाचड। तस्य प्रिया पाहिणि[ः]। सुत २—वृद्धः कान्हः १, [लघुः] चांगदेवः २। अन्यदा श्रेष्टि(ष्ठी) विपन्नः। पाहिणिर्बालकावादाय धवलक्के किंचित् सगोत्रस मद्दे० धरणिग[सा]धौरे गता।

इतः श्रीदेवचन्द्राचार्या मन्त्रिणो वन्दापनाय समायाताः। पौषधागारे स्थिताः। मन्त्रिभार्या पाहिण्या सपुत्रया सह वन्दितुमायाता। इतः पाहिण्यङ्गजो वर्षचतुष्टयमितः सिंहासने निविष्टः। गुरवः समायाताः। तं बालं वीक्ष्य पृष्टम्—'मन्त्रिपत्नि! एष भवत्या अङ्गजः?'। 'भगवन्! अस्याः म[म स]गोत्रायाः। ज्ञात्वा वि(द्वि)प्रहरानन्तरं मन्त्रिपत्नी आहूय उक्ता—'एष शिशुरस्माकं दीयताम्, असौ प्रभावको भावी'। 'भगवन्! मम पुत्राणां मध्ये यः कोऽप्युपकुरुते तं गृह्णी(ह्णी)ध्वम्। परमस्य माता दूयते'। गुरुभिरुक्तम्—'तव पुत्रा अस्मदीया एव'। तथा मन्त्रिणोऽग्रे उक्तम्। तेन सप्रश्रयं सा पृष्टा, न मन्यते। एकदा सबालका गुरवश्छन्नं मन्त्रिणा स्तम्भतीर्थे प्रहिताः। पाहिणीं दुःखपरां मन्त्री चरणयोर्निपत्याह—'त्वं मम माता; अहं तव सुतः। अमुं पुत्र(त्रं) मे देहि'। तथा मानितः। क्रमेण दीक्षा जाता।

§१७. अधीतविद्यः सन् गुरुं आह—'भगवन्! अहं काश्मीरे सरस्वतीमाराधयितुं यास्यामि'। निर्बन्धं कृत्वा-ऽऽत्मतृतीयः एकं भारवाहकमादाय सिद्धपुरे गतः। स भारवाहको न तृप्यतिः(?)। दीक्षा दत्ता, यशश्चन्द्रेति नाम कृतम्। इतो स(रा)त्रौ देवी संमुखमायाता, आह—'वत्स! नाहं तवागच्छतः प्रत्यवायं सहे। तुष्टाऽस्मि। पत्तने व्रज'। दिनप्रहरैकसमये पत्तने गुरूणां पार्श्वे गताः। गुरवो हृष्टाः। इत एको नरः समेत्याह—'पुस्तकान्यानीतास्मि(नि) संभालयत'। उत्पाद्य कंठालामध्ये आनीता[नि]। नरः सद्रूपोऽपि [अ]दृश्यो जातः। यः सन्देहो भवति तेषु पुस्तकेषु सर्वमस्ति। इतो गुरुभिः सूरिपदे स्थापिताः।

*

§१८. एकदा श्रीसिद्धराजसभायां गताः। तत्र द्विजैरुक्तम्—'श्वे(व्र)जिताः(०तिनः) सर्वे न मन्यन्ते'। हेमाचार्यैरुक्तम्—

> अंधाम धामधामेदं वयमेव सदा हृदि।
> यस्यास्तव्यसने मासे त्यजामो भोजनं सदा ॥ ११ ॥

पुनरेकदा तैरेवोक्तं नृपसदसि—

> विश्वामित्र-पराशरप्रभृतयो ये चाम्बुपत्राशिन-
> स्तेऽपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहं गताः।
> आहारं सघृतं पयोदधियुतं भुञ्जन्ति ये मानवा-
> स्तेषामिन्द्रियनिग्रहः कथमहो दम्भः समालोक्यताम् ॥ १२ ॥

श्री हे० उक्तम्—

> सिंहो बली द्विर[द]शूकरमांसभोजी संवत्सरेण रतमेति किलैकवारम्।
> पारापतः खरशिलाकणभोजनोऽपि कामी भवत्यनुदिनं वद कोऽत्र हेतुः ॥ १३ ॥

§१९. अन्यदा द्विजैरुक्तम्—'श्वेताम्बरा! व्याकरणमस्माकमेव अधीयताम्'। इतः श्रीहेमचन्द्राभिधानं सपादलक्षमितं पञ्चाङ्गमल्पैरेव दिनैर्निर्मितम्। पुरुषाः पुस्तकं गृहीत्वा काश्मीरं प्रहिताः। देव्यग्रे पुस्तकमधिवासि-

तम् । प्रातः शलाकाक्षेपेऽर्हमिति निःसृतं दृष्ट्वा पण्डितैरुक्तम्–'एकदर्शनसम्मतमिति मत्वा देवी भारती न मन्यते'। पश्चादायाताः । एकेन मन्त्रिणा अष्टाधिकारेणोक्तम्–'मां प्रेषयत' । स पुस्तकमादाय गतः । तथैवार्हमिति नि[ः]सृतम् । मन्त्रिणोक्तम्–'सर्वदेव[म]यो नमस्कारः–

अकारेण भवेत्(द्) विष्णु(ष्णू) रेफे ब्रह्मा व्यवस्थितः ।
हकारेण हरः प्रोक्तस्तस्यान्ते परमं पदम् ॥ १४ ॥

इत्याख्याय भारतीमभ्यर्च्य पुनः पत्तनमाययौ । उत्सवेन राजकुले नीतं पुस्तकम् । ततः कविभिरुक्तम्–

भ्रातः ! संवृणु पाणिनिप्रलपितं कातन्त्रकन्था वृथा,
मा कार्षीः कटुशाकटायनवचः क्षुद्रेण चान्द्रेण किम् ।
कः कण्ठाभरणादिभिर्बठरयत्यात्मानमन्यैरपि
श्रूयन्ते यदि यावदर्थमधुरा श्रीसिद्धहेमोक्तयः ॥ १५ ॥

राज्ञा महामानं दत्तम् ।

*

§२०. एकदा सिद्धराजे धारायां गते द्विजैर्विज्ञप्तम्–'देव ! सर्वत्र माहेश्वरेषु स्थानेषु जैनाः प्रासादाः सन्ति । चतुरशीतिषु महास्थानेषु वृद्धनगरादिषु । तथा केदारे वाराणस्याम् उज्जयिन्यां नागद्रहे द्वारिकायां ...... पाटके देवपत्तनेऽर्बुदाद्रौ सिद्धपुरे मथुरायां हस्तिनापुरे भृगुपुरादौ च । सर्वत्र जिनप्रासादाः सन्ति । जैनस्थानेषु माहेश्वरा न । यदि देवाज्ञा भवति तदा शत्रुञ्जये रैवतके च देवनाम्ना प्रासादाः कार्यन्ते' । राज्ञा [दत्तः] राजादेशः श्रीपत्तनसंघस्य । प्रलोक्य द्विधा कृतम् । द्विजैरुक्तम्–'कथं नृपो मृतो दृष्टः, यदेवं राजशासनं विदार्यते ?' । तैरुक्तम्–'निवेदयत राज्ञः, शासनं विदारितम्; भवतां किम् ?' । तैर्नृपाय गत्वा निवेदितम् । नृपेणोक्तम्–'तत्र गतानां वार्ता' । धारां ति(वि)जित्य प्राप्तस्य प्रवेशे जाते सर्वः कोऽप्याशीर्वाददा[ना]य हेमाचार्यं विना प्राप्तः । 'कथमत्र हेमाचार्या न सन्ति, यत्रायाताः ?' । द्विजैरुक्तम्–'देव ! राजादेशं विदार्य केन मुखेनायान्ति ?' । इतस्तुर्ये दिने श्रीहेमाचार्यानागच्छतो वीक्ष्य नृपः प्राह–'कस्मा[द्] भ्राता चिरादभ्येति ?' । इतः श्रीहे० उक्तम्–'देव ! सामग्रीं कुर्वतां दिना लग्नाः' । नृपेणोक्तम्–

शीतलान्नं सुताजन्म दुर्वातदूषिता कृषिः ।
स्वजने मिलितस्थैर्यं स्वादुहीनं चतुष्टयम् ॥ १६ ॥

तत आचख्युः–'देव ! एषा सामग्री मेलिता, "भूमिं कामगवी"त्यादि उक्ते, द्विजैरुक्तम्–'देव ! पृच्छ्यन्ते राजशासनविदा[रणका]रणम्' । राज्ञोक्तम्–

आज्ञाभङ्गो नरेन्द्राणां वृत्तिच्छेदो द्विजन्मनाम् ।
पृथग्(क्)शय्या च नारीणामशस्त्रो वध उच्यते ॥ १७ ॥

किमिदं विरूपं कारितवान् ? प्रासादकारणे पुण्यं भवति' । 'देव ! श्रूयताम्–भवताऽहं बन्धुत्वे स्थापितः । बन्धुः स यो बन्धोर्हितं चिन्तयति । त्वत्तः पूर्वेण नृपतिना केनापि प्रासादो न कारितः' । 'कथम् ?' 'इदं सिद्धक्षेत्रम्, सिद्धस्थानेष्वसिद्धनिवेशो राज्यस्य क्षयहेतवे । अतः स्फाटितम्' । ततस्तत्र महेश्वरप्रासादाः स्थिताः ।

*

§२१. अथ श्रीहेमाचार्यास्त्रिभुवनस्वामिनीं विद्यामाराधयितुकामा भाण्डागारिकं कपर्दिनं प्राहुः–'यन्मेहताग्रामे तिहुणसिंहः कौटुम्बिकः । तस्य पुत्राश्चत्वारः । स्नुषा(?)पद्मिनी । यदि साऽऽयाति तदा तस्याचाच्य-

प्रदेशे दिनत्रयं जापे दत्ते देवी प्रसीदति । एतदति दुष्करम्' । कपर्दिनोक्तम्-'चित(न्ता) न विधेया' । भाण्डागारिकस्तत्र गतः कौटुम्बिकगृहे । तेन सत्कृतः । प्रयोजनं दृष्ट(ष्टम्) । भाण्डा० उक्तम्-'लघुपुत्रवधूं ममार्पय' । तेनोक्तम्-'किमिदमादिशसि ? ' । 'एवमेव, विचारोऽपि न कर्त्तव्यः' । तेनोक्तम्-'यदि भवतां विचारे समायातमिदम्, तदा एवमस्तु' । सुखासनेऽधिरोप्य पत्तने समायातः । श्रीहेमसूरिभिः परमाचाहारपौरैरविकृत-चित्तैस्तस्या योनौ दिनत्रयं जापः कृतः । देवी तुष्टा । भाण्डागारिकस्योक्तम्-'देवी तुष्टा, नृपतिगोघो याचितः । इयं (मां) स्वस्थाने प्रेषयत' । भाण्डागारिकेण सर्वाङ्गीणाभरणां सवस्त्रां सुखासनमधिरोप्य स्वयं सहागतः । स क्षुब्धः, पुनः किम् । भाण्डागारिकेणोक्तम्-'इयं मदीया भगिनी, मया पितृ[गृ]हं नीताऽऽसीत् । मम भगिनीपतिः क्व ?' । तं च संभूष्य गृहे गतः ।

*

§२२. अथ श्रीकुमारपालदेवः श्रीहेमचन्द्रसूरी(रि)र्ने-'भगवन् ! य(य)द्यादिशत तदा दन्तान् पातयामि, यैर्मांसभक्षणं कृतम्' । गुरुभिरुक्तम्-'देव ! दन्ता नेत्रे कर्णौ नासा-एतानि शरीरे रत्नानि । कथं तैर्विना शोभा । अतो दन्तनिक्र(ष्क)ये प्रासादान् कारयत' । एवं ३२ प्रासादा दन्तनिःक्रये कारिताः ।

एकदा गुरूणां नृपः स्तुतिमकरोत् ।

> श्रीहेमचन्द्रप्रभुपादपद्मं वन्दे भवाम्भोधितरणैकसेतुम् ।
> ललाटपट्टाक्षरकान्तराज्याक्षरावली येन मम व्यलोपि ॥ १८ ॥

राजा तु द्विवेलमावश्यकं करोत्येव । कटके द्रम्मलक्ष २६ ग्रासिकस्य अमारिराउल[स्य] अटामध्ये स्थापनाचार्यो भ्रियते । ततः कृष्णा स्वर्णपट्टे स्थापिते नृपः प्रतिक्रामति । ८४ राणकैः सह, मण्डलीक ७२ सह, [च]तुर्भिः[ः] महाधरैः सह प्रतिदिनं घं[दनां] ददाति, नवनवैः स्तोत्रैः स्तुतिभिर्वारके प्रतिक्रामति । नृपस्य देवीं भोपलां मुक्त्वा परस्त्रीपरिहारः । यदान(न्य)स्यां मनो याति तदा प्रायश्चित्ते ५१६ धर्मव्यये ।

*

§२३. अथैकदा व्याख्यानानन्तरं हरिहरपण्डितेनोक्तम्-

> पातु वो हेमगोपाल[ः] कम्बलं दण्डमुद्वहन् ।

इत्थमुक्त्वा स्थिते, नृपं कुपितं दृष्ट्वा, पुनरुक्तम्-

> षट्(ड्)दर्शनपशुग्रामं चारयन् जैनगोचरे ॥ १९ ॥

नृपस्तुष्टो लक्षं ददौ । श्रीहेमाचार्यैः पृष्टम्-'कुत आयाताः ?, क्व यास्यथ ?' पण्डितेनोक्तम्-

> कथाशेषे कर्णे धनिजनकृशा काशिनगरी,
> सहर्षं हेयन्ते हरिहरिरिति हम्मीरहरयः ।
> सरस्वत्याश्लेषप्रवणलवणोदप्रणयिनि
> प्रभासस्य क्षेत्रे मम हृदयमुत्कण्ठितमदः ॥ २० ॥

एकदा एकेन चारणेनोक्तम्-

> हेम तुहाला कर [मर]उं जांह अचब्भू सिद्धि ।
> जे चंपिअ हिट्ठामुहा तांह अचब्भू रिद्धि ॥ २१ ॥

नृपेण सहस्रपञ्चकं द्रम्माणां दत्तम् । अन्येन उक्तम्-

> लच्छि वाणि मुह काणि सा पइं भागी मुह मरउं ।
> हेमसूरि अत्थाणि जे ईसुर ते पंडिआ ॥ २२ ॥

तस्य नृपपारितोषिके १०००० । पुनरेकदा पण्डितेनोक्तम्—

**सिरिहेमचलणचंदणतिलयं उपिच्छ कुमारपालस्स ।**
**भालयले सरलयलो पइट्ठिओ मुत्तिमग्गु व ॥ २३ ॥**

तस्य षोडशसहस्रा दत्ताः । एकदा पं० **सोमार्हतः** श्रीहेमाचार्यस्थानमागत्य [प]त्रकं समर्प[य]त् । 'कुतः आयाताः ?', 'स्वर्गात्' । पत्रकं उद्घाटितम् ।

**स्वस्ति श्रीमति पत्तने नृपगुरुं श्रीहेमचन्द्रप्रभुं**
**स्व[ः]शक्रः प्रणिपत्य विज्ञपयति स्वामिन् ! त्वया सत्कृतम् ।**
**इन्दोरङ्कमृगे यमस्य महिषे स्वाहाप्रियस्य छगे**
**विष्णो[ः] मत्स्य-वराह-कच्छपकुले श्रुत्वाऽभयं तन्वताम् ॥ २४ ॥**

तस्य दाने सहस्र २० । पुनरेकेन पण्डितेनोक्तम्—

**ससर्पयोऽपि खचराः सततं चरन्तो मोक्तुं क्षमा नहि मृगीं मृगयोः सकाशात् ।**
**जीया[त्सदा] नृपगुरुः प्रभुहेमसूरिरेकेन येन भुवि जन्तुवधो न्यषेधि ॥ २५ ॥**

—तस्य सहस्र १२ ।

**पश्चात्सच्कुमारपालनृपतिर्जज्ञे स चन्द्रान्वये,**
**जैनं धर्ममदा(धा)प्य पापशमनश्रीहेमचन्द्राद् गुरोः ।**
**निर्वीराधनमुज्झता विदधता द्यूतादिनिर्नाशनं,**
**नैकेन(?) सुभटेन मोहनृपतिर्जिग्ये जगत्कण्टकः ॥ २६ ॥**

*

§ २४. एकदा नृपो घृतपुरानश्नन् त्यक्त्वा उत्थाय पौषधागारमगमत् । प्रभुं पप्रच्छ—'भगवन् ! श्रावकाणां घृतपुरा भोक्तुं युज्यन्ते ?' । गुरुराह—'वणिजां युज्यन्ते, क्षत्रियाणां न; तैस्तु तेषां [मांस]विकल्पः स्यात्' । तदा नृप आह—'मम गुरवः कलिकालसर्वज्ञाः' ।

*

§ २५. एकदा राजपुरुषैर्देवो विज्ञप्तः—'देव ! साधर्मिकवात्सल्यार्थमागच्छत्सु क्षीरेषु पूतरका दृश्यन्ते' । राज्ञा गुरवः पृष्टास्तैरुक्तम्—'करभीक्षीरे गोक्षीरे चैकत्र मिलिते पूतरकाः स्युः' । 'कथम् ?', 'यथा अकुलयाणके चीअ-यष्टौ(?) इक्षुपीडने मण्डूका दृश्यन्ते' । पृष्टा दुग्धानेतारः । तैरुक्तम्—'देव ! करभीमपाकृत्य गौ[ः] दुग्धा । ततः स्पृष्टास्पृष्टा पूतरकाः ।

§ २६. अमारेरुद्घोषणं चकार । सारिं यो मारयति स द्राम ५ दण्ड्यते । पञ्चको यस्य द्वारे दृश्यते स द्राम......दण्ड्यते ।

**कर्णाटे गूर्जरे लाटे सुराष्ट्रे कच्छ-सैन्धवे ।**
**उच्चायां चैव भंभेर्यां मारवे मालवे पुनः ॥ २७ ॥**
**कौङ्कणे च महाराष्ट्रे कीरे जालन्धरे पुनः ।**
**सपादलक्षे मेवाडे योगिन्यां काशिदेशके ॥ २८ ॥**
**जन्तूनामभयं सप्तव्यसनानां निषेधनम् ।**
**वादनं न्यायघण्टाया रुदतीधनवर्जनम् ॥ २९ ॥**

*

§२७. एकदा धाराणस्यां श्रीकुमारपालदेवश्चित्रकरैः पटे सिंहासनस्थं जैत्रचन्द्ररूपं योजितकरसंपुटमग्रे स्वरूपम्, उपरि काव्यश्लोकयुक्तमप्रैषीत्। तत्र प्रधानैर्नृपस्य पटो दर्शितः। 'किमिदम्?'। काव्यं वाचितम्–

श्रीजैत्रचन्द्रं प्रणिपत्य भूपं, विज्ञापयत्येष कुमारपालः।
एकादशानां धुरि य[श्च] मुख्यो विष्णुस्तदंशाः परिरक्षणीयाः॥ ३०॥
विष्णुः शूकररूपेण छागरूपेण षण्मुखः।
मुनयो मृगरूपेण चरन्ति जगतीतले॥ ३१॥

तदोक्तं नृपेण–'मर्म्यं ज्ञापितः'। गङ्गातटे आत्मन्येकत्र कृत्वा लक्ष ९ ज्वालयामास। तत्र जीवदया उद्घुष्य।

## कुङ्कुणविजेतृ-भट-अम्बडवृत्तम्।

§२८. अन्यदा कुङ्कुणे जालं पतन्तं श्रुत्वा महिरावण(णा)धिपतिं मल्लिकार्जुनं प्रति दूतं प्राहिणोत्–'तथा विधेय यथा जालं न पतति तव देशे'। तेन विज्ञापितम्–'यदावयोरेप पणः–कुङ्कुणाधिपतिर्गूर्जराधिपतेः स्वगिकायां पनाणि पूरयति। तत् करोमि, अन्यत् अधिकं न जाने। अत्र जना मत्स्य-मांसरताः प्रायः, अन्नदौःस्थ्यात्'। श्रीकुमारपालेन कथापितम्–'यदन्नं तथा प्रक्षि(प्रेषयि)ष्ये यथा यत्तवार्यो भवति'। तेनोक्तम्–'सर्वथा नैतत्'। इतः श्रीकुमारपालदेवः क्रुद्धः सन् प्राह–'को भीटकं मल्लिकार्जु[नस्यो]परि गृहीस्य(ग्रहीष्य)ति' इति। श्रीवाहडदेवभ्राता अम्बडेन भीटकं गृहीतम्। भीटकटकेन चलितः। तेन मार्गे घाटी रुद्धा। तत्र कटकं हतप्रहतं जातम्। अम्बडो निवृत्तः। कृष्णशृङ्गारः कृष्णाश्वः कृष्णगुडोदरः पत्तने बाह्ये स्थितः। नृपं नन्तुं न याति। नृपेनो(णो)परिस्थितेन गुडोदरं दृष्टम्। पृष्टम्–'किमेतत्?'। 'अम्ब(म्ब)डोच्चारकः'। इतः सूर्यास्ते अम्बडो द्वारिकया प्रविश्य नृपं पाश्चात्ये नत्वा पृष्ठे स्थितः। 'अग्रे एही'ति नृपोक्ते, 'देव! मया स्वस्वामिनः कालिमा नीता, अतो रात्रौ समायातः। यद्युज्ज्वलो भवामि तदा दिने समागच्छामि'। इतो नृपो भीटकमादाय उक्तवान्–'गृहीत' कोऽपि न गृह्णाति। तदा भट्टेनोक्तम्–'यदि रासभः प्रचण्डा(ण्ड)स्तदा तुरगेन कथमुपमीयते?, यद्युज्ज्वलो [य]कस्तदा हंसेन कथं उपमीयते?, यदि काको मत्तस्तदा कोकिलास्वर......स्यात्? यदि भिक्षुर्दाता स्यात् तदा वणिक्(ग्) नृपप्रसादेऽपि क्षत्रियपौरुषान्वितः स्यात्'–इत्युक्ते, अम्बडेनाऽऽगत्य भीटकं गृहीतम्। सभ्यैरुक्तम्–'अग्रेऽपि कत्र[कं] हत-विप्रहतं कृतम्, शेषमपि तथा करिष्यते'। इतो अम्बडो नृपसमीपमागत्य जगौ–'तुरगाणां पञ्चशतीमर्पय, अश्ववाराणां च'। स तान् गृहीत्वा उपरिपथेन हे[रकं] निक्षिप्य गतः। मल्लिकार्जुनं वेडायां स्थितं अश्वान् वाहयन्तं प्राह–'भो! शस्त्रं(स्त्रं) कुरु'। अम्बडस्तं भल्लाहेन मुद्गां शिरोऽपातयत्। इतश्चारणेनोक्तम्–

अंबड हूंतउ वाणिअउ, मल्लिकार्जुन हूंतउ राउ।
घाडी मायउ घाटिअउं, अउडिहि देविणु पाउ॥ ३२॥

शिरश्छित्त्वा वहिआलैः किशोरशतशतैः चोषतुरङ्गाश्च, भाण्डागारं, कोष्ठागारं, सेडुअकं दन्तिनं, नवघडी हिरण(ण्य)स्य, चतुरस्रं कलशं, मूटक ९ मौक्तिकानां, शृङ्गारकोटिक[शाटी], सहस्रकिरणताडङ्कः पापक्षयो हार', माणिकउ पछेडउ, सयोगसिद्धि शिप्रा–एवंविधं सर्वमादाय अम्बड[ः] पत्तनं गतः। नृपः संमुखमाययौ। मल्लिकार्जुनशिरसा नृपपादावपूजयत्। नृपस्तुष्टः। अम्बडस्य लाडदेशमुद्रां ददौ। हस्ती दत्तः। कलशश्च मल्लिकार्जुनजयसूचकः सगुडोदरो देयः।

§२९. इतो हस्तिनमधिरुह्य अम्बडः स्वगृहं गतवान् । [वाग्]भटदेवा(वो) नमस्कृतः ।...............
.............. देवं नमस्कुरु । तथा कृते, कथितम्—'इयन्ति दिनानि राजपुत्रस्त्वमभूः, अधुना व्यापारी जातः । श्रीहेमसूरीन् कुलगुरून् नमस्करउं (स्करोतु) । पौषधागारे गतः । गुरवो नमस्कृताः । तैस्तु धर्मलाभो न दत्तः । आशीर्वादोऽस्तु । गृहे गत्वा उक्तम्—'अहं पौषधागारे प्रहितः, धर्मलाभस्यापि संदेहः' । वाग्भटदेवेन गुरव उक्ताः । तैरुक्तम्—'भृगुकच्छे गतः कथं प्रासादमुद्धरिस्य(ष्य)ति श्रीमुनिसुव्रतस्य ?, अनेकानन्यायान् विधास्यति' । मन्त्रिणा [तस्य] अग्रे उक्तम्—'मम गुरव उद्धृते प्रासादे द्रष्टाः' । 'द्विवेलं उद्धृते भोक्ष्ये, परं मम भूर्जं विना न वक्तव्यम्' । चलित्वा भृगुपुरे गतः । प्रवेशे जाते मुंच(मञ्च)मुपविष्टः ।

§३०. इतो देवीपूज(जि)का योगिनीभिरन्विता समेता । अनभ्युत्थिता समीपे [समे]त्य विवेश । अम्बडेन सूर्पेराहता मञ्चकाद् बहिः पपात । मृतमृता । कर्मस्थायः प्रारब्धः वर्षेसणं (ण सं) पूर्णः । शिलाकोटिघटितः प्रासादो जातः । राणकोदयनस्य मनोरथश्च [सिद्धः] । अम्बडे[न] श्रीपत्तने एका विज्ञप्तिः श्रीकुमारदेवस्य, एका गुरूणाम्, एका वाग्भटदेवस्य, एका श्रीसंघस्य—एवं ४ प्रहिताः । वाग्भटेन श्रीगुरूणां पुरतो विज्ञप्ति[ः] मुक्ता । 'इदं किम् ?' । 'अम्बडस्य विज्ञप्तिः' । 'वर्षं गतस्याऽऽसीत्, अथ का विज्ञप्तिः ?' । 'विलोकयत' । प्रतिष्ठो(ष्ठो)परि आकारणं दृष्टम् । 'मन्त्रिन् ! एतत् सत्यम् ?' । 'विज्ञप्तिः कथयति' । 'तर्हि चल्यताम्' । नृपो गुरुभिः सह प्राचालीत् ।

इतोऽर्द्धमार्गे जनः संमुख्य(ख)माययौ—यदम्बडो न शक्नोति । गुरवः संघं विमुच्य भृगुपुरे गताः । प्रक्षीणधातुरम्बडो दृष्टः । देवीप्रासादे गत्वा ध्याने निविष्टाः । इतो मुख्यपूजिकोदरे उदरवाढिर्जाता । सा कोकूयते । परिचार्यः समागत्य प्रभुमु(मू)चुः—'अस्माकं स्वामिनी मुच्यन्ते(ताम्) । 'तथाऽम्बडोऽपि विमुच्यताम्' । 'स सकलो जा(ज)ग्धः, पीतश्च' । 'तर्हीपाऽपि मृ(म्रि)यताम्, जीवन्ती किं करोति ? एक एव सार्थोऽस्तु' । साऽत्यर्थं पीडिता प्रभूनेत्यावदत्—'प्र(प्रा)सादं विधाय मां मुञ्चत' । 'अम्बडं मुञ्च' । 'तरू(रुत्?)वेष्टितं कृत्वा घृतकुम्भ्यां प्रक्षिपत । यदेति वक्ति—ममाऽप(र?)तिर्मा कर्पत । ततः कुष्ठ स्नानं कार्यम् । यदा [स] जल्पिष्यते तदा त्वमपि सज्जा भविष्यसि' । दिनत्रयान्तेऽम्बडः सज्जो जातः । साऽपि च ।

इतः श्रीसंघान्वितो नृपः पादमवधारितः । गुरुभिः साकमम्बडः संमुखो(खं) ययौ । अम्बडेन दत्तकरा गुरवः प्रदक्षिणां यच्छन्ति । प्रासादं तुङ्गमालोक्य गुरुभिरुक्तम्—'मया दे[व]-गुरुं विना कोऽपि न स्तुतः; परं तव कीर्तनेन किञ्चित् वक्षा(क्ष्या)मः' । 'आदिशत'—

> किं कृतेन न यत्र त्वं [यत्र]त्वं किमसौ कलिः ।
> कलौ चेत् भवतो जन्मि(न्म) कलिरस्तु कृतेन किम् ॥ ३३ ॥

प्रतिष्ठा जाता । आरात्रिकोत्तारणाय नृपो विज्ञप्तः । 'त्वमेवोत्तारय' । वाग्भटेनाप्यनुमतः । कर्तुमुद्यतः । नृपेण शृङ्खलं स्वकण्ठादुत्तार्याम्बडगले क्षिप्तम् । तेन याचकानां पठतां गृहसारं दत्तम् । द्वारमट्टस्य तस्मिन् शृङ्खले दत्ते नृपेणोक्तम्—'उत्तारय' । तथाकृते अम्बडेन पृष्टम्—'देव ! किमुत्सुका जाताः ?' । 'मया ज्ञातम्, भवान् जीवमपि दास्यसि; मम त्वया बहुकार्यमस्ति' । संघार्चादिषु जातेषु पुनः संघः पत्तनं प्राप्तः । तत्र नैत्यनलानके तं ९ घटीसुवर्णस्य चतुरस्रं कलशं ददौ ।

*

§३१. अथैकदा नृपः सेवाऽऽयातं मल्लिकार्जुनसुतं प्राह—'पापक्षयादिरत्नपञ्चकस्य उत्पत्तिं वद' । 'देव ! मल्लिकार्जुनादेकविंशतितमः पूर्वजो धवलार्जुनः । तस्य पञ्चदश प्रिया आसन् । एका नरेन्द्रसुता खड्गेन

§ २७. एकदा वाराणस्यां श्रीकुमारपालदेवश्चित्रकरैः पटे सिंहासनस्थं जैत्रचन्द्ररूपं योजितकरसंपुटमग्रे स्वरूपम्, उपरि काव्यश्लोकयुक्तमप्रैषीत्। तत्र प्रधानैर्नृपस्य पटो दर्शितः। 'किमिदम्?'। काव्यं वाचितम्–

श्रीजैत्रचन्द्रं प्रणिपत्य भूपं, विज्ञापयत्येष कुमारपालः।
एकादशानां धुरि य[श्च] मुख्यो विष्णुस्तदंशाः परिरक्षणीयाः ॥ ३० ॥
विष्णुः शूकररूपेण छागरूपेण षण्मुखः।
मुनयो मृगरूपेण चरन्ति जगतीतले ॥ ३१ ॥

तदोक्तं नृपेण–'भव्यं ज्ञापितः'। गङ्गातटे जालान्येकत्र कृत्वा लक्ष ९ ज्वालयामास। तत्र जीवदया उद्घुष्य।

*

## कुङ्कुणविजेतृ-भट-अम्बडवृत्तम्।

§ २८. अन्यदा कुङ्कुणे जालं पतन्तं श्रुत्वा महिरावण(णा)धिपतिं मल्लिकार्जुनं प्रति दूतं प्राहिणोत्–'तथा विधेयं यथा जालं न पतति तव देशे'। तेन विज्ञापितम्–'यदावयोरेष पणः–कुङ्कुणाधिपतिर्गूर्जरात्राधिपतेः स्वगिकायां पत्राणि पूरयति। तत् करोमि, अन्यत् अधिकं न जाने। अत्र जना मत्स्य-मांसरताः प्रायः, अत्रदौःस्थ्यात्'। श्रीकुमारपालेन कथापितम्–'यदत्तं तथा प्रक्षि(प्रेषयि)ष्ये यथा यत्नवार्यो भवति'। तेनोक्तम्–'सर्वथा नैतत्'। इतः श्रीकुमारपालदेवः क्रुद्धः सन् आह–'को बीटकं मल्लिकार्जु[नस्यो]परि गृहीस(ग्रहीष्य)ति' इति। श्रीबाहडदेवभ्रात्राऽम्बडेन बीटकं गृहीतम्। शीघ्रकटकेन चलितः। तेन मार्गे घाटी रुद्धा। तत्र कटकं हतप्रहतं जातम्। अम्बडो निवृत्तः। कृष्णशृङ्गारः कृष्णाश्वः कृष्णगुप्तोदरः पत्तने बाह्ये स्थितः। नृपं नन्तुं न याति। नृपेनो(णो)परिस्थितेन गुप्तोदरं दृष्टम्। पृष्टम्–'किमेतत्?'। 'अम(म्ब)डोत्तारकः'। इतः सूर्यास्ते अम्बडो द्वारिकया प्रविश्य नृपं पार्श्वास्ते नत्वा पृष्ठे स्थितः। 'अभ्रे एही'ति नृपोक्ते, 'देव! मया स्वस्वामिनः कालिमा नीता, अतो रात्रौ समायातः। यद्युज्ज्वलो भवामि तदा दिने समागम्यामि'। इतो नृपो बीटकमादाय उक्तवान्–'गृह्णीत' कोऽपि न गृह्णाति। तदा भट्टेनोक्तम्–'यदि रासभः प्रचण्डा(ण्ड)स्तदा तुरगेन कथमुपमीयते?; यद्युज्ज्वलो [ब]कस्तदा हंसेन कथं उपमीयते?, यदि काको मधुरस्वरः कोकिलास्वर......स्यात्? यदि भिक्षुर्दाता स्यात् तदा वणिक्(ग्) नृपप्रसादेऽपि क्षत्रियपौरुषान्वितः स्यात्'–इत्युक्ते, अम्बडेनाऽऽगत्य बीटकं गृहीतम्। सम्यैरुक्तम्–'अग्रेऽपि कर्य[कं] हत-विप्रहतं कृतम्, शेषमपि तथा करिष्यते'। इतो अम्बडो नृपसमीपमागत्य जगौ–'तुरगाणां पञ्चशतीमर्पय, अश्ववाराणां च'। स तान् गृहीत्वा उपरिपथेन हे[रकं] निक्षिप्य गतः। मल्लिकार्जुनं पेडायां स्थितं अश्वान् वाहयन्तं प्राह–'भो! शस्त्रं(स्त्रं) कुरु'। अम्बडस्तं अङ्गाहेन मुद्गं शिरोऽपातयत्। इतश्चारणेनोक्तम्–

अंबडु हूंतउ वाणिअउ, मल्लिकार्जुन हूंतउ राउ।
पाडी माथउ वाढिअउं, अउदिहि देविणु पाउ ॥ ३२ ॥

शिरश्छित्वा चढ्दिआलैः किशोरसप्तशतीः शेषतुरङ्गाश्च, भाण्डागारं, कोष्ठागारं, सेडुअकं दन्तिनं, नवघडी हिरण(ण्य)स, चतुरसं कलश, मूटक ९ मौक्तिकानां, शृङ्गारकोटिका[शाटी], सहस्रकिरणताडंकः पापक्षयो हारः, माणिकउ पछेडउ, संयोगसिद्धि शिप्रा–एवंविधं सर्वमादाय अम्बड[ः] पत्तनं गतः। नृपः सम्मुखमाययौ। मल्लिकार्जुनशिरसा नृपपादावपूजयत्। नृपस्तुष्टः। अम्बडस्य लाडदेशमुद्रां ददौ। हस्ती दत्तः। कलशश्च मल्लिकार्जुनजयसूचकः स्वगुप्तोदरे देयः।

§२९. इतो हस्तिनमधिरुह्य अम्बडः स्वगृहं गतवान्। [वाग्]भटदेवा(वो) नमस्कृतः।........... .............. देवं नमस्कुरु। तथा कृते, कथितम्—'इयन्ति दिनानि राजपुत्रस्त्वमभूः, अधुना व्यापारी जातः। श्रीहेमसूरीन् कुलगुरून् नमस्करउं (स्करोतु)। पौषधागारे गतः। गुरवो नमस्कृताः। तैस्तु धर्मलाभो न दत्तः। आशीर्वादोऽस्तु। गृहे गत्वा उक्तम्—'अहं पौषधागारे प्रहितः, धर्मलाभस्यापि संदेहः'। वाग्भटदेवेन गुरव उक्ताः। तैरुक्तम्—'भृगुकच्छे गतः कथं प्रासादमुद्धरिस(ष्य)ति श्रीमुनिसुव्रतस्य?, अनेकानन्यान् विधास्यति'। मन्त्रिणा [तस्य] अग्रे उक्तम्—'मम गुरव उद्धृते प्रासादे हृष्टाः'। 'द्विवेलं उद्धृते भोक्ष्ये, परं मम भूर्जं विना न वक्तव्यम्'। चलिला भृगुपुरे गतः। प्रवेशे जाते मुंच(मञ्च)मुपविष्टः।

§३०. इतो देवीपूज(जि)का योगिनीभिरन्विता समेता। अनभ्युत्थिता समीपे [समे]त्य विवेश। अम्बडेन कूर्पराहता मञ्चकाद् बहिः पपात। मृतमृता। कर्मस्थायः प्रारब्धः वर्षेसणं (ण सं) पूर्णः। शिलाकोटिघटितः प्रासादो जातः। राणकोदयनस्य मनोरथश्च [सिद्धः]। अम्बडे[न] श्रीपत्तने एका विज्ञप्तिः श्रीकुमारदेवस्य, एका गुरूणाम्, एका वाग्भटदेवस्य, एका श्रीसंघस्य—एवं ४ प्रहिताः। वाग्भटेन श्रीगुरूणां पुरतो विज्ञप्ति[ः] मुक्ता। 'इदं किम्?' 'अम्बडस्य विज्ञप्तिः'। 'वर्षं गतस्याऽऽसीत्, अद्य का विज्ञप्तिः?'। 'विलोकयत'। प्रतिष्टो(ष्ठो)परि आकारणं दृष्टम्। 'मन्त्रिन्! एतत् सत्यम्?'। 'विज्ञप्तिः कथयति'। 'तर्हि चल्यताम्'। नृपो गुरुभिः सह प्राचालीत्।

इतोऽर्द्धमार्गे जनः संमुख्य(ख)माययौ—यदम्बडो न शक्नोति। गुरवः संघं विमुच्य भृगुपुरे गताः। प्रक्षीणधातुरम्बडो दृष्टः। देवीप्रासादे गत्वा ध्याने निविष्टः। इतो मुख्यपूजिकोदरे उदरवाहिर्जाता। सा कोकूयते। परिचार्यः समागत्य प्रभुमु(मू)चुः—'अस्माकं स्वामिनी मुच्यन्ते(ताम्)। 'तथाऽम्बडोऽपि विमुच्यताम्'। 'स सकलो जा(ज)ग्धः, पीतश्च'। 'तर्ह्येषाऽपि मृ(म्रि)यताम्, जीवन्ती किं करोति? एक एव सार्थोऽस्तु'। साऽत्यर्थं पीडिता प्रभूनेत्यावदत्—'प्र(प्रा)सादं विधाय मां मुञ्चत'। 'अम्बडं मुञ्च'। 'तरू(रुतं?)वेष्टितं कृत्वा घृतकुम्भ्यां प्रक्षिपत। यदेति वक्ति—मभाऽप(र?)तिर्मा कर्षत। ततः कृष्ट्वा स्नानं कार्यम्। यदा [स] जल्पिष्यते तदा त्वमपि सज्जा भविष्यसि'। दिनत्रयान्तेऽम्बडः सज्जो जातः। साऽपि च।

इतः श्रीसंघान्वितो नृपः पादमवधारितः। गुरुभिः साकमम्बडः संमुखो(खं) ययौ। अम्बडेन दत्तकरा गुरवः प्रदक्षिणां यच्छन्ति। प्रासादं तुङ्गमालोक्य गुरुभिरुक्तम्—'मया दे[व]-गुरुं विना कोऽपि न स्तुतः; परं तव कीर्त्तनेन किञ्चित् वक्षा(क्ष्या)मः'। 'आदिशत'—

> किं कृतेन न यत्र त्वं [यत्र]त्वं किमसौ कलिः।
> कलौ चेत् भवतो जन्मि(न्म) कलिरस्तु कृतेन किम्॥ ३३॥

प्रतिष्ठा जाता। आरात्रिकोत्तारणाय नृपो विज्ञप्तः। 'त्वमेवोत्तारय'। वाग्भटेनाप्यनुमतः। कर्तुमुद्यतः। नृपेण शृङ्खलं स्वकण्ठादुत्तार्याम्बडगले क्षिप्तम्। तेन याचकानां पठतां गृहसारं दत्तम्। द्वारभट्टस्य तस्मिन् शृङ्खले दत्ते नृपेणोक्तम्—'उत्तारय'। तथाकृते अम्बडेन पृष्टम्—'देव! किमुत्सुका जाताः?'। 'मया ज्ञातम्, भवान् जीवमपि दास्यसि; मम त्वया बहुकार्यमस्ति'। संघार्चादिषु जातेषु पुनः संघः पत्तनं प्राप्तः। तत्र चैत्यचलानके तं ९ घडीसुवर्णस्य चतुरस्रं कलशं ददौ।

*

§३१. अथैकदा नृपः सेवाऽऽयातं मल्लिकार्जुनसुतं प्राह—'पापक्षयादिरत्नपञ्चकस्य उत्पत्तिं वद'। 'देव! मल्लिकार्जुनादेकविंशतितमः पूर्वजो धवलार्जुनः। तस्य पञ्चदश प्रिया आसन्। एका नरेन्द्रसुता खड्गेन

परिणीता। [तां] आनीय पन्दी(न्दि)वत् मुक्ता। नृपस्तां नेचीव न। शेषा मान्यतमाः। सा तु दैवमेव उपालभते स्म। अन्यदा पुरे काचित् परिव्राजिकाऽऽगता। सा चेटीभि(भी) राज्ञीसकाशमानीता। तयोक्तम्-'किं वेत्सि ?'। साऽऽह-

दंसेमि तं पि सुणं(ससिणं) वसुहावइण्णं, थंभेमि तस्स वि रविस्स रहं नहद्धे।
आणेमि सयसुरसिद्धगणं गणाओ, तं नत्थि भूमिवलए मह जं न सज्झं॥ ३४॥

प्रसीद, मम पतिं वसी(शी)कुरु'। तया करे सर्पपा वारि(जपि)त्वाऽर्पिताः। यथा तथा नृपस्य [भोजन]मध्ये देयाः। शाकं कृत्वा शिप्रां भृत्वा चेट्युक्ता-'भोजनावसरोऽस्ति देवस्य नीत्वा परिवेषय'। सा शृङ्गारं कर्तुं गता। देव्या चिन्तितम्-'न ज्ञायते कदाचिदेषा वैरिणा प्रहिता स्या[त्], तदा मे पतिमारिकायाः का गतिः स्याद्' इति मत्वा अधोगवाक्षस्य समुद्रस्य शिप्रां ढाला(ल)यामास। चेटी उक्ता-'तिष्ठतु'। सा कक्करोलपात(?)। इतस्तेन वशीकृतः समुद्रो नृपरूपं कृत्वा रात्रौ आयातः। स देव्या नृपवदुपचरितः, नित्यमेति। इतो देवी सगर्भाऽभूत्। चेटीं प्राहिणोत्-'देव ! सीमन्तोन्नयनाय मुहूर्तं अस्मत्स्वामिन्या गणापयत'। नृप आह-'का त्वम् ? का तव स्वामिनी ? अहं नामापि तस्या न जाने। कस्य सुता ?, कदा परिणीता ?। तया [यदकृ]त्यं कृतम्। मम किमुच्यते ?'। साऽऽगत्य देवीं प्राह। तयोक्तम्-'समये ज्ञास्यते'। इतः पुत्रो जातः। सूतकशुद्धेरनन्तरं बालमादाय प्रतोलीमेत्योपविष्टा-'मम शुद्धिं यच्छत। जातायां बालः स्तनं ग्रहीष्यति'। नृपेणोक्तम्-'मम साराऽपि न अधुना। स्वहेन परिणीता श्रुता, परं दृष्टाऽपि न। पुत्रस्य का वार्ता ?'। प्रधानानप्रैषीत्-'एतत् मम न दूषणम्, तव, मया न खोट[ष्य]म्'। सा न मन्यते। पट्टराज्ञी प्रहिता। स्त्री स्त्रीभणितेन परिच्छिद्यते। सा प्रत्यावादीत्-'किमिदमारब्धम् ?'। तयोक्तम्-'तव कुले इदं घटते, मम तु न'। नृप[ः] स्वयमेत्य प्राह-'तव ममाधुना दर्शनं न, पुत्रस्य का कथा ?; उत्थीयताम्'। 'देव ! सर्वथा न, भा(बा)लोऽपि दिव्यं विना धास्या।' प्रधानैर्दिव्यं दत्तम्। राज्ञी सुतमादाय बहिर्ययौ, पौरसहितो नृपश्च। तत्र लोहमयी नौः, तस्यां समधिरोप्य दिव्यकर्त्ता क्षिप्यते। शुद्धे तरति, अशुद्धे बुडति। सा राज्ञी इतिकामा श्रावणिकामकार्षीत्।

आदित्य-चन्द्रावनले(न्द्रावनिलो ?) यमश्च, द्यौर्भूमिरापो हृदयं मनश्च।
अहश्च रात्रिश्च उभये(भे च) सन्ध्ये, धर्मो हि जानाति नरस्य वृत्तम्॥ ३५॥

इत्युक्त्वा नावमधिरुरोह। सपुत्रापि बुडिता। लोकः कलकलं यावत् करोति, तावन्नावमधिरूढा देवी सशृङ्गारा, [शृङ्गार] कोटिसाटीपरिदधाना, सहस्रकिरणताडंकाभ्यामलङ्कृतकपोला, पापक्षयेन हारेण विराजमानवक्षःस्थला, माणिक्यपटेनाच्छादितमाला, संयोगसिद्धिशिप्राकरा सर्वैरपि दृ(दृ)ष्टा। शुद्धाऽऽऽलापः। नृपेण मध्ये प्रवेशिता। नृपो रात्रौ तद्देश्मनि ययाय। तयोपचरितः पृष्टवान्-'अहं सर्वथा न जाने, वं(त्वं) तु सत्येव, या समुद्रेण शोधिता'। इतः समुद्रदेवेन प्रत्यक्षीभूय आदितोऽपि स्वरूपमुक्तम्-'नास्या अपराधः'। नृपेण सुतस्य बालधवल इति नाम दत्तम्। सा राज्ञी पट्टराज्ञी कृता। एतानि [रत्नानि तयैव समर्पितानीति]।

*

## कुमारपालनिवारित-मृतधनाहरणवर्णनम्।

§ ३२. अथैकदा नृपो मृगुपो मृगुकच्छं गतः। तत्र कश्चित् श्रेष्ठी अपुत्रः प्रवहणमधिरुह्य परद्वीपं गतः। इतो वार्त्ता विनष्टस्य जाता। राजा(ज)पुरुषैर्गृहं रुद्धम्। तत्पत्नी सपरिवारा विलपितुं प्रवृत्ता। नृपः कोलाहलमाकर्ण्य वण्ठं प्रे(क्ष्य)प्य वृत्तं ज्ञात्वा प्रातः स्व[य त]स्य गृहे गतः। तत्पत्नीमाहूयाऽऽह-'तव प्रियो यथेति तदा मन्यम्। नैति तदा गृहसारं भुङ्क्ष्व'-इत्युक्त्वा तां सबोध्य श्रीपत्तने गतः। पौषधागारमागत्य प्रभुं पप्रच्छ-'प्रभो ! पुत्राः कियन्तः ?'। तैरुक्तम्-'११'।

औरसः क्षेत्रजश्चैव पुत्रिकापुत्र एव च।
दत्तः क्रीतः कृत्रिमश्च तथाऽन्यौ कुण्ड-गोलकौ ॥ ३६ ॥
कानीनो नवमः पुत्रो दशमो भ्रातृजस्तथा।
एकादशो भवेत् पुत्रो धनग्राही महीपतिः ॥ ३७ ॥

यस्तस पट्टकं गृह्या(ह्णा)ति लक्षपञ्चकं यावत् तस्य ऊर्द्धं नृपस्य'। 'भगवन्! मया कियता पुत्रेण भाव्यम्? अतो मृतद्रव्यस्य नियमोऽस्तु'। तदा प्रभुणोक्तम्—

अपुत्राणां धनं गृह्णन् पुत्रो भवति पार्थिवः।
त्वं तु सन्तोषतो मुञ्चन् सत्यं राजपितामहः ॥ ३८ ॥

ततः 'मृतस्वमोक्षे'ति नाम पप्रथे।

सिरिभरहनिवाओ जं [न] केणावि मुक्कं रुअइमयधणं जो जं च पायाण मूलं।
निअजणवयसीमं वारए जो अ जूअप्पमुहवसणचक्कं सो वरो मज्झ होउ ॥ ३९ ॥

इति धर्मनरेन्द्रसुताया [अ]हिंसाया वाक्यम्। इति हिंसायाः—

श्रीमन्नन्तकतात! तात तनये हिंसे विहस्ताऽस्ति किं
किं त्वं वेत्सि सुखान् स्वकीयदुहितुर्यैवव्यदुःखं न हि।
मय्युत्तीर्णमनाः कुमारनृपतिस्तां जीवरक्षां व्यधात्
संसक्तः करुणास्त्रियां स्वविषयान्निर्वासयामास माम् ॥ ४० ॥
पूर्वं वीरजिनेश्वरे भगवति प्रख्याति धर्मं स्वयं
प्रज्ञावत्यभयेऽपि मन्त्रिणि न यां कर्तुं क्षमः श्रेणिकः।
अक्लेशेन कुमारपालनृपतिस्तां जीवरक्षां व्यधात्
यस्या सा[य] वचः सुधांशुपरमः श्रीहेमचन्द्रो गुरुः ॥ ४१ ॥
..............................................
कस्याऽसौ विदितो न गूर्जरपतिः श्रीसिद्धराजादनु ॥ ४२ ॥

—इति कविभिः स्तूयमानो राज्यं करोति स्म।

इतः केनाप्युक्तम्—'देव! स भृगुकच्छे श्रेष्ठी समायातः। नृपेणाहूय व्यतिकरं पृष्टः। स आह—'देव! वाहनाने(न्ये)कपर्वतान्तराले पतितानि। तत्र वायुप्रचारो न। व्याकुलीभूतो जनः। निर्यामिकेणा(न) उक्तम्—'योऽत्र पर्वतेऽधिरुह्य भारण्डपादे स्वं बद्ध्वा रात्रौ तिष्ठति, प्रातस्ते उड्डीय पञ्चशैले द्वीपे यान्ति। तत्र गतो भारण्डानुड्डापयति। तेषां पक्षि(क्ष)वातेन वाहनानि चलन्ति। मार्गं लभन्ते'। ततः श्रेष्ठी वणिक्पुत्रान् मुत्कलाप्य जनानामुपकाराय पञ्चशैले गतः। तत्र पक्षि[ण उ]ड्डापितानि(पिताः)। ततः श्रेष्ठी पञ्चशैलाधिपतिना(ना) उत्पन्नकरुणातिरेकेण वाहनिकानां तटस्थानां मेलितः। नृपेण श्रुत्वा सत्कृत्य प्रहितः ॥ छ ॥

*

## कुमारपालकृतायास्तीर्थयात्राया वर्णनम्।

§ ३३. अथैकदा [नृ]पेण गुरवोऽभिहिताः। ......यात्रायै मुहूर्तमवलोकितम्। महदुत्सवेन प्रस्थान(नं) कृतम्। सर्वत्र कुङ्कुमपु(प)त्र्यः प्रहिताः।

चाहनौपधि-पाथेयसहाय(यं) वृषभादिकम् ।
यत् यस्य नास्ति तत् तस्मै नृपः सर्वं प्रदास्यति ॥ ४३ ॥

इतश्चरैरागत्योक्तम्–'देव ! डाहलदेशीयः कर्णो लक्षैक(द्वि)मि[रथानां] गजानां चतुर्दशमिः शतैः, विंशतिलक्षपत्य(त्त्य)न्वितो गूर्जरात्रौ उपर्येति' । तत् श्रुत्वा नृपो व्याकुलः सन् प्रभूनाह–'भगवन् ! अन्तरायमिव बुध्यते । यात्रा क्रियते वा परचक्रसंमुखं गम्यते । इय कथं स्यात् ?' । 'देव ! स्वस्थैर्माव्यम् ।

श्रेयांसि बहुविघ्नानि भवन्ति महतामपि ।
अश्रेयसि स(प्र)वृत्तानां क्वापि यान्ति विनायकाः ॥ ४४ ॥

परमेश्वरप्रसादात् सर्वं [मव्यं] भविष्यति । विषादो न विधेयः' । इतश्चर्यानिंशतित(त्यर्विंशत्त)मे दिने निवृत्तिर्भविष्यति । .........उच्यते २५ मे दिने नृपो राजपाट्यो(ट्यै) चचाल । अश्वेनापहृतो भ्रमन् वटस्य तरोरधो गतः । वेगवशात् शृङ्खलं शाखायां उत्तल्य लग्नम् । गले पाशकः समायातः, तुरगो गतः । नृपान्वेषका [अ]श्वमादाय गताः । नृपे मृते शाखया भ्रमया नृपो भूमौ पपात । इतः श्रीकुमारपालदेवचर आखेटिकरूपेण नृपं पतितं गरुडो हारकुण्डलकान्त्या व्याप्तं दृष्ट्वा भीत इव समीपमायातः । सकुण्डलं नृपसि(स)शिरश्छित्वा आभरणान्यादाय, स्थाने स्थाने मुक्तैरश्वैः, निर्णीते दिने नृपमेत्य वर्धापयामास । नृपेण पारितोषिकं दत्तम् । नृपशिरसः संस्कारं कृत्वा महदुत्सवेन यात्रां चक्रे ।

§ ३४. तथा एकदा आनाकः सपादलक्षाधिपतिः शाकंभरपुनि(शाकंभरिपुरि)वासी श्रीकुमारपालदेवभगिनीपतिः । तया सह क्रीडन् सारैस्तासां मारिमुच्चरति । इतः श्रीप्रेमलदेव्यर पत्तने नृपाय ज्ञापितम्– यदसौ सारीणां मारिं कथयति इति च वदति–'तव धन्धोरेपाऽनिष्ट, मम तु इष्टैव । वरं मे वैधव्यमप्यस्तु, परं [इदं व]चः सोढुं नोत्सहे' । राजा कटकमादाय चलितः । कथापितम्–'यदस्य जिह्वां पाश्चाले कर्षयामि' । इतः श्रीआनाकोऽपि शुद्धहापुरे सपादलक्षसीमायां संमुखः समायातः । तत्र युद्धे जायमाने श्रीकुमारपालः स्वगजात् कलहपञ्चाननादुत्प्लुत्य आना[क]गजे गत्वा तं जयाभिः (ज्याभिः ?) कृत्वा बबन्ध । पश्चात् सहाऽऽयाताः श्रीदेवसूरयः, हेमाचार्याश्च विज्ञप्ताः–'मम प्रतिज्ञा जिह्वाकर्षणलक्षणा, अतः किं क्रियते ?' गुरुभिरुक्तम्–'देव ! एतन्न युज्यते । तथा कुरु, यथा टोपीं कारयित्वा तत्र पाश्चाले जिह्वां विधाय, कृतेत्युक्त्वा मुच्यताम्' । तथा कृत्वा 'पुनर्न वाच्यम्'–इत्युक्त्वा पुन(ना) राज्ये संस्थाप्य मुक्तः । तदा श्रीकुमारपालेन तत्र देशे पाषाणमयान् घाणकान् दृष्ट्वा सर्वानभञ्जयत् । पश्चान्निवृत्य स्वपुरं गतः । विश्वमल्लः शाकं(कं)भरीराज्यं करोति ।

§ ३५. अत्र सिद्धराशि दिवंगते गूर्जरात्राशालापतयः अजयमेरुदुर्गप्रत्यासन्ने वच्छिरापुरे गताः । श्रीविश्वमल्लेन गूर्जरा[त्रा]णां यान्ति पटकुल्यानि निषिद्धानि । शृङ्खा(हा)ति (?) स महादण्डेन दण्ड्यते ।

एकदा कोऽपि स्कन्धवाहिकः वच्छेरे गतः । एकं श्वेतपट्टकूलं क्रीतं नलीप्रयोगेण पत्तने राजसदसि नृपोपायने कृतम् । स्वरूपे ज्ञा[ते] माण्डागारिकस्यार्पितम् । यदेतत् वसनार्थं स्थाप्यम् । अस्माकं तनयस्य चाहडस्य न दर्शनीयम् । इतः प्रातर्नृपति(तौ) राजपाट्यां निःसृतः । चाहडं प्रतीक्षन्नस्ति । चाहडेन माण्डा० सकाशात् पटो याचितः । तेनोक्तम्–'नृपादेशो नास्ति' । 'मम को नृपादेशः ?, समर्पय' । गृहीत्वा प्रावृत्यागच्छन् नृपेन(ण) दृष्टः । सामन्तैरुक्तम्–'वणिक्(ग्) नृपेन(ण) नादेरोपितो (?) नृपाऽऽज्ञामपि न मन्यते' । इतो न्यग्मुखं नृपं दृष्ट्वा कुमारेणोक्तम्–'देव ! मया तत् कृतं नास्ति येन तात कृष्णवदन स्यात् । परं क्षीरोदकानामेषामप्राप्तिहेतुः धीटकप्रसादं कुरु, यथा तेषां सुभिक्षं करोमि । नृपो न यच्छति । 'मोक्ष्ये मार्गे भूप'

ततो नृपेन(ण) घोटकसहस्र २४, गज २४, लक्षपत्ल(त्य)न्वितः प्रहितः । वीसलदेवनृपस्तु संमुखमाययौ । सीमायां चाहडेन भग्नः सन्, नंष्ट्वा गतः । इतश्चाहडेन मंत्र (तत्र) पञ्चविंशति पुराणि भग्नानि । वं[वे]रे ताम्रमयं दुर्गमादाय शालापतीनां शतसप्तकं ७ गृहीतम् । इतः भट्टेनोक्तम्–

> जंगलउरु जडहारु जगिउं जज्झपुरं नराणउं,
> नयणवाहुं नग्गउरुं नयरुं नरवरुं जिट्ठाणउं ।
> सन्नपाडुं सरवाडुं भग्ग सइंभरं वग्घेरउं लाडणउं,
> गो(पो?)कर्हुं लोहुं वंड जिव्हारि वंवेरउं पींपलउरुं ॥
> पुक्करुं मंडलकरुं मेडतउं ज्झेरि ................ ।
> वीसलह नारि विलवई अचल लंकदाहु चाहड म करि ॥ ४५ ॥

एवं जयपताकामादाय निवृत्तः । पत्तने गतः । नृपः संमुखं समाययौ । तावद् दुकूलानि बहूक्तानि ॥ सन्ति । नृपेन(ण) 'राजघरट्ट'-इति बिर(रु)दं दत्तम् ॥

§ ३६. अथैकदा पाउन्तारसुतश्चाहडो राज्यं त्याजितः सन्, कुमारदेवद्विष्टः सन् श्रीवीसलदेवाय संपाद[ल]क्षाधिपतये मिलित्वा पालीपुरे सकटकः स्थितः । इतः प्रधाना[ना]मग्रे वार्ता समायाः (य्याता) । तैरुक्तम्–'नृपः क्वास्ते ?' । 'पौषधागारे' । प्रधानैरेतत् पृष्टे द्वारपालकः–'नृपस्य कोऽवसरः ?' । 'सामायिकमस्ति' । एकेनाऽऽलोकितम्, गृहीतसामाइ(यि)कं पट्टकोपविष्टमवलोक्य एकेनोक्तम्–'बूडिता गूर्जरात्रा, यस्या [अ]यमधीशः । चिणहट्टिकवत्, पश्यताम्' । नृपेन(ण) श्रुतम् । पारिते [सामायिके] स्वरूपमुक्तम् । नृपेन(ण) दूतः प्रहितः–'एषा पल्लिकाऽस्माकम्, भवता कथमाक्रान्ता ?' । संमुखं प्रेषितम्–'पल्ली दूरेऽस्तु; पत्तनमप्यस्माकम्' । इतो नृपः सज्जीकृत्य चलितः । पल्लीपरिसरे द्वयोर्मेलो जातः । इतश्चाहडेन द्विगुणान् ग्रासान् विधाय सैन्यं परावर्त्तितम् । ततः सन्नद्धे कटके कोऽप्युत्थापनिकां न करोति । इतो नृपेन(ण) कलह[पं]चाननगजाऽऽरूढेन आधोरण उक्तः–'रे ! त्वमपि परावर्तितः, यद् गजं न प्रेरयसि ?' । 'देव ! विश्वमल्लगजारूढश्चाहडो हक्कां करोति । तस्याः श्रुत्वा गजो न क्रमते' । 'गजकर्णयोः पटीं विदार्य क्षिप' । तथाकृते नृपस्त्वाह–'किं जनेन मारितेन, आवयोरेव [र]णोऽस्तु' । तयोक्ते चाहडः खड्गखेटकमादाय स्वगजस्य दन्तयोरागल यावन्नृपगजे गमनाय चरणमुत्पाटयति तावदाधोरणेन गजः पश्चात् कृतः । चाहडेऽन्तरा पतिते गजेन चरणोऽदायि । स खण्डीभूतः । श्रीकुमारपालदेवस्तु गजं गत्वा वीसलस्य शिरश्चिच्छिदे । सकलमपि सैन्यं मिलितम् । उभयोरपि सैन्ययोः । इतश्चारणेनोक्तम्–

> इक्कह पाली माटि वीसलखउ झगडगउ करइ ।
> कुमारपाल रणहाटि को जाणंतउ वुहुहरइ ॥ ४६ ॥

इतः श्रीहेमाचार्यैरुक्तम्–

> ग्रस्तामेकामपि जरयितुं पल्लिकां नैव शक्तः,
> शाकंभर्याः पतिरतितरां कृत् प्रतापज्वरार्त्तः ।
> आज्ञाकाङ्क्षाविपयविमुखश्चेदितोऽनेकधान्यै (?)–
> र्जीवत्युर्व्यां यदि परमसौ लङ्घनाभ्यासवृत्त्या ॥ ४७ ॥

तत्र गणि प्राकारकरणाय प्रासादस्य च विमुच्य स्वयं पत्तने ययौ ॥ छ ॥

§३७. एकदा वर्षाभिग्रहेषु जनैर्गृह्यमाणेषु अनादिराउलत्रिपुरुषमठपः ग्रासद्रामलक्ष २७ एल प्रभुं विज्ञपयामास ।

चतुर्मास्यामासीत्तव पदयुगं नाथ! निकषा
कषायप्रध्वंसाद् विकृतिपरिहारव्रतमिदम्।
पुनस्त्वय्यां श्रद्धानिजचरणनिर्लोठितकले
जलक्लिन्नैरन्नैर्मुनितिलक! वृत्तिर्भवतु मे ॥ ४८ ॥

§३८. एकदा आमिगपुरोहितः प्रभूणां चरणयोर्वन्दनं न यच्छति, मदात्। राज्ञा द्रम्मलक्षत्रयप्रासाद् बहिः कृत्वा पुरान्निष्काशि(सि)तः। वर्षेनयं भ्रान्त्वा पुनरायातः। काव्यमेकं पत्रिकायां [आ]लिख्य पौषधागारमायातः। नमस्कृत्य पत्रिका दर्शिता, वाचिता—

ब्रह्मण्युत्पन्नबीजा फलितकिशलया प्राच्यवल्मीकपुत्रे
व्यासे यद्बालपाला स्फुटरुचिररुचिर्व्याप्तशो कालिदासे।
प्रौढा श्रीमुञ्ज-भोजप्रमुखनृपगुणे पुष्पिता देवसूरौ
आचार्ये हेमसूरौ फलमिह जगृहे भारती[श्री]लतेव ॥ ४९ ॥

वन्दनकम्, प्रसादे……युक्तम्। पुनः स्वपदे स्थापितः ॥ छ ॥

§३९. एकदा श्रीपत्तने कार्पटियोगी समायातः। स स्वन्यदर्शनिकैरुक्तः—'श्वेताम्बरैः पुरं व्याप्तम्। नृपस्तद्वशगोऽस्ति। यदि त्वादृशः कल(ला)वान् काञ्चिदपूर्वां कलां दर्शयति तदा मार्गमभ्येति'। 'सशक्त्या यतिष्ये'। प्रातः कदलीपत्रस्य वेसिरकदण्ड्यां (?) पञ्चवर्षदेशीयाः स्कन्धवाहकाः, तत्राधिरुह्य द्विजैस्स्तूयमानो बभ्राम। इतो नृपेण श्रीहेमाचार्या उक्ताः—'प्रभो! कलावान् योगी, तस्य मिलनाय यथादेशो भवति तदा यामि'। गुरुणोक्तम्—'विशेषतः, नृपेन(ण) सर्वदर्शनसमा[ने]न भाव्यम्'। नृपश्चलितः। इतो ब्राह्मणैर्योगी वर्धापितः। नृपः समभ्येति। तस्य तृतीयज्वरपाली तदाऽऽसीत्। तेन कन्थायां तृतीये न्यस्य उत्तार्य मुक्ता। सा धडहडति। इतो ध्यानबलेनाननेश्चतुरङ्गुलं अलग्नो भूत्वा स्थितः। नृपेन(ण) दृष्टः। पृष्ठे आधारः। पश्चात् ध्याने पारिते नृपेन(ण) पृष्टम्—'भगवन्! कन्थायाः कोऽपि क्षुल्लकोऽस्ति?'। उत्पाट्य दर्शिता। मुक्ता तथैव। 'देव! तवागमनं श्रुत्वा अत्र तृतीयज्वरो विश्राणितः। यथा वार्ताः कर्तुं शक्यन्ते'। नृपः आह—'तर्हि कथं नोच्छिद्यते?'। योगिनोक्तम्—

नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि।
अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥ ५० ॥

श्रीहेमाचार्या अपि इत्यादिशन्ति। नृपे उत्थिते जनैः पौषधागारे प्रभूणामुक्तम्। गुरुभिः शिष्याना(णा)मादेशो दत्तः। यत् नृपे आगते उपवेशनात् कंबलिका अपाकर्तव्या। तथाकृते नृपः करप्रमाणं चतुर्दिक्षु निरालम्बान् दृष्ट्वा आह—'मम गुरुर्देवरूपी' इत्युक्त्वा नमस्कृत्याऽऽवासे न(ग)तः ॥ छ ॥

§४०. इतो रामचन्द्रेण जात्या चारणेन श्रीप्र०पार्श्वे व्रतमात्तम्। सर्वविद्यो जातः। एकदा गुरुभिः सह चैत्य व्रजन्, रत्नावलीं पथि पतितां दृष्ट्वा आह—

जेसिं भूतलयस्स वि कणेसु पडिएसु आसि अहिलासे।
ते ……अस्स पसाया रयणे वि अणायरा जाया ॥ ५१ ॥

शतप्रबन्धकर्त्ताऽऽसीत्।

एकदा योगशास्त्रमधीयानो रामो "रोम्णां मदृणयाकारे" स्थाने "रोम्णो" इति पठन् श्रेपतपोधनैरुक्तम्—'राम! "रोम्णां" वद इत्य', पुनस्तथैव वक्ति। गुरुभिरुक्तम्—'किमिति "जातावेकवचनम्"?, भवत्विदम्'।

§४१. अथ श्रीकुमारपालनृपतेः सुतो नृपसिंहदेवो नामा षोडशवर्षदेशीयः शरीरे म(मा)यावी जातः। वैद्याः परिकर्मणां चक्रुः, परं नालगत्। श्रीनृपो देवी च पार्श्वे उपविष्टौ स्थः। इतो गुरुभिरुक्तम्–'वत्स! किं बाधते?' 'प्रभो! एकं बाधते। यद् मत्तातो राज्यं प्राप्य कृपणो जातः। प्रासादाः पाषाणमयाः कारिता[ः]। अहं तु स्वर्णमयान् कारयिष्यामि। असौ मनोरथः सहैव नेयः'। इत्युक्ते प्रभोर्नेत्रेऽश्रुपातो जातः।–'देव! कुमारो न जीवत्येव, यस्येत्थं मनोरथाः'। अथ कुमारसमाधिना दिवं ययौ॥ छ॥

श्रीहेमाचार्याणां शिष्यः **सागरचन्द्रो** रूपवान् विद्यावान्। स राज्ञा प्रभूणां पार्श्वात् राज्यार्थे याचितः। गुरुभिरुक्तम्–'देव! इदं न युज्यते सर्वथा'। इतः **सागरचन्द्रेण** चतुर्विंशतिनमस्काराः क्रियागुप्तकाः कृताः। सन्ध्यायां प्रतिक्रमणक्षणे उक्ताः। नृपेनो(णो)क्तम्–'अहो कविता! अहो रूपम्!'

नृपः प्रतिक्रम्य धवलगृहे गच्छन् **कपर्दिनं** प्राह–'भो माण्डागारिक! **"गीतं न गायतितरां युवतिर्निशासु"** इमां समस्यां यदि प्रातर्वाक् पूरयसि तदा पट्टाश्वं दद्मि। कपर्दिना पूरिता–

**श्रुत्वा ध्वनेर्मधुरतां गगनावतीर्णे भूमौ मृगे विगतलाञ्छन एष चन्द्रः।**
**मा गान्मदीयवदनस्य तुलामितीव गीतं न गायतितरां युवतिर्निशासु** ॥ ५२॥

राज्ञा पट्टाश्वो दत्तः। एकदा श्रीगुरुभिः शिक्षा दत्ता–

**सदा सदाचारवने यतेथा, मा क्वापि सप्तव्यसनीं भजेथा।**
**दीनेषु दौस्थ्यं परिखण्डयेथा, कीर्त्या त्रिलोकीमपि मण्डयेथा** ॥ ५३॥

§४२. एकदा नृपे सभामुपविष्टे **मालवीयाः** प्रधाना नृपं नत्वा सभायामुपविशुः। इतो नृपेन(ण) खड्गं कोशादाकृष्य पुनः क्षेप्तुमारब्धम्। न विशति। इतः प्रधानैर्मिथो मुखावलोकनं कृतम्। ततः पुरोहितेनोक्तम्–

**सौराष्ट्रप्रभृतिक्षितीश्वरशिरःश्रेणीषु कृन्तास्वपि,**
**प्रत्याकारमुखप्रवेशविमुखस्तिष्ठन् कृपाणोऽधुना।**
**धाराध्वंसकृतप्रतिज्ञ भवतश्चौलुक्यचूडामणे!**
**मन्येऽहं नरवर्मचर्मघटितां कोशश्रियं वाञ्छति** ॥ ५४॥

तत्कालं सैन्यानि सज्जयित्वा नृपो **मालवकं** प्रत्यचालीत्। वर्षत्रयवि[र]हेण **धारामाददे**। **नरवर्मनृपं** चादाय **श्रीपत्त[न]मायातः**।

एकदा **नरवर्मेण** राज्ञः किमपि महत् कार्यं कृतम्। नृपस्तुष्ट उक्तवान्–'वरं वृणु'। इतः सभा श्यामवक्त्रा जाता। असौ **माल[व]कं** याचिष्यते। इतो **नरवर्मभूभुजा** उक्तम्–'देव! मम देवतावसरः प्रसादीक्रियताम्। अपरं न याचे'। तत्र वृद्धभोजनृपकरोडिः स्वर्णरत्नजटिताऽस्ति। तथा सीताया वने यान्त्या नृपदशरथेन मुद्राऽर्पिता–'बहुडी! इयं गृह्यताम्'। सा **'बहुडी'** इति ख्याता। सा च तत्रास्ति। हेममयी मण्डपिका, चिन्तामणिर्गणपतिः, इन्द्रनीलमयो नीलकण्ठः–एतानि वस्तूनि सन्ति। तत् श्रुत्वा सभा हृष्टा। नृ[प]स्तु श्यामो जातः। प्रधानैः पृष्टम्–'देव! हर्षस्थाने को विषादः? यत्र **मालवको** गणितः, तत्र देवतावसरेण किम्?' 'यूयं मूर्खाः, येन पूर्वजा उद्धृताः कष्टा[त्] तस्तेन सर्वं कृतम्'। शुभैः कृत्वा देवतावसरं मालवकं च दत्त्वा प्रस्थि(स्थापि)तः॥

॥ इति नरवर्मप्रबन्धः॥

§४३. कदाचित् कुमारपालनृपतिः सङ्घाधिपतीभूय तीर्थयात्रां चिकीर्षुर्महता महेन देवालयप्रस्थाने जाते देशान्तरायातयुगलिकया 'त्वां प्र[ति] डाहलदेशीयः कर्णनृपतिरुपैति' इति विज्ञप्तः। खेदतिलकितं ललाटं दधानो मन्त्रिवाग्भटेन सार्द्धंससाध्वसं ध्वस्तसङ्घाधिपत्यमनोरथः प्रमोत्सान्ते स्वं निनिन्द। अथ तस्मिन् नृपतेर्महाभये समुत्पन्ने किञ्चिदवधार्य—'द्वादशे यामे भवतो निर्वृतिर्भविष्यति' इति आदिश्य विसृष्टे नृपः। किंकर्त्तव्यतामूढो यावदास्ते, तावन्निधितवेलासमागतयुगलिकया—'श्रीकर्णो दिवं गतः' इति विज्ञप्तः। नृपेण ताम्बूलमुत्सृजता 'कथम्?' इति पृष्टौ तावूचतुः—'कुम्भिकुम्भस्थलस्थः श्रीकर्णो निशि प्रयाणं कुर्वन् निद्रामुद्रितलोचनः कण्ठपीठप्रणयिना सुवर्णशृङ्खलेन प्रविष्टन्यग्रोधपादेन उल्लम्बितः पञ्चतामञ्चितवान्। तस्य संस्कारानन्तरमेव आवां प्रचलितौ'—इति ताभ्यां विज्ञप्तः। तत्कालपौषधवेश्मनि समागतो नृपः प्रशंसापरः, कथं कथमप्यवार्य द्वासप्ततिमहासामन्तैः समं सङ्घेन च प्रभुणा द्विधोपदिश्यमानवर्त्मा धंधुकनगरे प्रभूणां जन्मभूमौ प्राप्तः। स्वयं कारितसप्तदशहस्तप्रमाणे श्रीझोलिकाविहारे प्रभावनाविधित्सुर्जातिपिशुनानां द्विजानामुदितमुपसर्गं वीक्ष(क्ष्य), तान् निर्विषयताडितान् कुर्वन्, श्रीशत्रुञ्जयतीर्थमारापयन्, 'दुक्खक्खओ कम्मक्खओ' इति प्रणिधानदण्डकं उच्चरन्, देवस्य पार्श्वे विविधप्रार्थनावसरे—

इक्कह फुल्लह माटि देइ जि सग्गह तणां सुह।
एवड करइ कु साटि मपुरे भोलि म जिणवरह॥ ५६॥

इति चारणमुखरन्तं निशम्य नवकृत्वः पठितेन नवसहस्रान् तस्मै नृपतिर्ददौ। तदनन्तरं उज्जयन्तसन्निधौ गते तस्मिन् अकस्मादेव पर्वतकम्पे संजायमाने श्रीहेमाचार्या नृपं प्राहुः—'इयं छत्रशिला युगपदागतयो[ः] पुण्यवतोरुपरि पतिष्यति' इति वृद्धपरम्परा। तदावां पुण्यवन्तौ, यदि गीः सत्या भवति तदा लोकापवादः। ततो नृ[प]तिरेव देवं नमस्करोतु न वय[मि]त्युक्ते नृपतिनोपरुध्य सङ्घेन सह प्रभवः प्रहिताः। स्वयं छत्रशिलामार्गं परिहृत्य जीर्णदुर्गे नवपद्याकरणाय वाग्भटदेव आदिष्टः। तत्पद्याकृते व्ययीकृतास्त्रिषष्टिलक्षाः॥

॥ इति तीर्थयात्राप्रबन्धः॥

§४४. एकदा श्रीपत्तने द्वात्रिंशद्विहाराणां प्रतिष्ठां महदुत्सवेन प्रारब्धां श्रुत्वा वटपत्र(द्र)पुरनिवासी यसाहकान्हाकः स्वयंकारितप्रासादबिम्बमादाय श्रीपत्तने प्रतिष्ठार्थमाययौ। श्री[हे]माचार्याः प्रतिष्ठार्थेऽभ्यर्थिताः। तैर्मानितम्। इतस्तस्मिन् दिने जनसम्मर्दो जातः। रात्रौ घटी मण्डिता। इतो यसाहस्य भोगाद्युपस्करो विस्मृत.। तेन त[माने]तुं गते असमये लग्नघटी वादिता। असौ समागतः। मध्ये प्रवेशं अलब्ध्वा लग्नघटीं श्रुत्वा विपि(प)ण्णः। प्रतिष्ठापश्चान्नो विरलो जातः। कान्हाकोऽप्यन्तः प्रविश्य गुरूणां चरणयोर्लगित्वा धाढं रुरोद—'मदीयं बिम्बं प्रभो! स्थितम्'। गुरुभिरूर्द्ध्वमवलोकितम्। लग्नं तदा वहमानं विलोक्योक्तम्—'भो! त्वं पुण्यवान्, लग्नमधुनाऽस्ति। परिच्छदं कुरु बिम्बप्रतिष्ठायाम्'। स न मन्यते। गुरुभिः प्रतिष्ठां विधाय उक्तम्—'यदि न मन्यसे तया(दा) देवं पृच्छ, एतत् तथ्यं न वा?'। बिम्बेनोक्तम्—'भो! तव बिम्बं वर्षशतत्रयायुः। एतानि वर्षत्रयायूंषि भविष्यन्ति'।

इतः कश्चिद् व्यवहारी स्तम्भतीर्थे वाणिज्याय गतः। तत्र तेन श्रीदेवाचार्या नमस्कृताः। पृष्टम्—'किमद्य कल्ये नृपः पुण्यकर्म तनोति?'। 'द्वात्रिंशद् विहाराणां प्रतिष्ठा जाता। तस्य उच्छ(त्स)वस्य किं कर्ण्य(वर्ण्य)ते?'। 'लग्नं वेत्सि?', 'अमुकमनुमानय्'। 'इदं लग्नं हेमाचार्यैर्निरूपितं न वा? यदि निरूपितं तदा म[ह]त् [शु]ण्णं जातम्'। स पुनः पत्तनमाययौ। हेमाचार्यैः पृष्टम्—'श्रीदेवसूरयो नमस्कृताः?'। स्वरूप-

